प्रकाशक— पण्डित-श्रीआशुबोध-विद्याभूषण
तथा
पण्डित-श्रीनित्यबोध-विद्यारत्न।

प्राप्तिस्थान— २ नं०, रमानाथ मजुमदार ष्ट्रीट्
आम्हार्ष्टष्ट्रीट् पोष्ट-अफिस, कलिकाता।

प्रिण्टर—वि, वि, मुखर्जी।
२ नं०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता।

# तर्कवाचस्पतेर्विज्ञापनम्।

इह खलु सकलेषु सुखसाधनेषु काव्यमेव परमसुखसाधनं, तद्धि मुहुर्मुहुरनुशीलितमपि मनागपि विरागभाजनतां नैव भजते, बहुसेवनेऽपि न याति चापचीयतां, प्रत्युत आस्वाद्यमानं नवां नवां कामपि चमत्कारलहरीं चेतसि सचेतसां प्रतिक्षणमातनोति समुल्लासयति च सहृदयहृदयपद्मं, न चापेक्ष्यते तदास्वादनसम्पादने बहुलायासः।

काव्यञ्च विलक्षणरचनोपलक्षितो विविधगुणभूषितो नानालङ्कारमण्डितो रसभावादिप्रधानो वाक्यविशेषः।

तत्प्रणेतारश्च वाल्मीकि-कालिदासादयः प्रथिताः। तत्र वाल्मीक्यादयः इतिवृत्तप्रधानं प्रसङ्गतो रसानुगुणं रामायणादिकं, कालिदासादयश्च विविधरसानुगुणं प्रसङ्गत इतिवृत्तोल्लेखं रघुवंशादिकं काव्यं रचयामासुः।

तच्च काव्यं श्रव्यदृश्यभेदात् द्विविधम्। तत्र रामायणरघुवंशादिकं श्रव्यं, नागानन्दाभिज्ञानशकुन्तलादिकं नाटकापरपर्य्यायं रूपकपदाभिधेयं दृश्यं काव्यम्। तत्रापि दृश्यकाव्यमेव सहृदयानामतीव समादरास्पदं सर्वानुभवसिद्धम्। तत्र हि नटाभिनेयपदार्थान् वीक्षणेन वीक्ष्य तत्प्रयुक्तवाक्यानि च श्रवणेन श्रुत्वा एकदैव नयनश्रवणप्रीतिमुपलभ्य कामपि आनन्दसन्ततिं चेतसि सहृदयधुरीणा उररीकुर्वन्ति मज्जन्ति चामूलं रसार्णवलहरीषु।

नाटकप्रणयनप्रकारज्ञापनाय च शिलालिना मुनिना पूर्वं नटसूत्राख्यः प्रबन्धो निरमायि इत्येतत् "पाराशर्य्य-शिलालिभ्यां भिक्षुनटसूत्रयोः" इति, ४, ३, ११० पाणिनिसूत्रेणावगम्यते। भरतमुनिनाऽपि तत्प्रतिपादकं सूत्रं प्रणिन्ये, तेनैव च अभिनयप्रकारादिकं शिक्षयता अप्सरोभिः सरस्वत्या कृतं लक्ष्मीस्वयंवराख्यं नाटकमभिनायितमिति विक्रमोर्वश्यामवगम्यते। तयोश्च ग्रन्थयोः पठनपाठनासमादरलोपेन प्रायेण लुप्तप्रायता जाता। ततो भोजदेवपितृव्यमुञ्जदेवसभास्थेन धनिकनाम्ना पण्डितेन दशरूपकनामको निबन्धो निर्ममे, तत्र च नाटकलक्षणादीनि सम्यक्तया प्रतिपादितानि, उदाहरणानि च तेन यथालाभ दर्शितानि। तत एवं सङ्क्षिप्य साहित्यदर्पणकृता षष्ठपरिच्छेदे सोदाहरणानि सम्यक्तया लक्षणानि उक्तानि।

एवम् आगत्यागत्य तस्याः सकाशात् विचारे पराजयमवाप्य प्रतिनिवृत्तेषु वरेषु तदुत्तरं पराजयभयेनेतरे वरा यदा नैवागन्तुमैच्छन्, तदा तत्-पित्रा विचाराभावेनैव आगतमागताय पात्राय कन्या देयेति प्रतिज्ञाते पूर्वपूर्ववरानयने निष्फलप्रयत्नतया बहुधा खिन्ना जातेर्ष्या दूताः पुन-र्वरानयनार्थं तत्पित्रा नोदिताः स्वावलम्बितशाखाच्छेदितया कालि-दासमल्पबुद्धिमवेत्य तत्कन्यायां वरत्वेन आनिन्युः। आनीताय च तस्मै अविचार्य तद्दोषगुणौ तत्पित्रा तां कन्यां प्रायच्छत्। एवं तस्य विवाहे संवृत्ते दम्पत्योः परस्परालापकाले कालिदासेनापभ्रंशशब्दमाला-भिन्नेनापभ्रंशशब्दः प्रायोजि। तत् श्रुत्वा च तद्भार्या तमत्यन्तं तिर-स्कृत्य गृहात् निष्काशयामास। एवं पत्न्या निष्काशितः कालिदासो-ऽतीव निर्वेदमापन्नोऽरण्यं गत्वा सरस्वतीमाराध्य तत्प्रसादात् प्राप्त-विद्यः गृहं प्रति निववृते। आगत्य च रात्रौ गृहद्वारं रुद्धं विलोक्य तेन स्वपत्नीं प्रति "अनावृतकपाटं द्वारं देहि" इति अभिहितम्। तत् श्रुत्वा च स्वरविशेषेण तं पतिमवगत्य कालिदासपत्न्याऽनुयुक्तम् "अस्ति कश्चित् वाग्विशेषः" इति। इत्येवं पत्न्या कृते वाग्विशेषास्तित्वप्रश्ने तद्वाक्यं पदत्रयघटितमिति कृत्वा तत्रस्थैकैकं पदमधिकृत्य तेन एकैकं काव्यं विरचितम्। तत्र तद्वाक्यस्थम् "अस्ति" इति प्रथमं पदमधिकृत्य "अस्त्युत्तरस्याम्" इत्यादि सप्तदशसर्गात्मकं कुमारसम्भवाख्यं महा-काव्यं, "कश्चित्" इति द्वितीयं पदमधिकृत्य "कश्चित् कान्ताविरहगुरुणा" इत्यादिकं मेघदूताख्यं खण्ड काव्यं, "वाग्विशेषः" इति तृतीयं पद, तदेक-देशं वागिति वाक्पदमधिकृत्य "वागर्थाविव सम्पृक्तौ" इत्यादिकमून-विंशतिसर्गात्मकं रघुवंशाख्यं महाकाव्यञ्च क्रमशो रचितम्। तद्रच-नया च कालिदास सर्वत्र प्रथितसुकवितया प्रख्यातिमुपलभ्य क्रमेण विक्रमादित्यनृपसभासभ्यतताम् आजगामेति।

उक्तेषु कालिदासकृतेषु नाटकेषु मध्ये इदमेकं नाटकम्, अभिज्ञानशकुन्तलापेक्षया यद्यप्येतत् हीनं, तथाऽप्यन्यापेक्षयाऽस्य उत्कृष्टत्वमेव।

अत्र च नाटके पञ्च अङ्काः, शृङ्गारो रसः अङ्गी, विदिशाधिपतिः अग्निमित्रनृपतिर्नायकः, मालवदेशाधिपस्य माधवसेनस्य स्वसा मालविका

नायिका, धारिणीनामिका राजमहिषी इरावती चापरा राजभार्य्या तस्याः प्रतिनायिका ।

## ग्रन्थस्य इतिवृत्तसारः ।

अत्र सङ्क्षेपत इतिवृत्तं तावदभिधीयते । माधवसेनाख्यो मालवाधिपतिः स्व-स्वसुर्वरत्वेन अग्निमित्रं स्थिरीकृत्य तद्विवाहं निष्पादयितुमागच्छन् तस्यैव पितृव्यपुत्रेण यज्ञसेनेन पथि अवरुध्य निगृह्य च कारागारे रुद्धः । अथ तादृशोपप्लवमुपलभ्य तस्य सचिवेन सुमतिना गूढं तद्भगिनीं मालविकामपवाह्य स्वभगिन्या कौशिक्या सह विदिशाभिगामिसार्थ-वाहसार्थमवलम्ब्य अग्निमित्राय तां प्रतिपादयितुं प्रतस्थे ।

अथारण्ये तैः सह विश्रामार्थमुपविष्टः दस्युभिराक्रम्य सार्थवाहसैन्यानि पराजित्य तां परीप्सुः युध्यमानो सुमतिर्व्यापादितः । तन्मरणे च प्राप्तमूर्च्छां कौशिकीं मृततया निश्चित्य मालविकामर्थसङ्घातांश्च दस्यवोऽपहृत्य अग्निमित्रदुर्गपालाय तस्यैव श्यालकाय वीरसेनाय उपढौकनत्वेन तां प्रायच्छन् । वीरसेनोऽपि तां दासिकां शिल्पादिकासु निपुणामवेत्य स्वभगिन्यै धारिण्यै अग्निमित्रमहिष्यै उपायनत्वेन प्रेषयत् । धारिणी च तां शिल्पादिकलासु निपुणामवगम्य गणदासस्य नाट्याचार्य्यस्य समीपे छलिकनामनाटकाभिनयशिक्षायै न्ययोजयत् । अत्रान्तरे कौशिकी दस्यूनामपसरणानन्तरं प्रबुध्य विपन्नेन भ्रात्रा, अपहृतया मालविकया च वियुज्य इतिकर्त्तव्यताविमूढतामापेदे । अथ तथाभूतमुपप्लवमनुभूय संसारात् परं निर्वेदमापद्य च क्रमेण नियतिनियोगात् विदिशा-नगरीमागत्य कौशिकी प्रव्रज्यां जग्राह । कृतप्रव्रज्यया च तया भवितव्यतावशात् धारिण्या सह मैत्रीमासाद्य तस्याः पीठमर्दितामालेभे । तत्र च चिरपरिचितामपि मालविकां तथाभूतां वीक्ष्याभिज्ञायापि कारणान्तर-वशात् राज्ञीसमीपे माधवसेनभगिनीयमिति न प्रकाशयामास ।

एकदा च चित्रपटे राज्ञीपरिचारिकामध्ये लिखितप्रतिमूर्त्तिं मालविकां विलोक्य नरपतिः तत्सौन्दर्य्यदर्शनेन अतीव विमोहितः कस्या इयं प्रतिमूर्त्तिरिति धारिणीमन्वयुङ्क्त । धारिणी च तां निगूहितुं राज्ञः प्रश्नमनाकर्णयन्तीव कथान्तरं समुत्थापितवती । अतिसौन्दर्य्यवतीयं

कदाचित् यदि राज्ञा दृश्येत तदाऽनुरज्येतामिति अभिज्ञा राज्ञी तथा निगूह्यमानां तां राजा निर्बन्धातिशयेन देवीं पुनः पुनः केयमित्यपृच्छत्। बालस्वभावा च तत्कुमारी वसुलक्ष्मीः राज्ञ्या निगूह्यमानामपि तां दारिकां मालविकेत्यभिदधे।

राजा तु तत्प्रतिमूर्तिदर्शनेन मुग्धहृदयतया तां साक्षात् द्रष्टुमिच्छन् वयस्येन गौतमेन विदूषकेण समं रहसि सममन्त्रयत्। विदूषकस्तु तदुपायत्वेन नाटकाभिनयदर्शनच्छलेन तां दर्शयितुं हरदत्त-गणदासयोः नैपुण्यविषये अन्योऽन्यस्पर्द्धामुत्पाद्य कलहं कारयित्वा राजसमीपं तौ निर्णयार्थमागमयामास। राज्ञा च गणदासस्य देवीपरिग्रहतया, हरदत्तस्य चात्मपक्षतया देवीसमीपे एव तन्निर्णयस्य युक्ततायाः प्रतिपादने राजादेशेन कौशिक्या सह देव्या तत्रागतम्। अथ राज्ञा तयोर्विशेषनिर्णयाय नियुक्तया कौशिक्या स्वशिष्यप्रयोगदर्शनादेव तयोः नैपुण्यविशेषनिर्णयो भविष्यतीत्यभिहिते "सर्वाङ्गसौष्ठवप्रतिपत्तये विगतनेपथ्ययोः पात्रयोः प्रवेशोऽस्तु" इत्यभिहिते च गणदासेन स्वशिष्यां मालविकां वेशान्तरमग्राहयित्वैव रङ्गभूमौ प्रवेश्य तन्मुखेन चतुष्पदोपेत शर्मिष्ठया कृतं छलिकनाटकस्थमेकं पद्यं राजानं श्रावयामास। तस्य पद्यस्य च दम्पत्योः पूर्वरागाभिव्यञ्जकतया मालविका तत्पाठव्याजेन चेष्टाविशेषेण च आत्मनोऽनुरागं राज्ञे न्यवेदयत्। राज्ञा तु अतीव सौन्दर्यशालिनीं तामालोक्य तदैव तां चकमे, इत्येवमन्योऽन्यस्मिन् अन्योऽन्यरागे आविर्भूते तदनन्तरं तयोः क्रमेण स्मरदशा आविर्बभूव।

अथ नृपतिस्तां लब्धुं विदूषकेण सह रहसि मन्त्रयामास। विदूषकश्च तत्प्रार्थनां मालविकासखीं वकुलावलिकां श्रावयित्वा यथा राज्ञा सह मालविकाया मेलनं भवेत्तदुपायं चिन्तयामास। अत्रान्तरे प्रमदवनस्थितं तपनीयाशोकं चिरेणाकुसुमायमानमुपलभ्य तदुद्यानपालिका वराङ्गनायाः सनूपुरपादताडनरूपदोहदार्थं धारिण्यै न्यवेदयत्। धारिणी च तदा स्वयं पादयोरुग्णतया मालविकामेवान्तःपुरमध्ये वराङ्गनां मत्वा तपनीयाशोकदोहदनिष्पादनाय न्ययोजयत्, अङ्गीचकार च—"पञ्चरात्राभ्यन्तरे अशोकपुष्पोद्गमे तवाभीष्टं दास्यामि" इति। एवं राज्ञ्या नियुक्ता मालविका स्वसख्या वकुलावलिकया

सह प्रमदवनं गत्वा तपनीयाशोकस्य सनूपुरपादताडनरूपं दोहदं विदधे। अत्रैव समये वकुलावलिका निर्जने राज्ञः प्रार्थनां तस्यै न्यवेदयत्। भवितव्यतावशाच्च राजाऽपि तस्मिन् समय एव तत्राससाद। अथ राज्ञाऽपि स्वप्रार्थनं स्वमुखेनैव तदानीं मालविकायै श्रावितम्। अत्रान्तरे अन्या इरावतीनाम्नी राजभार्य्या तत्राजगाम आकर्णयामास च राज्ञस्तस्यामनुरागसूचकं तद्वाक्यम्। तत् श्रुत्वा च सा राज्ञे भृशं चुकोप। अथ राज्ञा प्रसाद्यमानाऽपि सा तं विहाय ततः प्रतस्थे। ततः सा देवीं धारिणीमुपगम्य सर्वं वृत्तान्तमावेदयत्। देव्या च वकुलावलिकया सह मालविकां निगडेन बद्ध्वा तदधिकृतमाधविकां प्रत्युपदिष्टं—"मदादेशसूचकाभिज्ञानदर्शनमन्तरेण नैते मोचनीये" इति।

एतद्वृत्तान्तमवगत्य राजाऽतीव खेदमापेदे। अथ विदूषकः तदुद्धाराय आत्मनो हस्ते केतककण्टकेन व्रणं कृत्वा सर्पदंशत्वेनापदिश्य च राजराज्ञोः समीपे विषवेगं प्रकाशयामास। राजा च ध्रुवसिद्धिं तद्विषापनोदनाय न्ययोजयत्। तदपहाराय नियोजितो ध्रुवसिद्धिर्नागविषापहारकमणिमन्विवेष। देव्या च स्वाङ्गुरीयस्थ-सर्पविषापहारकमणिः तस्मै प्रेरित.। तमधिगत्य कृत्रिमविषवेगं परिमुच्य च विदूषकः मालविकामोचनार्थं माधविकामुपगम्य अवोचत्—"राज्ञो जन्मनक्षत्रं दुष्टग्रहाभिभूतमित्यतस्तदुपशमनाय सर्वबन्धमोक्षो विधेयः" इति ज्योतिर्विद्भिरुपदिष्टे इरावतीचित्तं रक्षन्त्या देव्या अभिज्ञानरूपमिदमङ्गुरीयकं दत्त्वाऽहं न्ययोजि। इत्थं कूटमभिलप्य बन्धात्ते मोचयामास। ततो निभृतं प्रमदवनं नीत्वा राज्ञा समं मालविकां मेलयामास। पुनरपि तन्मेलनसमये इरावती तत्र समुपागत्य तथाभूतं तयोर्दिवासङ्केतस्थाने सङ्गं विलोक्य राजानं प्रति पुनरभिचुक्रोध। अस्मिन्नेवान्तरे तपनीयाशोकस्य पुष्पोद्गमो जातः। तद्वृत्तान्तमुद्यानपालिका मधुकरिका देव्यै न्यवेदयत्। राज्ञ्या तु पूर्वप्रतिज्ञातवस्तुप्रतिपादनाय कौशिक्या मालविकां भूषयित्वा तामादाय राज्ञे प्रतिपादयितुं प्रमदवनमाजग्मे। तदानीञ्च अग्निमित्रजनकेन मगधाधिपस्य भूतपूर्वसेनापतिना पुष्यमित्रेण अश्वमेधेन यियक्षुणा मुक्ताश्वरक्षायै नियुक्तं राजपुत्रं वसुमित्रं सर्वत्र विजयिनमुपश्रुत्य सर्वेषां हर्षप्रकर्षो जातः।

तदानीमेव माधवसेनमोचनाय प्राग्नियोजितवीरसेनप्रभृतिभिः यज्ञसेनं जित्वा माधवसेनमोचनवृत्तान्तावेदनाय माधवसेनान्तःपुरस्थदारिकाद्वयेन सह दूतः तत्र समागतः। ताभ्याञ्च दारिकाभ्यां मालविकां कौशिकीञ्च दृष्ट्वा प्रत्यभिज्ञाय च राजसमीपे तत्परिचयो दत्तः। कौशिक्या च आमूलं सर्ववृत्तान्तमुक्त्वा एतावत्कालपर्य्यन्तमात्मना निगूहनकारणमपि अभिदधे। अथ देव्येव प्राक्प्रतिज्ञानुसारेण कौशिकीमनुज्ञाप्य राज्ञे तां प्रायच्छत्। राजा तु प्राक् गान्धर्व्वविधिना प्रतिगृहीतामपि तां राज्ञीसम्मानार्थं तदैव प्रतिजग्राह इति प्रकाशयामास इत्येवं मालविकाया माधवसेनेन पूर्वं प्रतिश्रुताया अपि राज्ञा सह मेलनम्।

एतच्च रत्नावल्यां वर्णितं सागरिकया सह वत्सराजसमागमवृत्तान्तमनुहरति, तस्य नाटकस्य धनप्रत्याशया कविना श्रीहर्षकृततया ख्यापितत्वेऽपि धावककृतत्वं धावकस्य च एतस्मात् कवेः पूर्वकालिकत्वं ग्रन्थकृतैव स्वयं प्रस्तावनाप्रसङ्गेऽभिहितम्, इत्यतस्तद्वृत्तान्तमनुसृत्य एतत् ग्रन्थकारेण निरमायीति प्रतिभाति।

एतत् पुस्तकञ्च भारतवर्षे कदाऽपि मुद्रितं नासीत्। प्रथममेव मयाऽस्य प्रचारणे यत्नोऽकारि। अस्य च परिशोधनविषये पाठशालास्थ-विभिन्नदेशीयं नागराक्षर-वङ्गाक्षरलिखितं पुस्तकद्वयं "जर्मण्" देश-स्थेन मुद्रितपुस्तकञ्च मूलम्। तेषु पुस्तकेष्वेव तावत्पाठावलोकनेन बहुसंवादिपाठादिग्रहणेनैव मुद्रितम्। यत्र च उभयविधपाठे बहु-पुस्तकपाठसंवादो तत्रोभयविधोऽपि पाठः मुद्रितः, चिह्नविशेषेण च तत्र तत्र एकस्य ग्राह्यता अपरस्य क्वाचित्कता सूचिता। अत्र विषमपदं व्याख्यातं, व्याख्यातञ्च प्राकृतभाषावाक्यं संस्कृतभाषावाक्येन।

इतः पूर्वं वेणीसंहारनाटकविवरणे नाटकमुख-प्रतिमुख-बीज-सन्धि-रूपाद्यङ्गसमुद्भावनं मया कृतं, तत्र च इदानीन्तनानामादरातिशया-भावदर्शने एतन्नाटकविवरणसमये विस्तरेण तदुद्भावनं विनैव विषम-पदव्याख्यानमात्रे प्रायासि।

यावता परिश्रमेणास्य परिशुद्धिर्भवेत् तावान् परिश्रमोऽस्य शोधने मयाऽकारि, तथाऽपि यदत्र क्वचित् क्वचित् मम परिस्खलनं, तस्य विशुद्धिर्विद्वद्भिर्विधेयेति संवत् १९२७।

# अनुक्रमेण प्रविष्टानां नाटकीयपात्राणां नामानि ।



## पुरुषाः ।

| | | | |
|---|---|---|---|
| सूत्रधारः | ... | . | नाटकोद्बोधकः । |
| पारिपार्श्विकः | ... | ... | सूत्रधारस्य सहचरः । |
| गणदासः | .. | ... | नाट्याचार्य्यः । |
| अग्निमित्रः (नायकः) | ... | ... | विदिशाऽधिपतिः । |
| वाहतकः | ... | ... | अग्निमित्रस्य मन्त्री । |
| गौतमः | ... | . | विदूषकः । |
| मौद्गल्यः | ... | .. | काञ्चुकी ( अन्तःपुराध्यक्षः ) । |
| हरदत्तः | ... | ... | द्वितीयः नाट्याचार्य्यः । |
| सारसः | ... | ... | कुब्जः (अन्तःपुरस्थपरिचारकविशेषः) । |
| वैतालिकद्वयम् | ... | ... | स्तुतिपाठकौ । |
| परिवाराः | ... | ... | राज्ञः पार्श्वचराः । |



## स्त्रियः।

| | | |
|---|---|---|
| बकुलावलिका | ··· | राज्ञ्या धारिण्या चेटी, मालविकायाश्च सखी। |
| कौमुदिका | ·· | „ „ (अपरा) चेटी। |
| पण्डितकौशिकी | ··· | काचित् परिव्राजिका (विदर्भाधिपामात्यसुमतेर्भगिनी)। |
| धारिणी | · | अग्निमित्रस्य प्रधाना महिषी। |
| मालविका (नायिका) | ·· | "वडनागपुर" तथा "वेरार प्रपार" "खास् वेरार" इति च नाम्ना ख्यातविदर्भदेशस्याधिपतेर्माधवसेनस्य भगिनी। |
| समाहितिका | · | पण्डितकौशिक्या परिचारिका। |
| मधुकरिका | · | उद्यानपालिका। |
| इरावती | ··· | अग्निमित्रस्य द्वितीया राज्ञी। |
| निपुणिका | ··· | इरावत्या चेटी। |
| जयसेना | ·· | प्रतीहारी। |
| रमणीया, ज्योत्स्निका | ·· | विदर्भाधिपतेः माधवसेनस्य शिल्पि-परिचारिकाद्वयम्। |
| परिवाराः | ··· | राज्ञ्याः पार्श्वचारिण्यः। |

# मालविकाऽग्निमित्रम् ।

## प्रथमोऽङ्कः ।

एकैश्वर्य्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः
कान्तासम्मिश्रदेहोऽप्यविषयमनसां यः परस्तात् यतीनाम् ।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥ १ ॥

---

प्रणम्य परमात्मानं श्रीजीवानन्दशर्म्मणा ।
विव्रियते मालविकाऽग्निमित्रं नाम नाटकम् ॥

अथ प्रथितनामा तत्रभवान् कविकुलशिरोमणिः कालिदासः चिकीर्षितमालविकाऽग्निमित्राख्यनाटकसन्दर्भारम्भे तस्य निर्विघ्नपरिसमाप्तिकामनया तत्प्रत्यूहव्यूहव्यपोहहेतुं कविसमयपरम्पराप्राप्तं मङ्गलाचरणं चिकीर्षुः सभ्यानामाशीर्व्यपदेशेन सर्वमङ्गलमयं महेश्वरं विश्वेश्वरं स्मरति, एकैश्वर्य्ये इति ।—प्रणतानां भक्त्या भूलुण्ठितशिरसां भक्तानां, बहूनि अनेकानि, फलानि स्वर्गापवर्गादीनि यतः तादृशे, एकैश्वर्य्ये परमेश्वरत्वे, स्थितोऽपि तद्विशिष्टोऽपीत्यर्थः, क्वचित् "प्रणतबहुफलः"इति पाठः,तथात्वे ईश इत्यस्य विशेषणं, स च उक्तार्थक एव, यः स्वयं स्वरूपतः, कृत्तिवासाः द्वीपिचर्माम्बरः, तेनाकिञ्चन इत्यर्थः, यः कान्तया प्रियया गौर्य्या, सम्मिश्रः संयुक्तः,देहो यस्य तादृशः अङ्गीकृतार्द्धनारीदेहः, कान्ताऽऽलिङ्गितदेहश्च सन्नपि, अविषयमनसां न विषयेषु शब्दादिषु इन्द्रियार्थेषु, मनो येषां तादृशानां विषयानासक्तचित्तानां, यतीनां जितेन्द्रियाणां योगिनां सन्न्यासिनां वा, परस्तात् श्रेष्ठः,(प्रथमान्त पर-शब्दात् अस्तातिः) अष्टाभिः

पृथिवी-जल तेजो-वायु-गगन यजमान-सूर्य्य-चन्द्ररूपाभि ,तनुभिर्मूर्त्तिभि,: कृत्स्नं सद्, जगत् बिभ्रतोऽपि धारयतोऽपि, पोषयतोऽपि च, यस्य अभिमान' अहङ्कार:, न, अस्तीति शेष, स ईदृक्स्वरूप', ईश: शिव:, वो युष्माकम्, एतस्य अध्येतृणां श्रोतृणाम् अभिनयद्रष्टृणाञ्चेति यावत्,सन्मार्गालोकनाय सन्मार्गस्य मोक्षाद्युपायस्य सत्पथस्य च, आलोकनाय ज्ञानाय दर्शनाय च, तामसीं तमोगुणजनिताम् अज्ञानात्मिकाम अन्धकारप्रचुराञ्च, वृत्तिं चित्तपरिणामभेद व्यवहारञ्च, व्यपनयतु दूरीकरोतु। अस्य च श्लोकस्य नान्दीत्वात् मङ्गलार्थम् आदौ म-गणस्य सन्निवेश: कृत: कविना, यदुक्तं भासहेन—"चैमं सर्वगुरुर्धत्ते म-गणो भूमिदेवत." इति। किञ्च, प्रथम-द्वितीययो. चरणयो. "य." इति पदप्रयोगोऽपि शुभसूचक:, "यस्तु श्रीद." इत्युक्तेः। अन्यच, ईश-कृत्तिवासा इति देवतावाचकस्य मङ्गलवाचकस्य च य-शब्दस्य प्रयोगात् लिप्यादिशुद्धिरपि अस्य अवगम्यते, तथा च—"देवतावाचका. शब्दा: ये च भद्रादिवाचका.। ते सर्वे नैव निन्द्या: स्युर्लिपितो गणतोऽपि वा॥" इति। नान्दीत्वञ्चास्य—"आशीर्वचनसयुक्ता स्तुतिर्यस्मात् प्रयुज्यते। देव-द्विज-नृपादीनां तस्मान्नान्दीति संज्ञिता॥" इति दर्पणोक्तलक्षणसद्भावात्, तथा च, "वस्तामसीं वृत्तिमपनयतु" इति आशीर्वचनयुक्तत्वात्, भगवत: शिवस्य स्तुतिरूपत्वाच्च, तथा "माङ्गल्यशङ्ख चन्द्राब्ज-कोककैरवशंसिनी" इति नान्दीलक्षणसङ्गतिरपि "अष्टाभिस्तनुभि." इत्यनेनैव सूचितस्य अष्टमूर्त्यन्तर्गतसोमापरनामचन्द्रपदस्य सद्भावाच्चेति मन्तव्यम्। यच्च "पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत" इति नान्दीलक्षणं, तदपि अत्र घटते एव; तथा च, पदमत्र न सुप्तिङन्तरूप, न वा श्लोकपादरूप, परन्तु अभिनवगुप्ताचार्य्यादिभि: प्राचीनै: भरतसूत्रव्याख्यातृभिरलङ्कारप्रणेतृभिश्च समाख्यातम् अवान्तरवाक्यरूपमष्टसङ्ख्याकमिति। तथा च नाट्यप्रदीपे—"श्लोकपाद: पदं केचित् सुप्तिङन्तमथापरे। परेऽवान्तरवाक्यैक-स्वरूपं पदमूचिरे॥" इति। अत्र च "प्रणतबहुफले" इत्यन्तमेकं पद, "कृत्तिवासा." इत्यन्तं द्वितीयं, "देहेऽपि" इत्यन्तं तृतीयं, "यतीनाम्" इत्यन्तं चतुर्थं, "बिभ्रत:" इत्यन्तं पञ्चम, "नाभिमान:" इति षष्ठं, "सन्मार्गालोकनाय" इति सप्तमम्, "ईश:" इत्यन्तमष्टमम्, एवञ्चास्य

अष्टपदयुक्तत्वमवगन्तव्यम्। यत्तु तर्कवाचस्पतिपादैः "अस्य न नान्दीरूपता 'पदैर्द्वादशभिर्युक्ता अष्टाभिर्वा पदैरुत' इत्युक्तस्य नान्द्या लक्षणस्यात्राभावात्, किन्तु कविकृतमङ्गलाचरणरूपत्वमेवेति बोध्यम्" तथा "नान्द्यन्ते इति क्वाचित्कः पाठस्तु प्रामादिकः, उक्तपदस्य नान्दीरूपत्वाभावस्योक्तत्वात्" इत्युक्तं, तत् नाट्यशास्त्रप्रवर्त्तकस्य सुप्राचीनस्य मुनेर्भरतस्य मतमनुसृत्य इत्यवगन्तव्य,तथा च विश्वनाथः,—"एतन्नान्दीति कश्चिन्मतानुसारेणोक्तं, वस्तुतस्तु पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गमित्युच्यते। यदुक्तं—यस्मादभिनयो ह्यत्र प्राथम्यादवतार्य्यते। रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम्॥ इति। उक्तप्रकारायाश्च नान्द्या रङ्गद्वारात् प्रथमं नटैरेव कर्त्तव्यतया न महर्षिणा (भरतेन) निर्देशः कृतः। कालिदासादिमहाकविप्रबन्धेषु च—'वेदान्तेषु यमाहुः—' एवमादिषु नान्दीलक्षणायोगात्। उक्तञ्च—'रङ्गद्वारमारभ्य कविः कुर्य्यात्' इति; अत एव प्राक्तनपुस्तकेषु 'नान्द्यन्ते सूत्रधारः' इत्यनन्तरमेव 'वेदान्तेषु' इत्यादिश्लोकलिखनं दृश्यते। यच्च पश्चात् 'नान्द्यन्ते सूत्रधारः' इति पदं प्रयोजितवान्, इतः प्रभृति मया नाटकमुपादीयते, इति कवेरभिप्रायः सूचितः इति"। एवञ्च प्राचीनमतानुसारेण "पदैर्युक्ता—" इत्यादिलक्षणलक्षितायाः नान्द्याः रङ्गद्वारात् प्रथमं नटैरेव पठ्यमानत्वात्, तदनन्तरञ्च सूत्रधारेणास्य मङ्गलाचरणश्लोकस्य पठितत्वात् नान्दीत्वाभाव इति वाचस्पतिपादोक्तिः असती इति न केनापि वक्तुं युज्यते। यत्तु केनचित् तद्व्याख्यानम् "असत्" इत्युक्तं, तत् प्राचीनमतं सविशेषमनालोच्यैव इत्यलमतिप्रपञ्चेन। श्लोकेऽस्मिन् एकैश्वर्य्यत्वाकिञ्चनत्वयोः कान्तासम्मिश्रदेहत्व-विषयनिरभिलाषसन्न्यासित्वयोः तथा निखिलजगद्धारकत्व-निरभिमानत्वयोरेकत्र समावेशात् विरोधः, सर्वशक्तिमति परमेश्वरे सर्वविधविरोधिधर्मसम्भवात् तत्परिहारश्च इति विरोधाभासोऽलङ्कारः। किञ्च पूर्वार्द्धे यो यः इति प्रथमान्तपदद्वयेन प्रक्रम्य उत्तरार्द्धे तस्य षष्ठ्यन्ततया प्रयोगात् भग्नप्रक्रमतादोषश्च, स च "अष्टाभिर्यस्तनूभिर्जगदिदमखिलं धारयन्नाभिमानी" इति पाठकल्पनेन परिहर्त्तव्यः। स्रग्धरा वृत्तम्॥ १॥

[ नान्द्यन्ते ]।

सूत्रधारः। (क) अलमतिविस्तरेण। [ नेपथ्याभिमुखमवलोक्य ]
मारिष! (ख) इतस्तावत्।

[ प्रविश्य ]।

पारिपार्श्विकः। (ग) भाव। (घ) अयमस्मि।

सूत्र। अभिहितोऽस्मि परिषदा, श्रीकालिदासग्रथितवस्तु मालविकाऽग्निमित्रं नाम नाटकमस्मिन् वसन्तोत्सवे प्रयोक्तव्यम् (ङ) इति, तदारभ्यतां सङ्गीतकम्।

पारिपार्श्विक। मा तावत्, प्रथितयशसां धावकसौमिल्ल-कविरत्नादीनां प्रबन्धानतिक्रम्य वर्त्तमानकवेः कालिदासस्य कृतौ किं कृतो बहुमानः? (च)

---

(क) सूत्रं प्रयोगानुष्ठानं धारयतीति सूत्रधारः प्रधाननटः, "नाट्योपकरणादीनि सूत्रमित्यभिधीयते। सूत्रं धारयति यस्तु सूत्रधारः स उच्यते॥" इत्युक्तलक्षणत्वात्, वदतीति शेषः। वाक्यमेव कर्म। एवमुत्तरत्रापि।

(ख) मारिष! आर्य्य! "आर्य्यस्तु मारिषः" इत्यमरः।

(ग) पारिपार्श्विकः सूत्रधारात् किञ्चिदूनगुणको नटविशेषः।

(घ) भाव! विद्वन्! "भावो विद्वान्" इत्यमरः।

(ङ) "परिषदा" इत्यस्य प्राक् क्वचित् "विद्वत्" इति पाठः अधिको दृश्यते, "विद्वत्परिषदा" इति। कालिदासेन तदाख्यकविना, ग्रथितं रचितं, वस्तु अभिनेयपदार्थजातं यत्र तत्। मालविकासहितोऽग्निमित्रः मालविकाऽग्निमित्रः, (शाक-पार्थिवादित्वात् समासः; तमधिकृत्य कृतो ग्रन्थः इति अण्, द्वन्द्वसमासत्वे किरातार्जुनीयवत् छ-प्रत्ययः स्यात्)। नाटकं "नाटकं ख्यातवृत्तं स्यात्" इत्याद्युक्तलक्षणं दृश्यकाव्यं, तल्लक्षणं च साहित्यदर्पणे षष्ठपरिच्छेदे द्रष्टव्यम्। प्रयोक्तव्यमभिनेतव्यम्, अभिनयश्च यद्यपि तत्रत्यपात्राणामेव तथाऽपि तदुपलक्षितग्रन्थस्यापि स उपचर्य्यते।

(च) धावकः नागानन्द-रत्नावल्यादिग्रन्थकारकः, स च स्वप्रणीतामपि ग्रन्थावलीं राज्ञः श्रीहर्षात् धनमादाय तन्नाम्ना प्रख्यापितवानिति मम्मटभट्टस्य सम्मतम्। केचित् तु धावकमिमं नागानन्दादिप्रणेतुः

सूत्र। अये! विवेकविश्रान्तम् (छ) अभिहितम्। पश्य—

पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम्।
सन्तः परीक्ष्यान्यतरद्भजन्ते
मूढः परप्रत्ययनेयबुद्धिः॥ २॥

---

धावकात् अन्यमेव कथयन्ति; प्रबन्धान् नागानन्दादीन्, अतिक्रम्य उल्लङ्घ्य, अनादृत्येति यावत्, वर्त्तमानकवेः आधुनिकनवीनकवेः। बहुमानः समादरः। किं कथं, कुतः? परिषदेति शेष.। क्वचित् "कुतो·किं कुतो बहुमानः" इत्यत्र "क्रियायां कथं बहुमानः" इति "किं बहुमानः परिषदः" इति च पाठान्तरद्वयम्; (तत्र परिषद इति कर्त्तरि षष्ठी) तत्प्रबन्धानामनतिक्रमणीयतां विवचन् तान् विशिनष्टि—प्रथितयशसामिति विख्यातकीर्त्तीनामित्यर्थः। "प्रथितयशसाम्" इत्यत्र "पृथुलयशसाम्" इति पाठे—विपुलकीर्त्तीनामित्यर्थः।

(छ) पारिपार्श्विकेनैवमाक्षिप्तः सूत्रधारस्तत्परिहर्त्तुमाह, विवेकेति।—विवेकः सदसद्विचारबुद्धिः, विश्रान्तो निवृत्तो यस्मात् तद्यथा तथा, (निष्ठान्तस्य परनिपातः) "विवेकशून्यम्" इति पाठस्तु सुगमः समीचीनश्च। "विविकश्रान्तम्" इति च क्वचित् पाठः।

विवेकशून्यत्वेनाक्षेपोऽत्र परिहृतः, तदेव कुतः? इत्यत्र गौरवागौरवे गुण-दोषौ तन्त्रे इति प्रतिपादयन् प्रकृतकाव्यस्य गुणवत्त्वात् गौरव-भाजनतेत्याह, पुराणमित्यादि।— सर्वं पुराणं काव्य पुराणं प्राचीनम्, इत्येव हेतोः, न साधु न उत्कृष्टं, न निर्दोषमिति यावत्, तथा सर्वं नवं काव्यं नवं नवीनम्, आधुनिकमित्यर्थः, इति अस्मादेव हेतोः, अवद्यमपि दुष्टमपि, न च नैव, सन्तः प्रेक्षावन्तः, सदसद्विवेकिन इति यावत्, परीक्ष्य पर्य्यालोच्य, गुण-दोषाविति शेषः, अन्यतरत् पुराण-नवयो-रेकतरं,भजन्ते आश्रयन्ति, यत् सदोष तत् परित्यज्य सगुणं गृह्णन्तीत्यर्थः मूढः इत्यत्र तु-कारो गम्यः, मूढस्तु मूर्खस्तु, सदसद्विवेकशून्यस्तु इत्यर्थः, परस्य इतरस्य, प्रत्ययेन विश्वासेन, काव्यविशेषे जनान्तरस्य श्रद्धावुद्धिदर्शने-नेति यावत्, नेया परिचालनीया, तदनुसारेण अवधारणीया इति यावत्,

पारि। आर्य्यमिश्राः प्रमाणम्। (ञ)

सूत्र। तेन हि त्वरता (झ) भवान्।—

शिरसा प्रथमगृहीतामाज्ञामिच्छामि परिषदः कर्त्तुम्।

देव्या इव धारिण्याः सेवादक्षः परिजनोऽयम्॥ २॥

[इति निष्क्रान्तौ]।

---

बुद्धिर्येन यस्य वा तादृशः, भवतीति शेषः, तथा च प्रेक्षावतां गुण-दोषाविव ...व।गौरवयोस्तत्त्वे, न नव्य प्राचीनत्वे इत्यतोऽत्र ग्रन्थे बहुगुणवत्त्वात् ...तं प्रवृत्तिः स्यात्, न तु नव्यत्वेनानादर इति भावः। अत्र पूर्वार्द्धोक्त साधुत्वासाधुत्वनिर्णयेनान्यतरग्रहणं प्रति परार्द्धोक्तविवेकवतां परीक्षाया हेतुत्वेन निर्देशात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, "हेतोर्वाक्य-पदार्थत्वे काव्यलिङ्गं निगद्यते" इति दर्पणोक्तलक्षणात्। इन्द्रवज्रोपेन्द्रवज्रयोर्मिश्रणादुपजातिवृत्तम्॥ २॥

(ञ) आर्य्यमिश्राः सज्जनश्रेष्ठाः - सदसद्विवेकित्वेनैव तेषां श्रेष्ठत्वमवगन्तव्यं, "स्यादुत्तरपदे मिश्रस्त्रिषु श्रेष्ठार्थवाचकः" इति व्याडिः। प्रमाणं सदसद्विवेचनाय प्रमातार इत्यर्थः। "प्रमाणं हेतुमर्य्यादा शास्त्रेयत्ता-प्रमातृषु" इत्यमरः।

(झ) त्वरताम् अभिनयार्थं शीघ्रं सज्जितो भवतु इत्यर्थः।

एवं परिषदः प्रसाद्याभिनयार्थं तदाज्ञा चिकीर्षुः प्रकृतपात्र-प्रवेशनाय कथां प्रस्तौति, शिरसेति।—देव्याः कृताभिषेकायाः, "देवी कृताभिषेकायाम्" इत्यमरः, धारिण्याः तन्नामिकायाः राज्ञः अग्निमित्रस्य महिष्याः, सेवादक्षः परिचर्य्यानिपुणः, अयम् अनन्तरमेव रङ्गभूमौ प्रवेक्ष्यन्त रानीपरिजनम् अङ्गुल्या निर्दिशन् एष, परिजन इव परिचारक-लोकः इव, किङ्करीवर्गं इवेत्यर्थः, अहं शिरसा मूर्द्ध्ना, अवनतमस्तकेनेत्यर्थः, प्रथमगृहीतां प्रागेव स्वीकृतां, त्वया सह आलापात् पूर्वमेव सबहुमानमङ्गीकृतामिति-यावत्, परिषदः सभास्थगुणग्राहिवर्गस्य इत्यर्थः, आज्ञाम् आदेशम्, अद्य मालविकाऽग्निमित्रनाटकमभिनेतव्यमित्येवरूपामिति भावः, कर्त्तुं प्रतिपालयितुमिति यावत्, इच्छामि अभिलषामि, सभ्यानामादेशस्य अनतिक्रमणीयत्वादिति भावः। उपमाऽलङ्कारः। आर्य्या वृत्तम्॥ २॥

प्रस्तावना। (ञ)

[ततः प्रविशति बकुलावलिका]।

बकुला। आणत्तम्हि देवीए धारिणीए, अचिरोवणीदा छलिअणामणट्टअंतरे कीरिसी मालविए त्ति णट्टाआरिअं अज्जगणदासं पुच्छिदुं, ता जाव सङ्गीदसालं गच्छम्हि। * (ट)

[इति परिक्रामति]।

---

* आज्ञप्ताऽस्मि देव्या धारिण्या, अचिरोपनीता छलिकनामनाट्यान्तरे कीदृशी मालविकेति नाट्याचार्य्यं गणदासं प्रष्टुं, तत् यावत् सङ्गीतशालां गच्छामि। इति स०।

---

(ञ) प्रस्तावना प्रस्तावयति प्रस्तुतविषयमुन्नावयतीति तादृशी; तल्लक्षणञ्च साहित्यदर्पणे यथा—"नटी विदूषको वाऽपि पारिपार्श्विक एव वा। सूत्रधारेण सहिता. सलाप यत्र कुर्वते॥ चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा॥" इति। सा चात्र अभिज्ञानशकुन्तलोक्त-प्रस्तावनावत् अर्थविशेषे प्रयुक्तेन वाक्येन पात्रप्रवेशरूपकार्य्यान्तरसाधनात् अवलगिताख्या ज्ञेया; तथा च दर्पणे,—"यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते। प्रयोगे खलु तज्ज्ञेयं नाम्नाऽवलगितं बुधैः॥" इति।

(ट) वृषपर्वदुहितु शर्मिष्ठाया. कृतं चतुर्भिः पदैः समन्वितं छलिकं नाम नाट्यान्तरं नाटकीयच्छलिकाख्यसङ्गीतविशेषः तत्र, अचिरोपनीता नाट्यशिक्षार्थम् अल्पदिनं प्रेरिता, मालविका इत्यस्य विशेषणम्; कीदृशी? कीदृगवस्थेत्यर्थः, प्रकृताभिनयशिक्षाग्रहणे समर्था असमर्था वा इति भावः। क्वचित् "अंतरे" इत्यनन्तरम् "उवदेसग्गहणे" (उपदेशग्रहणे इति स०) इत्यधिकः पाठः। "अइरपउत्तोवदेसं छलिअं णाम.णट्टअ अंतरेण" इति पाठान्तरे "अचिरप्रवृत्तोपदेशं छलिकं नाम नाटकम् अन्तरेण" इति स०। कीदृशम् उपदेशं गृह्णातीति जिज्ञासार्थं नाट्याचार्य्यसमीपे सखीप्रेषणमिति द्रष्टव्यम्।

[ ततः प्रविशत्याभरणहस्ता द्वितीया चेटी ]।

प्रथमा। [ द्वितीयां दृष्ट्वा ]। हला कोमुदिए! कुदो दाणीं इअं दे धीरदा, जं समीए वि अदिक्कमंती इदो दिट्ठिं ण देसि? * (ठ)

द्वितीया। अम्मो बउलावलिआ! सहि! देवीए इदं सिप्पिसआसादो आणीदं णागमुद्दासणाहं अंगुलीअअं सिणिद्धं णिभालअंती तुह उवालंभे पडिदम्हि। † (ड)

प्रथ। [ विलोक्य ]। ठाणे सज्जदि दे दिट्ठी। इमिणा अंगुलीअएण उब्भिणकिरणकेसरेण कुसुमिदो विअ दे अग्गहत्थो। ‡ (ढ)

---

* हला कौमुदिके! कुतस्ते इयं धीरता, यत् समीपेऽप्यतिक्रामन्ती इतो दृष्टिं न ददासि? इति स०।

† अम्मो वकुलावलिका! सखि! देव्या इदं शिल्पिसकाशादानीतं नागमुद्रासनाथमङ्गुलीयकं स्निग्धं निभालयन्ती तवोपालम्भे पतिताऽस्मि। इति स०।

‡ स्थाने सज्जति ते दृष्टिः। अनेनाङ्गुलीयकेनोद्भिन्नकिरणकेसरेण कुसुमित इव ते अग्रहस्तः। इति स०।

---

(ठ) प्रथमा प्रथमं प्रविष्टा वकुलावलिका। द्वितीयां तत्परं प्रविष्टां कौमुदिकाम्। धीरता धैर्य्यम्, अचाञ्चल्यमित्यर्थः, प्रकृतविषयमुपेत्य विषयान्तरेऽनासक्ततेति यावत्।

(ड) आकस्मिकदर्शने हर्ष-विस्मयद्योतकम् अम्मो इत्यव्ययं, "विस्मये दुःखे अम्मो नित्यं स्त्रीभिः प्रयुज्यते" इति भरतः। नागमुद्रया नागः सर्पविषहारकमणिविशेषः, तद्युतया मुद्रया "मोहर" इति प्रसिद्धेन नामाङ्कनयोग्ययन्त्रभेदेन इत्यर्थः, सनाथं युक्तम्। अनेनैव विषहारकमणिना विदूषकस्य कालिमविषापहारो भविष्यतीति चतुर्थेऽङ्के व्यक्तीभविष्यति। स्निग्धं सस्नेहं, साग्रहमिति यावत्, निभालयन्ती अवलोकयन्ती। "णिभालअंती" इत्यत्र "णिज्झाअंती" इति पाठे— "निध्यायन्ती" इति स०। उपालम्भे तिरस्कारे।

(ढ) स्थाने युक्तम्। सज्जति लगति, समाकृष्टा भवतीत्यर्थः, अस्मिन् अङ्गुरीयके तव दृष्टिर्यत् सज्जति तत् युक्तमेवेति निष्कर्षः।

द्विती। हला! कहिं पत्थिदासि? * (ण)

प्रथ। देवीए वअणेण णट्टाआरिअं अज्जगणदासं पुच्छिदुं उवदेसग्गहणे कीरिसी मालविएत्ति? † (त)

द्विती। सहि! ईरिसेण वावारेण असण्णिहिदावि सा भट्टिणा कहं दिट्ठा? ‡ (थ)

प्रथ। आं, सो जणो देवीए पासगदो चित्ते दिट्ठो। § (द)

---

* हला! कुत्र प्रस्थिताऽसि? इति स०।

† देव्या वचनेन नाट्याचार्य्यमार्य्यगणदासं प्रष्टुम्, उपदेशग्रहणे कीदृशी मालविकेति। इति स०।

‡ सखि! ईदृशेन व्यापारेणासन्निहिताऽपि सा भर्त्रा कथं दृष्टा? इति स०।

§ आं, स जनो देव्याः पार्श्वगतश्चित्रे दृष्टः। इति स०।

---

उद्भिन्नेति।—उद्भिन्नाः ऊर्द्ध्वं प्रसृताः,किरणाः रश्मयः, केशराणि किञ्जल्कानीव यस्य तेन। कुसुमितः सञ्जातकुसुमः। अग्रं हस्तस्य अग्रहस्तः हस्ताग्रमित्यर्थः, (राजदन्तादित्वात् परनिपातः)।

(ण) हलेति सखीसम्बोधनम्। "हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति" इत्यमरः।

(त) देव्याः राजमहिष्याः धारिण्याः। "देवीए" इत्यनन्तरम् "एव्व" इति क्वचित् अधिकः पाठः।

(थ) ईदृशेन अभिनयशिक्षणरूपेण,व्यापारेण कर्म्मणा, तदभ्यासाय अन्यत्रावस्थितेरावश्यकत्वात् न तस्याः तत्र सन्निधिसम्भव इत्याह, असन्निहिताऽपि देव्याः अन्तःपुरात् स्थानान्तरे स्थिताऽपि। सा मालविका। भर्त्रा स्वामिना अग्निमित्रेण। कथं भर्त्रा दृष्टेत्युक्तिः प्रस्तुतकथाप्रसङ्गार्था। अनेन च कथोद्घातेन तस्याः भर्त्तुश्च प्रवेशो भविष्यतीति प्राक् सूचितम्, "असूचितस्य प्रवेशो नास्ति" इति नाटकसम्प्रदायात तद्वचनम्।

(द) आमिति स्मरणार्थकमव्ययम्, "आं दाने निश्चय स्मृत्यो" इति मेदिनी। पार्श्वगतः पार्श्वे चित्रिततया अवस्थितः। चित्रे आलेख्यपटे।

द्विती। कहं विश्र ? *

प्रथ। सुणाहि, चित्तसालं गदा देवी जदा पच्चग्गवस्सराश्रं चित्तलेहं आश्रारिश्रस्स पलोश्रती चिट्ठदि, तहिं अंतरे भट्टा उवट्ठिदो। † (ध)

द्विती। तदो तदो ? ‡

प्रथ। उवआराणंतरं एक्कासणोवविट्ठेण भट्टिणा चित्तगदाए देवीए परिश्रणमज्झगदं आसखपरिश्रारिश्रं पेक्खिश्र देवी पुच्छिदा। § (न)

---

* कथमिव ? इति सं०।

† शृणु ; चित्रशालां गता देवी यदा प्रत्यग्रवर्णरागां चित्रलेखामाचार्य्यस्य प्रलोकयन्ती तिष्ठति, अस्मिन्नन्तरे भर्त्तोपस्थितः। इति सं०।

‡ ततस्ततः ? इति सं०।

§ उपचारानन्तरमेकासनोपविष्टेन भर्त्त्रा चित्रगताया देव्याः परिजनमध्यगतामासन्नपरिचारिका दृष्ट्वा देवी पृष्टा। इति सं०।

---

(ध) चित्रशालाम् आलेख्याङ्कनगृहम्। प्रत्यग्रः अभिनवः, वर्णानां शुक्लादीनां, रागो रञ्जनं यत्र चित्रलेखाया तादृशीम्। चित्रलेखां चित्राङ्कनम्, अङ्कितमूर्त्तिमित्यर्थः। आचार्य्यस्य चित्रशिल्पशिक्षकस्य। भर्त्ता प्रभुः, राजेति यावत्।

(न) उपचारेति।—उपचारः शिष्टव्यवहारः, आसनपरित्यागाभिवादनकुशलप्रश्नादिरूपसज्जनाचारः इत्यर्थः, तदनन्तरम्, एकासनोपविष्टेन देव्या सहेति भावः। चित्रगतायाः आलेख्ये अङ्कितायाः, देव्याः महिष्याः धारिण्याः, परिजनमध्यगता चित्रितानां सख्यादिपार्श्वचरीणां मध्ये वर्त्तमानाम्, आसन्नपरिचारिकां देव्या अव्यवहितपरवर्त्तिनीं सेविकाम्। "आसखपरिश्रारिश्र" इत्यत्र "आसखदारिश्र" इति पाठे "आसन्नदारिकाम्" इति सं। देव्याः समीपस्थितां काञ्चित् बालिकामित्यर्थः।

द्वितो। किं त्ति ? *

प्रथ। अपुव्वा इअं दारिआ देवीए आसण्णा लिहिदा किं-णामहेए त्ति ? † (प)

द्वितो। आकिदिविसेसे आअरो पदं करेदि। तदो तदो ? ‡ (फ)

प्रथ। तदो अवहीरिअवअणो भट्टा संकिदो देवीं पुणोवि अणुवंधिदुं पउत्तो। तदो कुमारोए वसुलच्छीए आअक्खिदं, अज्ज। एसा मालविए त्ति। § (ब)

---

* किमिति ? इति स०।

† अपूर्वेयं दारिका देव्या आसन्ना लिखिता किं-नामधेया ? इति। इति स०।

‡ आकृतिविशेषे आदरः पदं करोति। ततस्ततः ? इति स०।

§ ततोऽवधीरितवचनो भर्त्ता शङ्कितो देवीं पुनरप्यनुवन्धुं प्रवृत्तः। तत. कुमार्य्या वसुलक्ष्म्या आख्यातम्,आर्य्ये ! एषा मालविकेति। इति स०।

---

(प) अपूर्वा अदृष्टपूर्वा, इतःपूर्वमियं मया कदाऽपि न दृष्टेत्यर्थ.। दारिका बालिका। लिखिता चित्रपटे अङ्किता।

(फ) आदर. गौरवं, श्रद्धातिशयः इत्यर्थः, परिचयार्थमाग्रहाधिक्य-मिति यावत्, आकृतिविशेषे विशिष्टाकृतौ, मनोहररूपशालिनि जने इत्यर्थः, पदं स्थानं, करोति, विशिष्टाकृतिदर्शनात् तत्परिचयज्ञानार्थ-माग्रहो भवतीत्यर्थ। "आकिदिविसेसे" इत्यत्र "आकिदिविसेसेसु" इति पाठान्तरे—"आकृतिविशेषेषु" इति स०।

(ब) अवधीरितं देव्या प्रत्युत्तरादानेन अवज्ञातं, वचनं यस्य तादृश', अत एव शङ्कितः शङ्का मद्वचनश्रवणेऽपि यतः नोत्तरं दत्तं, ततः केनचित् कारणेनात्र भवितव्यमित्याकारक. संशयः, सा जाता अस्य इति तादृश., (तारकादित्वात् इतच्)। अनुबन्धुमाग्रहातिशयेन पुनः पुनः प्रष्टुमित्यर्थः। "पुणो वि अणुवंधिदुं पउत्तो" इत्यत्र "पुणो अणुवंधिदुं संकिदो" इति पाठे—पुनरनुवन्धुं शङ्कितः इति स०। कुमार्य्या पञ्चम-

द्विती। [सस्मितम्]। सरिसं क्खु एदं बालभाअस्स। तदो अवरं कहेहि ? *

प्रथ। किं अण्णं, संपदं मालविआ सविसेसं भट्टिणो दंसणपहादो रक्खीअदि। † (भ)

द्विती। हला। अणुचिट्ठ अत्तणो णिओअं। अहं वि एदं अंगुलीअअं देवीए उवणइस्सं। ‡ (स) [इति निष्क्रान्ता]।

प्रथ। [परिक्रम्यावलोक्य च]। एसो णट्टाआरिओ संगीदसालादो णिग्गच्छदि। दाव से अत्ताणं दंसेमि। § (य) [इति परिक्रामति]।

* सदृशं खलु एतत् बालभावस्य। ततोऽपरं कथय। इति सं०।

† किमन्यत्, साम्प्रतं मालविका सविशेषं भर्तुर्दर्शनपथात् रक्ष्यते। इति सं०।

‡ हला! अनुतिष्ठात्मनो नियोगम्। अहमप्येतदङ्गुलीयकं देव्यै उपनेष्यामि। इति सं०।

§ एष नाट्याचार्यः सङ्गीतशालातो निर्गच्छति, तावदस्यात्मानं दर्शयामि। इति सं०।

वर्षवयस्कया तदपेक्षया किञ्चिन्न्यूनया वा, तृतीयवर्षात् पञ्चमवर्षस्यान्तराले अवस्थितयेत्यर्थः, यदुक्तं "कौमारं पञ्चमाब्दान्तम्" इति। वसुलक्ष्म्या तदाख्यया राजकन्यया। कुमार्य्येत्युक्तिः देव्या रहस्योद्भेदने विवेकशून्यता-द्योतनार्था; तच्च उत्तरवाक्ये स्पष्टीभविष्यति।

(भ) किमन्यत् इत्यनन्तरं कथयामीति शेषः, अन्यत् किमपि वक्तव्यं नास्तीत्यर्थः। सविशेषं सावहितं यथा तथा, भर्तुः राज्ञः, दर्शनपथात् दृष्टिमार्गात्, रक्ष्यते पाल्यते, वहिः स्थाप्यते इत्यर्थः,राज्ञो नयनगोचरीभूता यथा न भवति तथा यत्नः क्रियते इति निष्कर्षः।

(स) अनुतिष्ठ परिपालय इत्यर्थः। नियोगम् आदेशम्।

(य) सङ्गीतशालातः सङ्गीताय निर्दिष्टगृहात्। "दाव" इत्यत्र "जाव" इति पाठान्तरं—यावत् इति सं०। अस्य नाट्याचार्य्यस्य, आत्मानं स्वं, स्वदेहमित्यर्थः।

गणदासः। [प्रविश्य]। कामं खलु सर्वस्यापि कुलविद्या बहुमता, न पुनरस्माकं नाट्यं प्रति मिथ्या गौरवम्। (२) कुतः? तथा हि—

देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा।

---

(२) कामं यथेष्टम्, अनुमतं वा। कुलविद्या वंशपरम्पराऽऽगतशिक्षा, वंशानुक्रमिकव्यवसाय इति यावत्। बहुमता समादृता। नाट्यं नटकर्म, अभिनयव्यापार इत्यर्थः, मिथ्या अलीकं, गौरव समादरः, श्रद्धाबुद्धिरिति यावत्; अभिनयव्यापारेणास्माकं वर्त्तनं नागौरवाय, परन्तु यथार्थगौरवायैव, अतः कुलविद्या सर्वैरेव साग्रहेणावश्यमेवावलम्बनीयेति भावः।

नाट्याभिनयस्य अनिन्दनीयत्वप्रतिपादनार्थमाह, देवानामिति।—मुनयः नाट्यशास्त्रप्रवर्त्तकाः भरत-मतङ्गादयः, कान्तं मनोहरम्, अभीष्टमित्यर्थः, हिंसादिदोषराहित्यादिति भावः, "कान्तम्" इत्यत्र "शान्तम्" इति पाठे—शान्तम् अनुद्धतम्, आनन्दवर्द्धनमिति यावत्, अत्रापि पूर्ववद्भावः, इदं नाट्यम् अभिनयव्यापारं, देवानाम् इन्द्रादीनां, चाक्षुषं चक्षुषा ग्राह्यं चक्षुःप्रीतिकरं च, वास्तविकयज्ञस्य चक्षुःप्रीतिकरत्वाभावादिति भावः, तेन वास्तविकयज्ञादस्य विशेषः इति बोद्धव्यम्; क्रतुं यज्ञम्, आमनन्ति कथयन्ति, चक्षुषः प्रीतिकरस्य एतस्य दर्शनेन वास्तविकयज्ञवत् देवानां प्रीतिजननात्, तेषामपि सङ्गीतप्रियत्वादिति भावः। तथा रुद्रेण महेश्वरेण हरेण, इदं नाट्यम्, उमया गौर्या, कृतो व्यतिकरः सम्बन्धः, सश्लेष इति यावत् यस्मिन् तादृशे, स्वाङ्गे स्वकीये हर-गौरीरूपे देहे, द्विधा ताण्डव-लास्याख्यनृत्यभेदात् द्विप्रकारेण, विभक्तं पृथक् कृतं, स्त्री-पुंसयोर्नृत्ययोर्भेदात् हररूपार्द्धाङ्गेन ताण्डवाख्यं पुंनर्त्तनं, गौरीरूपार्द्धाङ्गेन च लास्याख्यं स्त्रीनर्त्तनं कृतमित्यर्थः; "पुंनृत्यं ताण्डवं प्राहुः स्त्रीनृत्यं लास्यमुच्यते" इति

त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम् ॥ ४ ॥

वकुला। [उपेत्य]। अज्ज ! वंदामि। *

गण। भद्रे ! चिरं जीव।

वकुला। अज्जं देवी पुच्छदि, अवि उवदेसग्गहणे ण अदि-किलिस्सदि वो सिस्सा मालविएत्ति ? † (ख)

* आर्य्य ! वन्दे इति सं०।

† आर्य्यं देवी पृच्छति, अप्युपदेशग्रहणे नातिक्लिश्यति वः शिष्या मालविकेति ? इति सं०

सङ्गीत-नारायण ; किञ्च, अत्र नाट्ये, त्रयो गुणाः त्रिगुणाः सत्त्वादयः, त एव त्रैगुण्यं, (स्वार्थे ष्यञ्,) तस्मादुद्भवं सञ्जातमपि, लोकानां रामयुधिष्ठिरादीनामार्य्यगात्राणां, चरितं सुखदुःखादिविमिश्रं वृत्तं, नानारसं नाना विविधाः, रसाः शृङ्गारवीरादयः यस्मिन् तादृशं नवरससम्पन्नं, दृश्यते, काव्यानोट्टिमि रिति शेष, तथा च त्रैगुण्योद्भवस्य नवरसकरचनाश्चर्य्यमिति भावः ; एवञ्च, एकमपि नाट्यमभिनयव्यापारः, बहुधा अनेकधा, भिन्नरुचेः विभिन्नाशयस्य, कस्यचित् शृङ्गाररसे कस्यचित् वा वीररसे इत्येवं प्रत्येकं विभिन्नविषये अनुरागसम्पन्नस्य इत्यर्थः, जनस्य लोकस्य, समाराधनं नानारससम्पन्नत्वेन सर्वेषामेव अभिप्रेषिया श्रेष्ठ सन्तोषजननमित्यर्थः। "समाराधनम्" इत्यत्र "समाराधकम्" इति पाठान्तरेऽपि स एवार्थः। श्लोकेऽस्मिन् प्रथमचरणे नाट्ये क्रतुत्वारोपणात् रूपकालङ्कारः, तस्य च 'कान्तम्' इति विशेषणस्य-पशुहिंसादिदोषविवर्जितत्वेन अधिकवैशिष्ट्यप्रतिपादनात् अधिकारूढवैशिष्ट्यञ्चमवगन्तव्यम्। तृतीय-चरणे गुणत्रयरूपकारणात् कार्य्यभूतनवरससमुद्भूतेः कारण-कार्य्ययो-र्विरोधवर्णने विषमालङ्कारः, तथा चतुर्थचरणस्थवाक्यं प्रति तृतीय-चरणवाक्यस्य कारणत्वेन प्रतिपादनात् वाक्यार्थहेतुकं काव्यलिङ्गमल-ङ्कारश्च, स च विषमालङ्कारानुप्राणित इत्यनयोरङ्गाङ्गिभावेन सङ्करः, तस्य च प्रथमपादस्थरूपकेण संसृष्टिः। शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

गण। भद्रे! विज्ञाप्यतां देवी, परमनिपुणा मेधाविनी चेति। किं बहुना (व)—

यत् यत् प्रयोगविषये भाविकमुपदिश्यते मया तस्यै।
तत्तत् विशेषकरणात् प्रत्युपदिशतीव मे बाला॥ ५॥

बकुला। [ आत्मगतम् ]। अदिक्कमंतीं विअ इरावदीं पेक्खामि।
[ प्रकाशम् ]। किदत्था दाणिं वो सिस्सा, जस्सिं गुरुअणो एव्वं तुस्सदि। * ( अ )

---

* अतिक्रामन्तीमिवेरावतीं प्रेक्षे। कृतार्था इदानीं वः शिष्या, यस्यां गुरुजन एवं तुष्यति इति सं०।

---

(ल) अपि प्रश्ने। वः युष्माकम्। (गौरवे बहुवचनम्) नातिलिख्यति अत्यर्थं क्लेशं नानुभवति।

(व) परमनिपुणा अत्यर्थं दक्षा। मेधाविनी धारणावद्बुद्धिसम्पन्ना। "धीर्धारणावती मेधा" इत्यमरः। किं बहुना अधिककथनेन अलं, विस्तरोक्तेः किमपि प्रयोजनं नास्तीत्यर्थः।

मालविकाया नैपुण्यप्रतिपादनाय आह, यदिति।—प्रयोगविषये अभिनयव्यापारे, भावाय शृङ्गाराद्यवस्थाविशेषाय हितं (ठञ्) भाविकं शृङ्गारादिरसद्योतकं भावव्यञ्जकनृत्यविशेषं, यदुक्तम्—"आङ्गिकाभिनयप्रायमल्पवाचिकसात्त्विकम्। भावानामाश्रयं नृत्यं पदार्थव्यञ्जनालकम्॥" इति, यत् यत् नृत्यादिकं, मया तस्यै मालविकायै, उपदिश्यते शिक्ष्यते, बाला बाल्यावस्थापन्नाऽपि, अल्पवयस्काऽपीत्यर्थः, बालसुलभचञ्चलस्वभावाऽपीति भावः, मालविकेति शेषः, तत्तत् भाविकं, विशेषकरणात् मत्तोऽपि विलक्षणरूपेण सम्पादनात्, मे मह्यं, प्रत्युपदिशतीव प्रतिशिक्षयतीव, यो हि विशेषज्ञः, स शिक्षकः इति सम्प्रदायादिति भावः। अनेन तस्याः नैपुण्यातिशयः प्रतिपादितो भवतीति मन्तव्यम्। अत्र "उपदिशतीव" इति क्रियोत्प्रेक्षालङ्कारः, यदुक्तं दर्पणे—"वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः। जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्यं द्वयोरपि॥" इत्यादि। आर्या वृत्तम्॥ ५॥

गण। भद्रे! तद्विधानामसुलभत्वात् पृच्छामि, कुतो देव्या तत् पात्रमानीतम्? (प)

वकुला। अत्थि देवीए वण्णावरो भादा वीरसेणो णाम। सो भट्टिणा अंतवालदुग्गे णम्मदातीरे ठाविदो। तेण सिप्पाहिआरे जोग्गा इअं दारिएत्ति बहिणीए देवीए उवाअणं पेसिदा। * (स)

गण। [स्वगतम्]। आकृतिविशेषप्रत्ययादेनामनूनवस्तुकां सम्भावयामि। [प्रकाशम्]। भद्रे! मयाऽपि यशस्विना भवितव्यम। (ह) यतः,—

* अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम, स भर्त्रा अन्तपालदुर्गे नर्मदातीरे स्थापितः। तेन शिल्पाधिकारे योग्येयं दारिकेति भगिन्या देव्या उपायनं प्रेषिता इति सं०।

(श) अतिक्रामन्तीम् उल्लङ्घयन्तीं, नृत्यगीतादिनैपुण्ये इति भावः। "अदिक्कमन्तीं" इत्यत्र "अदिक्कंतं" इति पाठे—अतिक्रान्ताम् इति सं। इरावतीं नृत्यगीतादिकुशलाम् अग्निमित्रस्य अपरां भार्य्याम्। कृतार्थां सफलश्रमा, गुरोः सन्तोषसाधने समर्थत्वादिति भावः।

(प) भद्रे! सुचरिते! तद्विधानां तादृशीनां, मालविकासदृशप्रतिभादिगुणविकारिणीनामिति भावः। असुलभत्वात् दुष्प्रापत्वात्। तत् तादृशं, पात्रं मालविकारूपं सत्पात्रमित्यर्थः।

(स) वर्णावरः वर्णतोऽवरः जात्या हीनः, तत्पितुः वैश्यजातीयपत्नीगर्भजातत्वात् तस्यावरत्वम्। भर्त्रा राज्ञा अग्निमित्रेण। अन्तपालदुर्गे तदाख्यकोट्टे, सेनावासे इत्यर्थः। शिल्पाधिकारे नृत्यगीतादिकमनीयकलाविद्याविषये। योग्या उपयुक्ता, कलाविद्यायामस्याः स्वाभाविकनैपुण्यमस्ति, सुशिक्षाम् अलप्स्यत चेत् समधिकनिपुणा अभविष्यदिति आलोच्य इति भावः। दारिका बालिका, मालविकेति यावत्। देव्याः महिष्या धारिण्याः। उपायनम् उपहारः।

(ह) आकृतीति।—आकृतौ रूपादौ, यो विशेषो वैलक्षण्यम्, उत्कर्ष

पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥ ६ ॥

वकुला। अज्ज ! कहिं दाणिं वो सिस्सा ? * (क)

गण। इदानीमेव पञ्चाङ्गादिकमभिनयमुपदिश्य मया

---

* आर्य्य ! कुत्रेदानीं वः शिष्या ?

---

इत्यर्थः, तस्य प्रत्ययात् ज्ञानात्, तदीयानुपमरूपलावण्यादिदर्शनादित्यर्थः, एनाम् उक्तपूर्वां मालविकाम्, अनूनम् अहीनम्, उत्तममिति यावत्, वस्तु कुलशीलादिकं यस्याः तथाविधां,(कप्) सम्भावयामि तर्कयामि। इयं सत्कुलोत्पन्ना गुणवती च विशिष्टाकारादिमत्त्वादित्येवं विवेचयामीत्यर्थः, "न प्रभातरलं ज्योतिरुदेति वसुधातलात्" इति कविवाक्यानुसारात् ईदृक्सौन्दर्य्याधिकारिणी न कदाऽपि नीचकुलोद्भवा भवितुमर्हतीति भावः। भद्रे ! सुचरिते ! यशस्विना कीर्त्तिमता, प्रशंसाभाजनेनेति यावत्, योग्यशिष्ये विद्यादानादिति भाव.।

योग्यशिष्ये विद्यादानस्य यशोहेतुत्वं प्रकटयति, पात्रेति।—समुद्रशुक्तौ सागरोत्पन्नमुक्तास्फोटे, "मुक्तास्फोटः स्त्रियां शुक्तिः"इत्यमरः ; न्यस्तमिति शेषः, पयोदस्य मेघस्य, जलं मुक्ताफलतामिव मौक्तिकरूपत्वमिव, आधातुः निधातुः, निक्षेपकर्त्तुरित्यर्थः, प्रकरणात् उपदेशदातुः शिक्षकस्य इति भावः, शिल्पं कलाविद्या, पात्रविशेषे उत्तमभाजने, प्रतिभाशालिनि शिष्ये इति यावत्, न्यस्तं निक्षिप्तं सत्, गुणान्तरं विशेषगुणं, गुणाधिक्यमित्यर्थः, व्रजति याति। बीजाधातारमपेक्ष्य पात्रोत्कर्ष एव गुणविशेषे कारणमिति भाव.। उपमाऽलङ्कारः। आर्य्या वृत्तम् ॥ ६ ॥

(क) वः युष्माकं, (गौरवे बहुवचनम्) शिष्या छात्री, मालविकेति यावत्। "अज्ज कहिं" इत्यत्र "अह इं। अह कहि" इति क्वाचित्कपाठे —अथ किम्। अथ कुत्र इति सं०। अथ किम् इति अङ्गीकारार्थकमव्यय, भवान् यदुक्तवान् तत् सत्यमेवेत्यर्थः।. "अङ्गीकारेऽपि चाथ किम्" इति हारावली।

"विश्रम्यताम्" इत्यभिहिता दीर्घिकाऽवलोकनगवाक्षगता प्रवातमासेवमाना तिष्ठति। (ख)

बकुला। तेण हि अणुजाणादु मं अज्जो, जाव से अज्ज-परितोसणिवेदणेण उस्साहं बड्ढेमि। * (ग)

गण। दृश्यतां सखी। अहमपि लब्धक्षणः (घ) स्वगेहं गच्छामि।

[इति निष्क्रान्तौ]।

* तेन हि अनुजानातु मामार्य्यः, यावदस्या आर्य्यपरितोषनिवेदनेनोत्साहं वर्द्धयामि।

(ख) पञ्चाङ्ग"चित्ताचिभ्रूहस्तपादैरङ्गैश्चेष्टादिसाम्यतः। पात्राद्यवस्थाकरणं पञ्चाङ्गाभिनयो मतः॥" इत्युक्तलक्षणकम्, आदिरस्य तम्, आदिपदेन "भवेदभिनयोऽवस्थाऽनुकारः स चतुर्विधः। आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा॥" इत्युक्तचतुरङ्गस्य ग्रहणम्; अभिनयं पात्रादेः चित्तादिभिः साम्यकरणम्। दीर्घिकेति।—दीर्घिका जलाशयभेदः, तस्याः अवलोकनाय दर्शनाय, यत् गवाक्षं वातायनं, तत्र गता अवस्थिता, यद्वातायनसन्निधौ अवस्थाने कृते दीर्घिका नयनगोचरीभवति तत्र अवस्थिता इत्यर्थः। प्रवात प्रकृष्टो वातस्तं मुक्तवायुमित्यर्थः, आसेवमाना भजमाना, गृह्णन्तीति यावत्।

(ग) अनुजानातु अनुमन्यताम्, आदिशतु इत्यर्थः, देव्याः सकाशं गन्तुमिति शेषः। अस्याः देव्या धारिण्याः। आर्य्यस्य मान्यस्य भवतः, परितोषनिवेदनेन सन्तोषविज्ञापनेन, मालविकाया नैपुण्यदर्शनेन भवान् सन्तुष्ट इति विज्ञापयित्वा इत्यर्थः। उत्साहं वर्द्धयामि आश्रितस्य साफल्यदर्शनेन आश्रयदातुः उत्साहो वर्द्धते इति भावः।

(घ) सखी सहचरी, राजमहिषीत्यर्थः। लब्धक्षणः लब्धः प्राप्तः, क्षणः व्यापारशून्यता, विश्राम इत्यर्थः येन सः तादृशः प्राप्तावसरः, इदानीं शिक्षादानव्यापाराभावात् विश्रामावसरः प्राप्त इत्यर्थः। "क्षणो व्यापारशून्यत्व-मुहूर्त्तोत्सवपर्वसु" इति रुद्रः।

मिश्रविष्कम्भकः। (ङ)

[ ततः प्रविशत्येकान्तस्थितपरिजनो मात्येन लेखहस्तेनान्वास्यमानो (च) राजा ]।

राजा। [ अनुवाचितलेखममात्यं विलोक्य ]। वाहतक! किं प्रतिपद्यते वैदर्भः? (छ)

अमात्यः। देव! आत्मविनाशम्। (ज)

राजा। निदेशमिदानीं श्रोतुमिच्छामि। (झ)

---

(ङ) मिश्रः सङ्कीर्णः, विष्कम्भकः विष्कम्भाति संयोजयति, अतीतानागतकथांशानां सामञ्जस्यं साधयतीति विष्कम्भकः भूत-भव्यघटनावलीनां नीच-मध्यमपात्राभ्यां सङ्क्षेपेण सूचकं नाटकाङ्गविशेषः, यथोक्तं दर्पणे—"वृत्त-वर्त्तिष्यमाणानां कथांशानां निदर्शकः। संक्षिप्तार्थस्तु विष्कम्भः आदावङ्कस्य दर्शितः॥" इति; स च मध्य-नीचपात्रैर्गणदास-चेटीद्वयैर्निर्वर्त्तितत्वात् सङ्कीर्ण इत्यवगन्तव्यं, यदुक्तं दर्पणे—"स तु सङ्कीर्णो नीच-मध्यमकल्पितः" इति।

(च) एकान्तेति।—एकान्ते एकस्मिन् पार्श्वे, सभागृहस्येति भावः, स्थितः परिजनः परिचारकवर्गः यस्य तादृशः। लेखेति।—लेखः लिपिविशेषः, हस्ते यस्य तादृशेन। अन्वास्यमानः पश्चादुपवेशनेन सेव्यमानः, "अन्वासितमरुन्धत्या" इतिवत् अनुपूर्वकासतेः सकर्मकत्वम्।

(छ) अन्विति।—अनु पश्चात्, राज्ञ इति भावः, वाचितः पठितः, राज्ञः पाठानन्तरं पठित इत्यर्थः, लेखः पत्रं येन तादृशम्। वाहतक इति अमात्यस्य नाम। "वाहतव" इति क्वचित् पाठः। प्रतिपद्यते विवेचयतीत्यर्थः, अस्माकं पत्रं प्राप्य किमवलम्बनीयत्वेन स्वीकरोतीति भावः। वैदर्भः विदर्भाधिपतिः।

(ज) आत्मविनाशमित्यनन्तरं प्रतिपद्यते इति शेषः।

(झ) निदिश्यते इति निदेशः पत्रः तम्, अभिसन्धिमिति यावत्, विदर्भराजस्येति शेषः, ममाज्ञाप्रतिपालने तस्य कीदृशः अभिप्रायः?

मम। इदमिदानीमनेन प्रतिलिखितं (ञ)—"पूज्येनाहमादिष्टः, (ट) 'पितृव्यपुत्रो भवतः कुमारो माधवसेनः प्रतिश्रुतसम्बन्धो ममोपान्तिकमुपसर्पन्नन्तरा त्वदीयेनान्तपालेनावस्कन्द्य गृहीतः, स त्वया मदपेक्षया सकलत्रसोदर्य्यो मोचयितव्यः' इति। (ठ) तत्र वो न विदितं यत्, तुल्याभिजनेषु भूमिधरेषु राज्ञां वृत्तिः, अतोऽत्र मध्यस्थः पूज्यो(ड)

---

यद्वा—केन पथेन सः मदाज्ञां पालयितुमिच्छतीत्यर्थः। "निदेशम्" इत्यत्र "सन्देशम्" इति पाठान्तरे—वाचिकं, वक्तव्यविषयमित्यर्थः।

(ञ) अनेन वैदर्भेण, विदर्भाधिपतिना इत्यर्थः, इदम् अनुपदं दर्शयिष्यमाणं, प्रतिलिखितं प्रत्युत्तरत्वेन लिखितम्।

(ट) इदं पदाभिधेयमाह, पूज्येनेत्यादि।—पूज्येन अग्निमित्रेण भवतेत्यर्थः। आदिष्टः आज्ञप्तः।

(ठ) भवतः वैदर्भस्य तव, पितृव्यपुत्रः कुमारो युवराजः, माधवसेनः माधवसेनाख्यः, प्रतिश्रुतसम्बन्धः प्रतिश्रुतः अङ्गीकृतः, सम्बन्धः सम्पर्कः, स्वकीयभगिन्या मालविकया सह मम परिणयबन्धनमिति यावत् येन तादृशः, प्रतिश्रुतवैवाहिकसम्बन्ध इत्यर्थः, मम अग्निमित्रस्य, उपान्तिकं समीपम्, उपसर्पन् आगच्छन्, आगन्तुमारभमाणः इत्यर्थः, अन्तरा आगमनपथमध्ये, त्वदीयेन वैदर्भसम्बन्धिना, अन्तस्य पर्य्यन्तस्य, पालेन रक्षकेण, सीमान्तरक्षिसेनापतिविशेषेणेत्यर्थः, अवस्कन्द्य अवरुध्य, गृहीतः निगृहीतः, वन्दीकृत इत्यर्थः। सः माधवसेनः, त्वया वैदर्भेण, मदपेक्षया, ममाग्निमित्रस्य, अपेक्षया अनुरोधेन, सकलत्र-सोदर्य्यः कलत्र-सोदर्य्याभ्यां सह, भार्य्यया भगिन्या च सहित इत्यर्थः। मोचयितव्यः परिहरणीयः। "मोचयितव्य" इत्यत्र "मोक्तव्यः" इति पाठान्तरम्। इत्यन्तमग्निमित्रपत्रमनूदितम्।

(ड) तदनूद्य प्रत्युत्तरयति, तत्र व इति।—तत्र तस्मिन् विषये, वो युष्माकम्, अग्निमित्रस्येत्यर्थः, (गौरवे बहुत्वम्) न विदितमित्यनन्तरं किम्? इति शेषः, "तत्र वो न विदितम्" इत्यत्र "एतन्ननु वो विदितम्"

भवितुमर्हति। सोदरा पुनरस्य ग्रहणविप्लवे विनष्टा, (ढ) तदन्वेषणाय यतिष्ये। अथ अवश्यमेव माधवसेनो मया पूज्येन मोचयितव्यः, श्रूयतामभिसन्धिः,—(ण)

आर्य्यसचिवं मुञ्चति यदि पूज्यः संयतं मम श्यालम्।
मोक्ता माधवसेनं ततोऽहमपि बन्धनात् सद्यः" ॥ ७ ॥

---

इति पाठान्तरे—ननु-शब्दो निश्चये आमन्त्रणे वा, "प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ननु" इत्यमरः; एतत् वक्ष्यमाणविषयं, वो विदितमेवेत्यर्थः; यत् तुल्याभिजनेषु एकवंशीयेषु, भूमिधरेषु राजसु, राज्ञां वृत्तिर्व्यवहारः, तुल्याभिजनेषु भूमिधरेषु राज्ञां वृत्तिः वो न विदितं किम्? अपि तु विदितमेव इत्यन्वयः। तथा च माधवसेनः अस्माकमेकान्वयजः, तत्र ज्ञातिभिः सह वैरं विशेषतो नृपाणां भवत्येव, अतः कारणात्, अत्र अस्मिन् विषये, पूज्योऽग्निमित्रो भवान्, मध्यस्थः मध्ये उभयपक्षसाहाय्यस्याभावे स्थितः, पक्षपातशून्यः इत्यर्थः, उभयोरेव पक्षयोः समव्यवहारसम्पन्न इति यावत्।

(ढ) सोदरेत्युक्तिः प्रकृतकथोपयोगिनी, तच्चाग्रे स्पष्टं भविष्यति। "सोदरा" इत्यत्र "सोदर्य्या" इति पाठान्तरम्। अस्य माधवसेनस्य, ग्रहणविप्लवे बन्धनार्थं परस्परसङ्घर्षकाले, विनष्टा अन्तर्हिता, कुत्रापि गता इत्यर्थः। "विनष्टा" इति प्रयोगस्य अमङ्गलव्यञ्जकत्वात् अश्लीलतादोषः।

(ण) माध्यस्थ्यं विहाय माधवसेनपक्षपातित्वं कर्त्तव्यं चेत् तत्राह, अथेति।—अथ पक्षान्तरे, माध्यस्थ्यं विहाय माधवसेनपक्षपातित्वे कर्त्तव्ये इति भावः, "अथ" इत्यत्र "अथवा" इति पाठान्तरम्। मया वैदर्भेण, (हेतुकर्त्रा) पूज्येन मान्येन, भवताऽग्निमित्रेण इत्यर्थः, (प्रयोजककर्त्रा) माधवसेनोऽवश्यं मोचयितव्यः त्याजयितव्यः, कारागृहात् बहिरानीय स्वपदे स्थापयितव्य इति भावः। तदा अभिसन्धिः अभिप्रायः, पणः इति यावत्, उद्देश्यो वा, ममेति शेषः।

अभिसन्धिमाह, आर्य्येति।—यदि पूज्यः मानार्हः भवान्, संयतम्

राजा। [ सरोषम् ]। कथं, कार्य्यविनिमयेन मयि व्यवह-रत्यनात्मज्ञः !! (त) वाहतकः। प्रकृत्यमित्रः प्रतिकूलकारी (थ) च मे वैदर्भः। तत् यातव्यपक्षे स्थितस्य पूर्वसङ्कल्पितसमुन्मूलनाय वीरसेनप्रमुखं दण्डचक्रम ( द ) आज्ञापय।

अमा। यदाज्ञापयति देवः।

राजा। अथ वा किं भवान् मन्यते ? ( ध )

---

इतःपूर्वं भवता कारायां बद्धम्, आर्य्यसचिवं श्रेष्ठामात्यम्, "आर्य्यसचिवम्" इत्यत्र "मौर्य्यसचिवम्" इति पाठे—मौर्य्यनामानं मन्त्रिणम्। मम श्यालं पत्नीभ्रातरं, मुञ्चति त्यजति, कारागृहात् निष्क्रामयतीत्यर्थः, ततः तदा, माधवसेनमप्यहं बन्धनात् कारागृहात्, सद्यः तत्क्षणमेव, मोक्ता मोचनकर्त्ता, स्यामिति शेषः। ( मोक्तेति शीलार्थतृणन्तत्वात् न तद्योगे कर्मणि षष्ठी ) उत्तरार्द्धे—"मोक्ता माधवसेनस्ततो मया बन्धनात् सद्यः" इति पाठे—मोक्ता इति कर्मणि लुट्॥ ७॥

(त) कार्य्यविनिमयेन कार्य्यस्य कर्त्तव्यकर्मणः, विनिमयेन व्यतीहारेण, परस्परपरिवर्त्तनेनेति यावत्। व्यवहरति आचरति। अनात्मज्ञः आत्मानं न जानातीति तादृशः, आत्मविस्मृत इत्यर्थः, निजबलानभिज्ञ इति यावत्।

(थ) प्रकृत्यमित्रः प्रकृत्या स्वभावेन, अमित्रः शत्रुः, विषयानन्तरितराजत्वात्। प्रतिकूलकारी अप्रियाचरणशीलः।

(द) यातव्यपक्षे युद्धार्थमभियास्यमानपक्षे, शत्रुपक्षे इति यावत्। स्थितस्य इत्यनन्तरं वैदर्भस्येति शेषः। पूर्वेति।—पूर्वं प्राक्, सङ्कल्पितं मन्त्रणया स्थिरीकृतमिति यावत्, यत् समुन्मूलनं समूलोत्पाटनं, सर्वथा विनाशसाधनम् इत्यर्थः तस्मै तदर्थम्। दण्डचक्रं दण्डयति अरिरेभिर्दण्डाः सैन्यानि, तेषां चक्रं समुदायम्।

(ध) अथवा पक्षान्तरे। किमित्यादि।—एकमात्रस्य मम विवेचना असङ्गताऽपि भवितुमर्हति, अतस्तवात्र विषये अभिप्रायं ज्ञातुमिच्छामि, यातव्यपक्षे तत्र सम्मतिरस्ति न वा ? इति भावः।

अमा। शास्त्रदृष्टम् (न) आह देवः,—

अचिराधिष्ठितराज्य शत्रु प्रकृतिष्वरूढमूलत्वात्।

नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्त्तुम् ॥ ८ ॥

राजा। तेन ह्यवितथं तन्त्रकारवचनम्। इदमेव निमित्त-मादाय समुद्योज्यतां (प) सेनापतिः।

अमा। तथा। [ इति निष्क्रान्तः ]।

---

(न) शास्त्रदृष्टं शास्त्रानुमोदितं, नीतिशास्त्रसम्मतमित्यर्थः। यातव्यत्वं समर्थयितुमाह, अचिरेति।—अचिरम् अल्पकालम्, अधिष्ठितम् आरूढं, प्राप्तमिति यावत्, राज्यं येन तथाभूतः, शत्रु रिपुः वैदर्भः, प्रकृतिषु प्रजासु, "प्रजा स्यात् प्रकृतौ जने" इत्यजयः, यद्वा—प्रकृतिषु अमात्यादिराज्याङ्गेषु, "स्वाम्यमात्यसुहृत्कोष-राष्ट्रदुर्गबलानि च। राज्याङ्गानि प्रकृतयः" इत्यमरः ; अरूढमूलत्वात् अदृढमूलत्वात्, एकत्र —अल्पदिनराज्यप्राप्त्या प्रकृतिरञ्जनावसराभावात् प्रजानां चित्तेषु असञ्जातप्रगाढ़ानुरागत्वादित्यर्थः,अन्यत्र—भूम्यन्तर्दूराप्रविष्टत्वेन शिथिलमूलत्वादित्यर्थः, नवसंरोपणेन अचिररोपितत्वेन, शिथिलः श्लथमूल इत्यर्थः, तरुरिव वृक्ष इव, समुद्धर्त्तुं समुत्पाटयितुं, विनाशयितुञ्च, सुकरः सुखकर., अक्लेशेनाल्पक्लेशेन वा निहन्तुं शक्य इत्यर्थः। उपमाऽलङ्कारः। आर्य्या जातिः ॥ ८ ॥

(प) तेन प्रकृतिषु अरूढ़मूलत्वेन हेतुना, यद्वा—विषयस्यास्य भवतोऽपि अनुमतत्वेन हेतुना, तन्त्रकारवचनं तन्त्रकाराणां नीतिशास्त्रप्रणेतॄणां शुक्र कामन्दकादीनां, वचनं वाक्यम्, अवितथं हि सत्यमेव, भवतु इति शेषः। इदमेव माधवसेनस्य कारागृहात् उद्धरणमेव, मत्प्रतिकूलाचरणमेव वा। "निमित्तम्" इत्यत्र "वचनम्" इति पाठान्तरम्। समुद्योज्यतां युद्धयात्रार्थम् उन्मुखीक्रियतां, भवतेति शेष., युद्धोद्योगं कर्त्तुं सेनापतिमादिशतु भवानित्यर्थः। "सेनापतिः" इत्यत्र "सेनाधिपतिः" इति पाठान्तरम्।

[ परिजनो यथाव्यापारं राजानमभितः (फ) स्थितः ]।

[ प्रविश्य विदूषकः ]।

विदू। आणत्तम्हि तत्तभवदा रण्णा—"गोदम ! चिंतेहि दाव उवाअं जह मे जदिच्छादिट्ठपडिकिदी मालविआ पच्चक्खदंसणा होदि त्ति"। मए अ तं तहा किदं, दाव से णिवेदेमि।* (ब)

[ इति परिक्रामति ]।

राजा। [ विदूषकं दृष्ट्वा ]। अयमपरः कार्य्यान्तरसचिवोऽस्माकमुपस्थितः। (भ)

विदू। [ उपगम्य ]। वड्ढदु भवम। †

---

* आज्ञप्तोऽस्मि तत्रभवता राज्ञा—गौतम ! चिन्तय तावदुपायं, यथा मे यदृच्छादृष्टप्रतिकृतिर्मालविका प्रत्यक्षदर्शना भवतीति। मया च तत् तथा कृतं, तावदस्य निवेदयामि इति सं०

† वर्द्धतां भवान् इति सं०

---

(फ) यथाव्यापारं व्यापारमनतिक्रम्य, यो यो यस्मिन् अधिकारे नियुक्तः, तं तमधिकारं कुर्वन्नित्यर्थः। अभितः उभयतः, राज्ञः उभयपार्श्वे इत्यर्थः।

(ब) यदृच्छेति।—यदृच्छया स्वैरितया, अतर्कितभावेनेत्यर्थः, "यदृच्छा स्वैरिता" इत्यमरः ; दृष्टा अवलोकिता, प्रतिकृतिः आलेख्यगता प्रतिमूर्त्तिः यस्याः सा। प्रत्यक्षदर्शना प्रत्यक्षम् अक्षिगोचरं, दर्शनं यस्याः सा। तत् चिन्तनं, तथा यथा मालविका प्रत्यक्षदर्शना भवितुमर्हति तथाविधोपायविषयकमित्यर्थः। अस्य राज्ञः।

(भ) कार्य्येति।—कार्य्यान्तरस्य अन्यविधकार्य्यस्य, राजकार्य्येतरकार्य्यस्य इत्यर्थः, मालविकायाः प्रत्यक्षतो दर्शनरूपस्येति भावः, सचिवः सहायः, विदूषकस्य शृङ्गारसहायकत्वादिति भावः, यदुक्तं दर्पणे—"शृङ्गारेऽस्य सहायाः विट-चेट-विदूषकाद्याः स्युः" इति बोध्यम्।

राजा। [ सशिरःकम्पम् ]। इतः ( म ) आस्यताम्।

[ विदूषक उपविष्टः ]।

राजा। कच्चिदुपायोपेयदर्शने व्यापृतं ते प्रज्ञाचक्षुः ? (य)

विदू। पओअसिद्धिं पुच्छ। * ( र )

राजा। कथमिव ?

विदू। [ कर्णे ]। एव्वं विअ † ( ल ) [ इत्यावेदयति ]।

* प्रयोगसिद्धिं पृच्छ इति सं०

† एवमिव इति सं०

( म ) सशिरःकम्पं शिरःकम्पनं मस्तकचालनं तेन सहितं, वामदक्षिणयोरन्यतरपार्श्वे मस्तकपरावर्त्तनेन उपवेष्टुम् इङ्गितं कृत्वेत्यर्थः। इतः अस्मिन् पार्श्वे।

( य ) कच्चिदिति अभिप्रायावेदकमव्ययं, "कच्चित् कामप्रवेदने" इत्यमरः; उपायेन हेतुविशेषेण, उपेयस्य प्राप्यस्य, प्रकरणादिह इष्टस्येत्यर्थः, अभिलषितमालविकादर्शनप्राप्तेरिति भावः, दर्शने साक्षात्करणे, साक्षात्कारसाधनोपायनिर्णय इत्यर्थः, ( दृशेर्ण्यन्तात् ल्युट्। निमित्तार्थे सप्तमी ) ते तव, प्रज्ञैव चक्षुः पदार्थपरिच्छेदकत्वात् बुद्धिरित्यर्थः, व्यापृतं नियुक्तं, स्वविषयग्रहणाय समर्थीकृतं यावत्, कच्चित् ? कच्चिदिति प्रश्नार्थकमव्ययं वा किमित्यर्थः, "प्रश्ने हर्षे मङ्गले च कच्चित् कामप्रवेदने" इत्यजयः; मालविकाया मह्यं दर्शनाय उपायं किं चिन्तितवान् ? इत्यर्थः। "कच्चिदुपायोपेयदर्शने" इत्यत्र "अपि कच्चिदुपेयोपायदर्शने" "कच्चिदुपेयोपायदर्शने" इति च पाठान्तरद्वयम्।

(र) प्रयुज्यतेऽसौ इति प्रयोगः फलं, मालविकायाः साक्षात् दर्शनरूपमिति यावत्, तस्य सिद्धिं साफल्यं, पृच्छ जिज्ञासय, किमुपायचिन्तनं पृच्छसीति भावः। अचिरेणैव मालविकासन्दर्शनानन्दं लप्स्यते भवानिति निगूढाशयः।

(ल) नाट्याचार्ययोर्गणदासहरदत्तयोर्विवादमुत्थाप्य अहमागतोऽस्मि, ततश्च शिष्यप्रयोगदर्शनादेव गरीयस्त्वागरीयस्त्वनिर्णयेऽवहते

राजा। साधु वयस्य! निपुणमुपक्रान्तम्, इदानीं दुरधिगमसिद्धावप्यस्मिन्नारम्भे वयं त्वाऽऽशंसामहे। (व) कुतः?—

सप्रतिबन्धं कार्य्यं प्रभुरधिगन्तुं सहायवानेव।

दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि॥ ९॥

---

गणदासेन स्वशिष्यया मालविकया अभिनयकरणसमये तस्याः प्रत्यक्षदर्शनं सुलभं भविष्यतीति विदूषकेण राज्ञः कर्णे "एवं विज्ञ" इत्यनेनाविदितम्; रहस्यवक्तव्यन्तु कर्णे "एवमेव" इत्यनेन वक्तव्यम्, उक्तञ्च—"कर्णे एवमेवेत्युक्त्वा श्राव्यः पश्चात् प्रयत्नतः" इति; तच्चानुपदं दर्शयिष्यते।

(व) निपुणं साधु, उत्तममित्यर्थः, उपक्रान्तम् आरब्धम्, अनुष्ठितमित्यर्थः। दुरधिगमा दुर्लभा, सिद्धिः साफल्यं यस्य तादृशेऽपि, स्वयं महिष्याः अनभिप्रेतत्वादसम्भवत्येऽपीति भावः, अस्मिन् मालविकासाक्षात्कारनिष्पादनरूपे, आरम्भे कार्य्ये, (आरभ्यते इति कर्मणि घञ्) त्वा त्वामेवेत्यर्थः, सहायमिति शेषः, इदानीम् अधुना, आशंसामहे मन्यामहे, तव बुद्धिबलेनैव मालविकां द्रष्टुं शक्ष्यामि इति सम्भावयामीत्यर्थः।

सुसहायस्य कार्य्यसिद्धेरवश्यम्भावितामाह, सप्रतिबन्धमिति।—सहायवानेव सहायविशिष्ट एव, जन इति शेषः, न तु असहाय इत्येवशब्दार्थः, सप्रतिबन्धं बाधकबाध्यं, विघ्नबहुलमित्यर्थः, कार्य्यं कार्य्यफलमित्यर्थः, अधिगन्तुं प्राप्तुं, प्रभुः समर्थः, भवतीति शेषः, "सप्रतिबन्धं कार्य्यम्" इत्यत्र "अर्थं सप्रतिबन्धम्" इति पाठान्तरम्। व्यतिरेकेण सहकारिसम्पन्नस्य कार्य्यहेतुत्वं समर्थयितुमाह, दृश्यमित्यादि।—सचक्षुरपि चक्षुष्मानपि, जन इति शेषः, अनेन दृष्टिकारणसम्पत्तिर्दर्शिता, दीपेन प्रदीपेन, आलोकहेतुपदार्थेनेति यावत्, विना, तमसि अन्धकारे, अनेन दृष्टिप्रतिबन्धो दर्शितः, स्थितमिति शेषः, दृश्यं द्रष्टुं योग्यम्, उद्भूतरूपवत् द्रव्यमित्यर्थः, न पश्यति नावलोकयति, दर्शने च आलोकवान् दीपादिः सहकारी "गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः" इत्युक्तेः। सख्युस्तव साहाय्येनैवाहं मालविकां प्रत्यक्षीकर्त्तुं समर्थो भवामीत्यस्य श्लोकस्य तात्पर्य्यम्॥ ९॥

[नेपथ्ये]। अलमलं बहु विकत्थ्य, राज्ञः समक्षमेवावयो-रधरोत्तरयोर्व्यक्तिर्भविष्यति। (अ)

राजा। [आकर्ण्य]। सखे! त्वत्सुनीतिपादपस्य पुष्पमुद्भिन्न-मिदम्। (ब)

विदू। फलं वि देक्खिस्ससि। * (स)

[ततः प्रविशति कञ्चुकी]। (द)

कञ्चु। देव! अमात्यो विज्ञापयति, अनुष्ठिता (क) प्रभोराज्ञेति। एतौ पुनर्हरदत्त-गणदासौ—

---

* फलमपि द्रक्ष्यसि इति सं

---

(अ) नटानां वेशपरिग्रहस्थानं नेपथ्यम्। अलं विकत्थ्य आत्मश्लाघां कृत्वा, आत्मगुणाविष्करणेनेत्यर्थः, अलं निष्प्रयोजनं, तत्साध्यं किमपि नास्तीत्यर्थः। निषेधार्थकाल-शब्दयोगे ल्यप्। अलमलमिति अवधारणे द्विरुक्तिः। अधरोत्तरयोः हीनश्रेष्ठयोः, अपकर्षोत्कर्षयोरित्यर्थः। व्यक्तिः प्रकाशः। हरदत्तस्योक्तिरियम्।

(ब) त्वदिति।—तव सुनीतिः उत्कृष्टनयः, मालविकादर्शनाय उद्भावितं प्रशंसितकौशलमिति यावत्, सा एव पादपः वृक्षः तस्य। उद्भिन्नम् उद्गतम्। इदं हरदत्त-गणदासयोरुत्कर्षापकर्षनिर्द्धारणाय अला-गमनरूपमित्यर्थः; तव कौशलेनैव व्यापारोऽयं सङ्घटित इति विदूषकं प्रति प्रशंसावचनम्।

(स) फलं मालविकायाः प्रत्यक्षीकरणरूपसिद्धिम्। "फलं वि अइरेण देक्खिस्ससि" इति क्वचिदधिकः पाठः।

(द) कञ्चुकी अन्तःपुराधिकृतवृद्धब्राह्मणविशेषः, तदुक्तम्—"अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्य्यार्थकुशलः कञ्चुकी-त्यभिधीयते॥" इति।

(क) अनुष्ठिता प्रतिपालिता।

उभावभिनयाचार्यौ परस्परजयैषिणौ ।
त्वां द्रष्टुमुद्यतौ साक्षाद्भावाविव शरीरिणौ ॥ १० ॥

राजा। प्रवेशय तौ ।

कञ्चु। यदाज्ञापयति देवः ।

[ इति निष्क्रम्य ताभ्यां (ख) सह प्रविष्टः ] ।

कञ्चु। इत इतो भवन्तौ । (ग)

गण। [ राजानं विलोक्य ]। अहो ! दुरासदो राजमहिमा—(घ)

न च न परिचितो न चाप्यरम्य-
श्चकितमुपैमि तथाऽपि पार्श्वमस्य ।
सलिलनिधिरिव प्रतिक्षणं मे
भवति स एव नवो नवोऽयमक्ष्णोः ॥ ११ ॥

---

हरदत्त गणदासौ विज्ञपयति, उभाविति ।—उभौ द्वौ, अभिनयाचार्यौ नृत्यगीतादिशिक्षकौ, परस्परम् अन्योऽन्यं, जयैषिणौ पराभवितुकामौ सन्तौ, शरीरिणौ मूर्त्तिमन्तौ, देहधारिणौ इत्यर्थः, साक्षात् प्रत्यक्षीभूतौ, भावौ इव नृत्य-गीतादिरूपौ पदार्थौ इव, नृत्यादिविषयकचेष्टाद्वयमिव वा, "भावः सत्तास्वभावाभि-प्रायचेष्टात्मजन्मसु । क्रियालीलापदार्थेषु—" इति मेदिनी ; त्वां भवन्तं, द्रष्टुम् अवलोकयितुम्, उद्यतौ समागतौ इत्यर्थः । अत्र उत्प्रेक्षाद्योतकेव-शब्दप्रयोगात् वाच्योत्प्रेक्षाऽलङ्कारः, यदुक्तं दर्पणे—"वाच्येवादिप्रयोगे स्यात्" इति, तेन च उभयोराचार्ययोः शिक्षादानविषये अतीव पटुत्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ १० ॥

(ख) ताभ्यां हरदत्त-गणदासाभ्याम् ।

(ग) इतः इतः अनेन अनेन, मार्गेणेति शेषः, भवन्तौ, आगच्छतामिति शेषः ।

(घ) दुरासदः दुष्प्राप', दुरतिक्रमणीय इति यावत् । राजमहिमा राज्ञः प्रभावः ।

राजमहिम्नो दुरासदत्वं प्रकटयति, न चेत्यादि ।—अयम् एष राजा,

भरतः। महत् खलु पुरुषाकारमिदं ज्योतिः। (ङ)
तथाहि—

न परिचितः न विज्ञातः, इति न, अपि तु बहुकालादेव अस्माकं परिचितः एव इत्यर्थः, बहुशः परिचितत्वात् एतत्समीपे न कश्चित् भयहेतुरस्तीति भावः; सम्भाव्यमाननिषेधप्रतिषेधार्थं नञ्-द्वयं, "द्वौ नञौ प्रकृतार्थं गमयतः" इत्युक्तेः; अरम्यः असौम्यदर्शनोऽपि, उद्धताकारोऽपीत्यर्थः, न च नैव, रमणीयाकारत्वादपि न भयहेतुरिति भावः, तथाऽपि परिचितत्व-रम्यदर्शनत्वेऽपि, चकितं भीतं यथा तथा, अस्य राज्ञः, पार्श्वम् अन्तिकं, "पार्श्वमन्तिके। कक्षाधोऽवयवे चक्रोपान्ते पर्शुगणेऽपि च॥" इति हैमः; उपैमि उपगच्छामि, रमणीयाकारत्वेऽपि भयहेतुत्वोक्तेः राज्ञोऽस्य समुद्रोपमगाम्भीर्य्यं महाप्रभावत्वञ्च सूचितम्। न केवलमस्य भयहेतुदर्शनत्वम्, अपि तु आश्चर्य्यदर्शनत्वमपीत्याह, सलिलेति।—स एव प्राक् बहुशो दृष्ट एव, अयं प्रत्यक्ष दृश्यमानो राजा, सलिलनिधिरिव सागर इव, भीषणत्व-रमणीयत्वयोः एकाधारः समुद्र इवेत्यर्थः, प्रतिक्षणं क्षणे क्षणे, मे मम, अक्ष्णोः नयनयोः, दृष्टिसमीपे इत्यर्थः, नवो नवः नूतनः नूतन इव, भवति प्रतिभातीत्यर्थः। अत्र प्रथमार्द्धे भयहेतोरपरिचितत्वारम्यत्वयोरभावेऽपि भयोत्पत्तिवर्णनात् विभावनाऽलङ्कारः, तथा च दर्पणे—"विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते" इति; द्वितीयार्द्धे च सलिलनिधिरिवेति इव-शब्दप्रयोगात् श्रौती उपमा, सा च "नव नव" इत्यत्र इव-शब्दाभावात् प्रतीयमानया गुणोत्प्रेक्षया सङ्कीर्य्यते, "वाच्येवादिप्रयोगे स्यादप्रयोगेऽपरा पुनः" इत्युक्तेः; तयोश्च विभावनया नैरपेक्ष्यात् संसृष्टिरिति। पुष्पिताग्रा वृत्तम्—"अयुजि न-युगरेफतो यकारो युजि तु न-जौ ज-र-गाश्च पुष्पिताग्रा" इति तल्लक्षणात्॥ ११॥

(ङ) महदिति।—इदं पुरतो दृश्यमानं, पुरुषाकारं नरमूर्त्तिधरं, महत् परमं, ज्योतिः खलु तेज एव, नायं पुरुषः, परन्तु सुमहान् तेजोराशिरिव नराकारं धृत्वा पुरतस्तिष्ठतीत्यर्थः।

द्वारे नियुक्तपुरुषानुमतप्रवेशः
सिंहासनान्तिकचरेण सहोपसर्पन् ।
तेजोभिरस्य विनिवर्त्तितदृष्टिपातै-
र्वाक्यादृते पुनरिव प्रतिवारितोऽस्मि ॥ १२ ॥

कञ्चु। एष देवः, उपसर्पतां (च) भवन्तौ।

उभौ। [उपेत्य]। विजयतां देवः।

---

राज्ञो महत्त्वं तेजस्वित्वं समर्थयितुमाह, द्वारे इति।—द्वारे द्वारदेशे, नियुक्तपुरुषेण अधिकृतमानवेन, दौवारिकेण इत्यर्थः, अनुमतः अनुज्ञातः, प्रवेशः अभ्यन्तरगमनं यस्य तथाभूतोऽपि, द्वाररक्षकेण गन्तुमनिषिद्धोऽपि इत्यर्थः, ("सापेक्षत्वेऽपि गमकत्वात् समासः" "प्रतियोगिपदादन्यत्" इत्यायुक्तेश्च 'द्वारे' इत्यधिकरणकारकस्य नित्यापेक्षतया असमस्तविशेषणत्वेऽपि समासः) "नियुक्तपुरुषानुमतप्रवेशः" इत्यत्र "नियुक्तपुरुषाभिमतप्रवेशः" इति पाठान्तरम्; तथा सिंहासनस्य अन्तिकचरेण समीपवर्त्तिना, सर्वदा राज्ञः पार्श्ववर-परिचारकविशेषेण इत्यर्थः, कञ्चुकिनेति यावत्, सह उपसर्पन् समीपं गच्छन्, अनेन विशेषणद्वयेन भवद्देगौरवत्यन्ताभावं एव सूच्यते, विनिवर्त्तितः विनिवारितः, प्रदीप्तप्रभत्वादिति भाव, दृष्टिपातः नयनविक्षेपः यैः तादृशैः, दृष्टिप्रतिघातिभिरित्यर्थः, अस्य राज्ञः, तेजोभिः प्रभाभिः, वाक्यादृते 'समीपं नागन्तव्यम्' इति निषेधवाक्यं विनाऽपि, पुनः भूयोऽपि, प्रतिवारित इव प्रतिषिद्ध इव, अस्मि भवामि, अनया उपजीविनामपि दुरासदत्वोक्त्या अन्येषां दुरासदत्वं तथा पुरुषाकारज्योतिष्ट्वं समर्थितमिति भावः। अत्र प्रतिवारित इवेति इव-शब्दप्रयोगात् वाच्या क्रियोत्प्रेक्षाऽलङ्कारः, किञ्च, प्रतिषेधवाक्यं विनाऽपि प्रतिवारितत्वरूपकार्य्योक्तेः विभावना, तदुभयोः परस्परनेरपेक्ष्यात् संसृष्टिः। वसन्ततिलकं वृत्तं—"ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति लक्षणात् ॥ १२ ॥

(च) देवः इत्यनन्तरं तिष्ठतीति शेषः। उपसर्पतां समीपं गच्छताम्।

राजा। स्वागतं भवद्भ्याम्? (छ) [पारजनं विलोक्य]। आसने तावदत्रभवतोः। (ज)

[उभौ परिजनोपनीतयोरासनयोरुपविष्टौ]।

राजा। किमिदम्॥ शिष्योपदेशकाले युगपदाचार्य्याभ्या-मत्रोपस्थानम्? (झ)

गण। देव। श्रूयताम्। मया सुतीर्थादभिनयविद्या सुशिक्षिता, दत्तप्रयोगश्चास्मि देवेन देव्या च परिगृहीतः। (ञ)

---

(छ) स्वागतम्? सुखेन आगतम्? इति स्वागतप्रश्नः। भवद्भ्यां भवतोरित्यर्थः, ("क्रियया यमभिप्रैति" इति सम्प्रदानसंज्ञा)। स्वागत-मिति कर्मणि क्तो वा, पक्षेऽस्मिन् सम्भाषणमिति कर्म्मपदम्।

(ज) आसने उपवेशनाथमासनद्वयम्, आनयेति शेषः। अत्रभवतोः मान्ययोः हरदत्त-गणदासयोः।

(झ) युगपत् एकदैव। उपस्थानम् आगमनं, कृतमिति शेषः।

(ञ) सुतीर्थात् उत्तमोपाध्यायात्, प्रसिद्धाध्यापकादित्यर्थः, न तु कस्माच्चिदविज्ञातनाम्न इति भावः। "तीर्थं शास्त्राध्वरक्षेत्रोपायनारी-रजःसु च। अवतारर्षिजुष्टाम्बु-पात्रोपाध्यायमन्त्रिषु॥" इति मेदिनी; ("आख्यातोपयोगे" इत्यपादानता) "सुतीर्थात्" इत्यत्र "तीर्थात्" "सुशिक्षिता" इत्यत्र "शिक्षिता" इति पाठान्तरद्वयम्। दत्तप्रयोगः दत्तः समर्पितः, प्रयोगः शिष्येभ्यः शिक्षादानार्थम् अभिनयाधिकारः यस्मै स तादृशः। देवेन राज्ञा भवता। देव्या महिष्या च, परिगृहीतः स्वीकृतः, मम अभिनयनैपुण्येन आत्मपक्षीयत्वेनाभ्युपगत इत्यर्थः, अनयोक्त्या अभिनयविषये आत्मनः अतीवनैपुण्यं प्रकटितम्, "अधीतिबोधाचरण-प्रचारणैः" इति न्यायादिति बोध्यम्। "दत्तप्रयोगश्चास्मि। देवेन देव्या च परिगृहीतः" इत्येवं पठिते—दत्तः शिष्येभ्यः वितरितः, प्रयोगः शिक्षाकर्म येन तादृशः। देवेन देव्या च परिगृहीतः अभिनयनिपुणो-ऽयमवश्यमेव नाट्याचार्य्याधिकारे नियोक्तव्य इति स्वीकृत इत्यर्थः। अस्मिन् पक्षे गणदासस्य देव्या परिगृहीतत्वेऽपि राजानुमोदनमन्तरेण तदधिकारप्राप्त्यसम्भवात् देवेनेत्युक्तमिति सुधीभिर्विभाव्यम्।

राजा। बाढ़ (ट) जाने। ततः किम्?

गण। सोऽहममुना हरदत्तेन प्रधानपुरुषसमक्षम् "अयं न मे पादरजसाऽपि तुल्यः" इत्यधिक्षिप्तः। (ठ)

हर। देव। अयमेव प्रथमं परिवादकरः, "अत्रभवतः किल मम च समुद्र-पल्वलयोरिवान्तरम्" इति। तदत्रभवानिमं मां च शास्त्रे प्रयोगे च विमृशतु। देव एव नौ विशेषज्ञः प्राश्निकः। (ड)

विदू। समत्थं पड़िसादम्। * (ढ)

---

* समर्थं प्रतिज्ञातम् इति सं०।

---

(ट) बाढं भृशम्, अत्यर्थमित्यर्थः। यद्वा—बाढ़ प्रतिज्ञायां, भवता यदुच्यते, तत् सर्वमेव सत्यमिति स्वीकरोमि इत्यर्थः, "भृश-प्रतिज्ञयोर्बाढ़म्" इत्यमरः।

(ठ) प्रधानेति।—प्रधानपुरुषाणाम् अमात्यादिश्रेष्ठराजपुरुषाणाम्; यद्वा—प्रधानस्य महामात्यस्य,प्रधानामात्यस्येत्यर्थः,"महामात्राः प्रधानानि" इत्यमरः, समक्षं प्रत्यक्षम्। अधिक्षिप्तः तिरस्कृतः, अवज्ञात इत्यर्थः।

(ड) अयमेव गणदास एव। परिवादकरः कुत्साकारी। अत्रभवतः मान्यस्य इति सोल्लुण्ठोक्तिः, आत्मानं माननीयत्वेन मन्यमानस्येत्यर्थः, आत्माभिमानिन इति यावत्, गणदासस्येति शेषः। पल्वलम् अल्पसरः, क्षुद्रजलाधार इत्यर्थः, "वेशन्तः पल्वलञ्चाल्पसर." इत्यमरः; अन्तरं भेदः, समुद्र-पल्वलयोर्यथा पार्थक्यं, तथा गणदासस्य हरदासस्य च पार्थक्यमित्यर्थः, समुद्रसदृशो गणदासः पल्वलसदृशश्च हरदत्त इत्येवम्प्रकारेण गणदास एव प्रथमं परिवादकरः इति निष्कर्षः। इमं गणदासम्। शास्त्रे भरतादिविरचितनाट्यशास्त्रे। प्रयोगे अभिनयकर्मणि। विमृशतु विचारयतु, इमं माञ्च परीक्ष्य उभयोरुत्कर्षापकर्षौ निश्चिनोतु इत्यर्थः। नौ आवयोः। विशेषज्ञः भेदाभिज्ञः। प्राश्निकः वादि-प्रतिवादिनौ प्रति विवादविषयकं प्रश्नं करोतीति (ठक्) प्रश्नद्वारा आवयोः श्रेष्ठत्वाश्रेष्ठत्वनिर्द्धारक इत्यर्थः।

(ढ) समर्थं हितं, युक्तिसङ्गतमित्यर्थः, "समर्थस्तु हिते शक्ते सम्बद्धे-

मद। प्रथमः कल्प। अवहितो देवः श्रोतुमर्हति। (ण)

राजा। तिष्ठ तावत्। पक्षपातमत्र देवी मन्यते, तदस्याः पण्डितकौशिकीसहितायाः समक्षमेव न्याय्यो व्यवहारः। (त)

विदू। सुट्ठु (थ) भवं भणादि। *

आचार्यौ। यद्देवाय रोचते।

राजा। मौद्गल्य! अमुं प्रस्तावं (द) निवेद्य पण्डित-कौशिक्या सार्द्धमाहूयतां देवी।

कञ्चु। यदाज्ञापयति देवः।

---

* सुष्ठु भवान् भणति इति सं०।

---

ऽप्यन्यलिङ्गकः।" इति मेदिनी; प्रतिज्ञातम् अङ्गीकृतम्, उभयोरुत्कर्षापकर्षविचारे हरदत्तेन यदुक्तं तत् युक्तिसङ्गतमेवेत्यर्थः।

(ण) प्रथमः कल्पः मुख्य पक्ष, राजा आवयोः गुणदोषौ निर्द्धारयतु इति प्रस्तावः समीचीन इत्यर्थः। अवहितः अप्रमत्तः, एकाग्रचित्तः सन् इत्यर्थः। श्रोतुम्, आवयोः सङ्गीतकमिति शेषः।

(त) तिष्ठ स्थिरो भव, क्षणमपेक्षस्व इत्यर्थः। अत्र अस्मिन् विचारे, देव्याः परोक्ष विवादनिर्णये कृते इत्यर्थः, पक्षपात पक्षे वादि-प्रतिवादिनोरन्यतरस्मिन्, पातः अन्यायाभिनिवेशः तम्, एकतरपक्षे अनुचितस्नेहप्रदर्शनमित्यर्थः। अस्याः देव्याः। पण्डितेति।—पण्डिता विदुषी, चासौ कौशिकी तन्नाम्नी परिव्राजिका चेति पण्डितकौशिकी, तत्सहितायाः तया सह अवस्थितायाः। न्याय्यः युक्तः। व्यवहारः विवादनिर्णयः, विचार इत्यर्थः, "वि नानार्थेऽव सन्देहे हरणं हार उच्यते। नानासन्देहहरणात् व्यवहार इति स्मृतः॥" इति कात्यायनोक्तेः वादि-प्रतिवादिनोः प्रश्नोत्तरादिना सदसद्विवेचनेन जय पराजयसम्पादकः विचारापरपर्य्यायः व्यापारविशेष इति यावत्।

(थ) सुष्ठु सम्यक्, समीचीनमित्यर्थः।

(द) मौद्गल्य इति कञ्चुकिनो नाम। प्रस्ताव प्रसङ्गं, विवादवृत्तान्तमित्यर्थः।

[ इति निष्क्रम्य सपरिव्राजिकया (घ) देव्या सह प्रविष्टः ]।

कञ्चु। इत इतो भवती। (न)

धारि। [ परिव्राजिकां विलोक्य ] भअवदि! हरदत्तस्स गण-दासस्स अ संरंभं कहं पेक्खसि? * (प)

परिव्राजिका। अलं स्वपक्षावसादशङ्कया, न परिहीयते प्रति-वादिनो गणदासः। (फ)

धारि। जइवि एव्वं, तहवि राअपरिग्गहो से पहुत्तणं उवहरदि † (ब)

* भगवति! हरदत्तस्य गणदासस्य च संरम्भं कथं प्रेक्षसे? इति सु०।

† यद्यप्येवं, तथाऽपि राजपरिग्रहोऽस्य प्रभुत्वमुपहरति।

(घ) सपरिव्राजिकया पण्डितकौशिकीसहितया।

(न) इतः इतः अस्यां दिशि अस्यां दिशि, अनया दिशा अनया दिशा इति वा। भवती साध्वी, मान्या राज्ञी इत्यर्थः, "भवत् युष्मत्-सतोस्त्रिषु" इति मेदिनी; आगच्छतु इति शेषः।

(प) संरम्भम् आटोपं, परस्परस्पर्द्धारूपमिति यावत्, यद्वा—संरम्भं क्रोधं, क्रोधहेतुकं परस्पराक्रोशमिति यावत्, "संरम्भः क्रोध आटोपः" इति त्रिकाण्डशेषः। "संरम्भम्" इत्यत्र "संरम्भे" इति पाठान्तरम्। कथं कीदृशं, पश्यसि? विवेचयसि? उभयोर्मध्ये कस्य जयं सम्भावयसि? इत्यर्थः।

(फ) अलं निषेधार्थकमव्ययम्। स्वेति।—स्वस्य आत्मनः, पक्षः सहायः, स्वाश्रित इत्यर्थः, गणदास इति यावत्, "पक्षः सहायेऽपि" इत्यमरः; तस्य अवसादः भङ्गः, पराजय इत्यर्थः, तच्छङ्कया, तत्सन्देहेन, स्वाश्रितगणदासस्य पराजयसन्देहः त्वया न करणीय इत्यर्थः। परिहीयते हीनो भवति, निकृष्टो भवतीत्यर्थः। प्रतिवादिनः प्रतिपक्षात् हरदत्तात्। कौशिक्याः स्त्रीत्वेऽपि लिङ्गित्वात् संस्कृतभाषणमवगन्तव्यं, तथाचोक्तं दर्पणे—"संस्कृतं सम्प्रयोक्तव्यं लिङ्गिनीषूत्तमासु च" इति।

(ब) यद्यपि एवं हरदत्तात् गणदासः यद्यपि अपरिहीनः, राज-

परि। अयि! राज्ञीशब्दभाजनम् (भ) अत्मानमपि चिन्तयतु भवती। पश्य—

अतिमात्रभासुरत्वं पुष्यति भानोः परिग्रहादनलः।
अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः॥ १२॥

परिग्रहः राजकर्तृकस्वीकारः, राज्ञा नाट्याचार्य्यपदे नियोग इत्यर्थः, "परिग्रहः परिजने पत्न्यां स्वीकार-मूलयोः" इति मेदिनी; अस्य हरदत्तस्य, प्रभुत्वम् आधिपत्यं, गणदासात् उत्कर्षमित्यर्थः, "प्रभुत्वं" इत्यत्र "प्राधान्यत्वं" इति पाठे—प्रधानत्वम् इति सं, प्राधान्यमिति तस्यार्थः। उपहरति उपहारमिव ददातीत्यर्थः, राज्ञा सम्मानितं निर्गुणमपि जनं लोकाः गुणवन्तं मत्वा तस्मै प्राधान्यं ददतीति निष्कर्षः।

(भ) अयि! इति सादरामन्त्रणे। राज्ञीति।—राज्ञी राजमहिषी, इति शब्दस्य वाक्यस्य, भाजनं पात्रं, राजमहिषीति वाक्येन परिचयदानस्य अधिकारिणमित्यर्थः, यदि राजपरिग्रहत्वेन हरदत्तस्य प्रभुत्वं सम्भवेत्, तदा राज्ञीपरिग्रहत्वेन गणदासस्यापि प्रभुत्वं कथं न सम्भवेत्? इति परिव्राजिकोक्तेः तात्पर्य्यम्।

राजपरिग्रहस्य प्रभावहेतुत्वमिव राज्ञीपरिग्रहस्यापि तथात्वं प्रतिपादयितुमाह, अतिमात्रेति।—अनलो वह्निः, "अनलः" इत्यत्र "अग्निः" इति पाठान्तरम्; भानोः सूर्य्यकिरणस्य, परिग्रहात् परि सर्वतोभावेन ग्रहणात्, रात्रौ स्वस्मिन् सूर्य्यकिरणसङ्क्रमणस्य अनुमतिप्रदानादिति यावत्, "सौरं तेजः सायमग्निं सङ्क्रमते" "आदित्यो वा अस्तं यन् अग्निमनुप्रविशति" "अग्निं वा आदित्यः सायं प्रविशति" "आदित्यो नक्तमग्निं सङ्क्रमते" इत्यादि श्रुतेः, अतिमात्रभासुरत्वं स्वभावत एव भास्वरत्वेऽपि दिवातन-वह्निमपेक्ष्य अतीव दीप्तिशालित्वं, पुष्यति धारयति, तथा चन्द्रोऽपि निशया रात्र्या, परिगृहीतः सम्बद्धः, पतित्वेन स्वीकृत इति भावः, महिमानं माहात्म्यं, दिवातन-चन्द्रमपेक्ष्य अतिमात्रभासुरत्वमिति यावत्, अधिगच्छति प्राप्नोति, भानुपरिगृहीतानलस्य भासुरत्वमिव यथा राजपरिगृहीतहरदत्तस्य प्रभुत्वं, निशापरिगृहीतचन्द्रस्य महिमानमिव तथा त्वत्परिगृहीतगण-

विदू। अविहा !! अविहा !! उवट्ठिदा देवी पीठमद्दिअं पंडिदकोसिइं पुरोकरिअ तत्तभोदी (स) धारिणी। *

राजा। पश्याम्येनां, येषा—

मङ्गलालङ्कृता भाति कौशिक्या यतिवेशया।
त्रयी विग्रहवत्येव सममध्यात्मविद्यया॥ १४॥

---

* अपिहा !! अपिहा !! उपस्थिता देवी पीठमर्दिकां पण्डितकौशिकीं पुरस्कृत्य तत्रभवती धारिणी इति स०

---

दासस्यापि प्रसुप्तरूपत्वमेव सम्भवेदिति भावः। अत्र भानु-निशापरिगृहीतानल-चन्द्ररूपस्मादप्रस्तुतात् प्रस्तुतस्य राजदम्पतीपरिगृहीत-हरदत्त-गणदासरूपस्य समस्य प्रतीतिः अप्रस्तुतप्रशंसाऽलङ्कारः, तदुक्तं दर्पणे —"क्वचित् विशेषः सामान्यात् सामान्यं वा विशेषतः। कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समम्॥ अप्रस्तुतात् प्रस्तुतञ्चेत् गम्यते पञ्चधा ततः। अप्रस्तुतप्रशंसा स्यात्—॥" इति; किञ्च, उपमानोपमेयतया प्रतीयमानयोरनयोः एकोऽपि अधिगमरूपः सामान्यो धर्मः पृथक् निर्देशात् प्रतिवस्तूपमाऽपि. यदुक्तं—"प्रतिवस्तूपमा सा स्यात् वाक्ययोर्गम्य-साम्ययोः। एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक्॥" इति। अग्नेः परिग्रहाभावे सूर्य्यस्यैवाभावात् कुतो भासुरत्वं स्यात्? उत्तरवाक्ये तु चन्द्रस्य दिवाऽपि सत्त्वात् माहात्म्याभावमात्र निशाभावे दर्शितमिह तु न तत्सम्भव इति विवेच्यम्। आर्य्या जातिः॥ १३॥

(स) अपिहा इत्यव्ययमाश्चर्य्यसूचक, सम्भ्रमद्योतनाय द्विरुक्तिः। "अविहा अविहा" इत्यत्र "अइ" (अयि इति स०) इति पाठान्तरम्। पीठमर्दिका पीठम् आसनं, मर्दयति उपवेशनेन पीडयतीति ताम् एकासनभागिनीं, सहायभूतामिति यावत्, "दूरानुवर्त्तिनि स्यात् तस्य प्रासङ्गिकेतिवृत्ते तु। किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्दाख्यः॥" इति दर्पणोक्तेः। पुरस्कृत्य अग्रे कृत्वा। तत्रभवती माननीया।

देवीं वर्णयति, मङ्गलेति।—विग्रहवत्या शरीरिण्या, अध्यात्मविद्यया ब्रह्मालोचनापरया वेदान्तप्रतिपाद्यविद्यया, समं सह, विग्रहवत्या

परि। [ उपेत्य ]। विजयतां देवः।

राजा। भगवति! अभिवादये।

परि।—

महासारप्रसवयोः सदृशक्षमयोर्द्वयोः।
धारिणी-भूतधारिण्योर्भव भर्त्ता शरच्छतम्॥ १५॥

---

इति पदं विभक्तिविपरिणामेन त्रयी इत्यनेनापि सह अन्वेतव्यं, तेन च विग्रहवती त्रयी इव त्रिवेदीव, कर्मप्रतिपादक-ऋगयजुःसामाख्यवेदत्रय-मिवेत्यर्थः, "स्त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी"इत्यमरः; यति-वेशया यतेः योगिनः, परिव्राजकस्येत्यर्थः, वेश इव वेशः परिच्छदः, काषायादिधारणमित्यर्थः यस्यास्तथाभूतया, कौशिक्या सम मङ्गलाल-ङ्कृता मङ्गलेन मङ्गलसूचकलक्षणेन, अलङ्कृता शोभिता, मङ्गलं शोभनं यथा भवति तथा अलङ्कृता इति वा, "या एषा" इति गद्यस्थवाक्येनान्वयः, या एषा धारिणी, भाति विराजते, शोभते इत्यर्थः। अत्र विग्रहवत्या अध्यात्मविद्यायाः त्रय्याश्च असम्भवत्वेऽपि तत्सम्भावनो-त्प्रेक्षणात् द्रव्योत्प्रेक्षाऽलङ्कारः, सा च इव-शब्देन द्योतनात् वाच्या इत्यव-गन्तव्यम्। भोगवैमुख्योत्तरफलया अध्यात्मविद्यया समं भोगविमुख्याः कौशिक्याः साम्यं, तथा त्रयीविहितयागादिकर्मणां स्वर्गभोगादिरूप-विषयसुखभोगप्रदत्वात् तया सह भोगासक्तायाः देव्या धारिण्याः सादृश्य-मवगन्तव्यम्। अनुष्टुप् वृत्तम्॥ १४॥

कौशिकी आशीर्वचनं प्रयुङ्क्ते, महासारेति।—महान् प्रभूतः, सारः बल, बलवत्ता बलजनकत्वञ्चेत्यर्थः, यद्वा—सारः बलं स्थिरांशश्च येषां ते महासाराः महाबलाः प्रभूतस्थिरांशाश्च, "सारो बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिषु" इत्यमरः; प्रसवाः अपत्यानि फलपुष्पादीनि च ययो-स्तयोः, "प्रसवो गर्भमोचने। उत्पादे स्यादपत्येऽपि फलेऽपि कुसुमेऽपि च॥" इति मेदिनी; सदृशी तुल्या, क्षमा सहनशीलता ययोस्तयोः, धारिणी तदाख्या महिषी, तथा भूतानि प्राणिनो धारयति वहति या सा भूत-धारिणी पृथिवी तयोः, द्वयोः उभयोरेव, शरदां वत्सराणां, शतं शत-

पारि। जेदु जेदु अज्जउत्तो। * (य)

राजा। स्वागतं देव्यै ? [परिव्राजिकां विलोक्य]। भगवति ! क्रियतामासनपरिग्रहः। [सर्वे उपविशन्ति]।

राजा। भगवति ! अत्रभवतोर्हरदत्त-गणदासयोः परस्परं विज्ञानसङ्घर्षिणोर्भगवत्या प्राश्निकपदमध्यासितव्यम्। (र)

---

* जयतु जयतु आर्य्यपुत्रः इति सं०

---

सङ्ख्यकवत्सरान् व्याप्य, "संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत् समाः" इत्यमरः; भर्त्ता प्रभुः, धारिण्याः भव: भूतधारिण्याः पालकश्च इति यावत्, भव भूत्वा जीवतादित्यर्थः। अत्र पूर्वोक्तविशेषणद्वयेन धारिणी-भूतधारिण्योः उपमानोपमेयभावापन्नयोः द्वयोरपि प्रस्तुतयोः भर्तृत्वरूपैकधर्माभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः, यदुक्तं दर्पणे— "पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्। एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता॥" इति तल्लक्षणात्; किञ्चात्र प्रस्तुतयोः प्रतिपाल्य-प्रतिपालकयोः भूतधारिणी-भर्त्रोः पृथिव्यग्निमित्रयोः दम्पतिव्यवहारसमारोपात् समासोक्तिरपि व्यज्यते, यदुक्तं—"समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥" इति, तदनयोरेकाश्रयस्थितिरूपः सङ्करः, धारि-धारीति छेकानुप्रासेन च संसृष्टिरिति। अनुष्टुप् वृत्तम्॥ १५॥

(य) "जेदु जेदु" इत्यत्र क्वचित् "जेदु" इति सकृत्पाठो दृश्यते। आर्य्ययोः पूज्ययोः श्वश्रू श्वशुरयोः, पुत्रः आर्य्यपुत्रः स्वामी इत्यर्थः, "ऊढायां देवि ! दयिते ! पुमानाह प्रियां प्रति। आर्य्यपुत्र ! च जीवेश ! नाथ ! नाम्नाऽऽह वल्लभम्॥" इत्युक्तेः; "आर्य्यपुत्रोऽथ भर्त्ता च स्वामी" इति हेमचन्द्रः।

(र) अत्रभवतोः मान्ययोः, आचार्य्यकर्मणि नियुक्तत्वात् गुणवत्त्वाच्च नाट्यव्यवसायिनोरपि हरदत्त-गणदासयोरत्रभवत्त्वेन निर्देशः कृतः राज्ञा इति मन्तव्यम्। विज्ञानेति।—विज्ञाने सङ्गीतकलायां ज्ञानविषये, सङ्घर्षः जिगीषा, अहमेव श्रेष्ठः अहमेव श्रेष्ठ इत्येवं स्पर्द्धा इत्यर्थः;

परि। [ सस्मितम् ]। अलमुपालम्भेन, पत्तने सति ग्रामे रत्न-परीक्षा ॥। (ल)

राजा। नैतदेवम्। पण्डितकौशिकी खलु भगवती। पक्ष-पातिनावहं देवी च। (व)

---

सोऽनयोरस्तीति तादृशयोः निज-निजश्रेष्ठत्वप्रतिपादनार्थं विवदमानयो-रित्यर्थः। प्राश्निकपदं प्राश्निकस्य प्रश्नकर्तुः, विचारकस्येत्यर्थः, पदं स्थानं, प्रश्नेन प्रयोगदर्शनेन च अनयोरुत्कर्षापकर्षनिरूपकाधिकारमित्यर्थः, अध्यासितव्यम् अधिष्ठातव्यम्। "अध्यासितव्यम्" इत्यत्र "अध्यासनीयम्" इति पाठान्तरम्।

(ल) उपालम्भेन तिरस्कारेण, परिहासेनेति यावत्, प्रकृतिवर्गेषु समदर्शिनि न्यायपरायणे भवादृशे नृपोत्तमे विचारके विद्यमाने स्वभावत एवाल्पबुद्धिकां स्त्रियं मां प्रति विचारभारार्पणं सभ्यानां हास्यकरत्वेन परिहासे पर्य्यवसानात् नियोगोऽयं मम तिरस्कार एवेति भावः। एतदेव समर्थयितुमाह, पत्तने इति।—पत्तने सति नगर्य्यां विद्यमानायां, "पूः स्त्री पुरी-नगर्य्यौ वा पत्तनं पुटभेदनम्" इत्यमरः; ग्रामे पल्ल्यां, स्वल्प-जननिवासस्थाने इति यावत्, रत्नपरीक्षा रत्नानां पद्मरागादीनां, परीक्षा सदसन्निरूपणं, भवति किम्? इति शेषः, नैव भवतीत्यर्थः, पत्तने सति ग्रामे रत्नपरीक्षा यथा परिहासाय, तथा भवति विद्यमाने मयि विचार-भारार्पणमिति निष्कर्षः।

(व) नेति।—एतत् भगवत्या यदुक्तं तत्, एवं तव उपालम्भाय, न इत्यर्थः। कथमेवं न? इत्याशंसायामाह, पण्डितेति।—पण्डिता पण्डा वेदोज्ज्वला बुद्धिरस्याः सञ्जाता इति पण्डिता सदसद्विचारक्षमा, तथा-विधा कौशिकी। खलु इति निश्चये, सदसद्विचारक्षमत्वात् अस्त्येव भवत्याः विचाराधिकार इति भावः। ननु किमर्थं भवद्भ्यां नानयोः परीक्षा क्रियते? इत्याह, पक्षपातिनाविति।—पक्षे वादि-प्रतिवादिनो-रेकस्मिन्, पातः आकर्षणं, स्नेह इति यावत्, सोऽनयोरस्तीति तादृशौ, स्व-स्वाश्रितस्य पक्षावलम्बिनौ इत्यर्थः, सम्भावितपक्षपातितादोषस्य विचार-

माधा। सम्यगाह देवः। मध्यस्था भगवती नौ गुणदोषतः परिच्छेत्तुमर्हति। (श)

राजा। तेन हि प्रस्तूयतां विवादः। (ष)

परि। देव! प्रयोगप्रधानं हि नाट्यशास्त्रं, किमत्र वाग्-व्यवहारेण। कथं वा देवी मन्यते? (स)

---

कस्य विचारभारार्पणं न समीचीनमिति भावः। विचारे कौशिक्या नियोगाय राज्ञः आग्रहस्य अयमाशयो यत्, राजा चेत् स्वयं विचारभार-ग्रहणं कुर्य्यात्, तदा देव्याः क्रोधभयात् प्रयोगदर्शनाय मालविकामाह्वातुं नैव शक्नुयात्, देवी चेत् विचारभारग्रहणं कुर्य्यात्, तदा राजसमीपे मालविकाया आनयनभयात् विवदमानयोः उभयोर्विरोधमेव शमयितुं यतेत, तथाच यदर्थं विदूषकेणायं विवादः समुत्थापितः, तत् सर्वमेव व्यर्थं स्यात्, कौशिक्या तु विचारे कृते समीचीनविचाराय तया अवश्यमेव मालविका आह्वयनीया, एवञ्च निजाभिलाषः सिध्येदेवेति मन्तव्यम्।

(श) मध्यस्था उभयोरेव समदर्शिनी, अपक्षपातिनीत्यर्थः। नौ आवां, गुण-दोषतः गुण-दोषाभ्याम्, उत्कर्षापकर्षनिर्द्धारणेनेत्यर्थः, परिच्छेत्तुं विभक्तां कर्त्तुम्, अयं श्रेष्ठः अयं हीन इति निरूपयितुमित्यर्थः।

(ष) तेन विचारकपदे कौशिक्या एव नियोगस्य सर्वानुमतत्वेनेत्यर्थः, प्रस्तूयताम् उत्थाप्यतां, विवादः व्यवहारः, कलहस्वरूपमित्यर्थः, सुविचा-राय विवादविषयः आरभ्यतामिति भावः।

(स) प्रयोगेति।—हि यस्मात्, नाट्यशास्त्रम् अभिनयविद्या, प्रयुज्यते इति प्रयोगः नृत्यगीताद्यभिनय एव, प्रधानं मुख्यं यस्य तत् तथोक्तम्, अत एव अत्र नाट्यशास्त्रे, अभिनयविषयकगुणदोषनिरूपणे इत्यर्थः, वाग्व्यवहारेण वाचा विवादेन, किम् अलं, वाग्व्यवहारेण किमपि साध्यं नास्तीत्यर्थः। वाग्व्यवहारं परित्यज्य प्रयोगदर्शनेनैव जय-पराजयौ निर्णेतव्यौ इत्याशयः। वा अथवा, देवी महिषी, कथं किं, मन्यते? विवेचयति? अत्र विषये देव्याः किं मतम्? इत्यर्थः।

देवी। जइ मं पुच्छसि, तदा एदाणं विवादो एव्व ण मे रुच्चदि। * (छ)

गण। देवि! न मां समानविद्यतया परिभवनीयमवगन्तु-मर्हसि। (ज)

विदू। भो! पेक्खामो उअरंभरिसंवादं, किं मुधा वेदण-दाणेण एदाणं। † (झ)

* यदि मां पृच्छसि तदेतयो' विवाद एव न मे रोचते इति स०।

† भोः! पश्याम उदरम्भरिसंवादम्। किं मुधा वेतनदानेन एतयोः? इति स०।

(छ) मे मह्यं, ("रुच्यर्थानां प्रीयमाणः" इति चतुर्थी) रोचते प्रीतये भवति, विवाद एव न रोचते, प्रयोगस्य तु का कथा? इति भावः। एतेन अभिनयप्रदर्शनार्थं मालविकाया राजसमीपे उपस्थापनं देव्या अनभिप्रेतं तथा स्वाश्रितस्य गणदासस्य पराभवाशङ्काऽपि व्यज्यते।

(ज) समानेति।—समाना अभिन्ना, एकविधा इत्यर्थः, विद्या ज्ञानं ययोः तस्य भावः तत्तया, आवयोरुभयोरेव शिक्षा तुल्या इत्याशङ्क्य इति भावः, परिभवनीयं पराजेतव्यं, हरदत्तेनेति शेषः, अवगन्तुम् अवधारयि-तुम्, आशङ्कितुमिति यावत्। मम हरदत्तस्य च शिक्षा एकविधैव इति अवधार्य्य मम पराजयाशङ्का न कर्त्तव्या भवत्या, यतो हरदत्तादहं शिक्षा-दाने प्रयोगप्रदर्शने च श्रेष्ठ एव, समानविद्ययोरेकतरस्य अन्यतरस्मात् पराजयः सम्भवति, न तु श्रेष्ठस्य हीनादिति भावः। "अवगन्तुम्" इत्यत्र "अवमन्तुम्" इति पाठे—अवज्ञातुमित्यर्थः।

(झ) उदरं बिभर्त्तीति उदरम्भरिः स्वोदरमात्रपूरकः, ("फलेग्रहि-रात्मम्भरिश्च" इति खिः, "भृञः कुक्ष्यात्मनोर्मुम् च" इति मुम्) "उभौ त्वात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरके" इत्यमरः; तयोः उदरम्भर्य्योः परार्थानुसन्धानमन्तरेण केवलं स्वार्थानुसन्धानतत्परयोरित्यर्थः, संवादं जय-पराजयरूपं व्यवहारम्। मुधा वृथा, अहेतुकमित्यर्थः, "व्यर्थके तु वृथा मुधा" इत्यमरः; यदर्थमेतौ वेतनं गृह्णीतः, तत्र पारदर्शिता अस्ति

देवी। णं कलहप्पिओसि। *

विदू। मा एव्वं चंडि! अण्णोण्णकलहप्पिआणं मत्तहत्थिणं एक्कदरस्सिं अणिज्जिदे कुदो उवसमो? † (ग)

राजा। ननु स्वाङ्गसौष्ठवातिशयमुभयोर्द्दष्टवती भगवती? (घ)

परि। अथ किम्। (ङ)

---

* ननु कलहप्रियोऽसि इति सं०।

† मैवं चण्डि! अन्योऽन्यकलहप्रियाणां मत्तहस्तिनामेकतरस्मिन्-निर्जिते कुत उपशमः? इति सं०।

---

न वा इत्यवश्यमेव परीक्षितव्यम्, अन्यथा केवलं स्वोदरपूरणार्थमनयो-र्वेतनदानं निष्प्रयोजनमेवेत्याशयः। स्वाभीष्टसम्पादनाय एतयोरुत्तेजनार्थं विदूषकस्य ईदृशी वक्रोक्तिरिति मन्तव्यम्। "भोः! पेक्खामो उअरंभरि-संवादं" इत्यत्र "भोदि! पेक्खामो उरब्भसंवादं" इति पाठे—भवति! पश्याम उरभ्रसंवादम् इति सं०। उरब्भो मेषः, उरब्भसंवादं मेषयुद्धमित्यर्थः।

(ग) चण्डि! अत्यन्तकोपने! अतीव कोपनस्वभावे इत्यर्थः, "चण्डस्त्वत्यन्तकोपनः" इत्यमरः; मा एवं मां कलहप्रिय इति यत् भवती अवगच्छति, तत् नैवेत्यर्थः, स्वयमेवैतौ कलहे प्रवृत्तौ, नात्र मम कोऽपि दोष इति भावः। कुतः कथं, केन प्रकारेणेत्यर्थः, उपशमः शान्तिः, कलहनिवृत्तिरित्यर्थः।

(घ) स्वाङ्गेति।—स्वयोः आत्मनोः, अङ्गस्य उपायस्य, जीवनोपायस्य नृत्यगीतादेरित्यर्थः, "अङ्गं गात्रे प्रतीकोपाययोः पुं भूम्नि नीवृति" इति मेदिनी; यद्वा—स्वाङ्गस्य स्वेन प्रयुक्तस्य नाट्याङ्गस्य नृत्यगीतादेरित्यर्थः, सौष्ठवातिशयं प्रशंसाधिक्यं, नैपुण्यप्राचुर्यमित्यर्थः। "सुष्ठु प्रशंसने" इत्यमरः। उभयोः हरदत्त-गणदासयोः।

(ङ) अथ किम् इति अङ्गीकारार्थकमव्ययम्, "अङ्गीकारेऽपि चाथ किम्" इति हारावली; दृष्टवतीत्यर्थः।

राजा । तदिदानीमतः परं किमाभ्यां प्रत्याययितव्यम् ?(च)

परि । तदेव वक्तुकामाऽस्मि—(छ)

श्लिष्टा क्रिया कस्यचिदात्मसंस्था
सङ्क्रान्तिरन्यस्य विशेषयुक्ता ।
यस्योभयं साधु स शिक्षकाणां
धुरि प्रतिष्ठापयितव्य एव ॥ १६ ॥

---

(च) तत् तस्मात्, स्वाङ्गसौष्ठवदर्शनादित्यर्थः। अतः परं प्रयोग-प्रदर्शनादपरम्, अभिनयं विना इत्यर्थः, आभ्यां हरदत्त-गणदासाभ्याम् । प्रत्याययितव्यं बोधयितव्यमित्यर्थ', अभिनयप्रदर्शनमन्तरेण अन्येन केनोपायेन आभ्यां निजनैपुण्यं प्रकटयितव्यमिति निष्कर्षः। (प्रतिपूर्वात् इणो ण्यन्तात् तव्यः, बोधार्थत्वात् न गम्यादेशः।

(छ) तदेव आभ्यामिदानीं यत् प्रत्याययितव्यं तदेवेत्यर्थः ।

हरदत्त-गणदासयोरुत्कर्षापकर्षनिर्द्धारणोपायमाह, श्लिष्टेति ।—कस्यचित् आचार्य्यस्य, आत्मसंस्था स्वनिष्ठा, आत्मन्येव अवस्थिता इत्यर्थः, क्रिया अभिनयादिव्यापारः, श्लिष्टा विशिष्टा, प्रशंसनीया इत्यर्थः, उत्तरत्र "विशेषयुक्ता" इति प्रयोगदर्शनात् श्लिष्टा इत्यस्य तथाऽर्थत्वमिति बोध्यं, केचित् अभिनयनैपुण्येन लोकसमाजे अतीव समादरं लभन्ते, किन्तु शिक्षादानकर्म्मणि तेषां प्रतिष्ठा नास्तीति भावः, "श्लिष्टा" इत्यत्र "श्लिष्टा" इति पाठान्तरम्, अन्यस्य अपरस्य, कस्यचिदाचार्य्यस्येत्यर्थः, सङ्क्रान्तिः प्रतिफलनं, स्वशिष्ये सङ्क्रमणमित्यर्थः, एवं गातव्यम्, एवमङ्गचालना कर्त्तव्या इत्यादि वाचिकोपदेशद्वारा क्रियानुष्ठानद्वारा च शिष्येषु निजविद्यासञ्चार इति यावत्, विशेषयुक्ता विशिष्टा, उत्कृष्टा इत्यर्थः, भवतीति शेषः, केषाञ्चिदाचार्य्याणाम् असाधारणेन शिक्षादाननैपुण्येन तच्छिष्याः सर्वत्र समादृता भवन्ति, परन्तु ते स्वयं रङ्गभूमौ निजनैपुण्यं प्रदर्शयितुमसमर्था भवन्तीति भावः, यस्य आचार्य्यस्य, उभयम् आत्मसंस्था क्रिया शिष्य-सङ्क्रान्तिश्च द्वयमेव, साधु शोभनं, यः स्वयमभिनयकरणे शिक्षादाने च उभयत्रापि कुशलोति यावत्, भवेदिति शेषः, स एव जनः, शिक्षकाणाम्

विदू। सुदं अज्जेहिं भअवदीए वअणं ? एस पिंडितत्थो, उवदेसदंसणादो णिण्णओत्ति। * (ज)

हर। परमभिमतं नः। (झ)

गण। देवि! एवं स्थितम्। (ञ)

देवी। जदा उण मंदमेधा सिस्सा उवदेसं मलिणेदि, तदा आआरिअस्स दोसो णु ? † (ट)

* श्रुतमार्य्याभ्यां भगवत्या वचनम् ? एष पिण्डितार्थः, उपदेश-दर्शनान्निर्णय इति सं०।

† यदा पुनर्मन्दमेधा शिष्य उपदेशं मलिनयति, तदा आचार्य्यस्य दोषो नु ? इति सं०।

उपदेशकानां, धुरि अग्रे, प्रतिष्ठापयितव्यः संस्थापयितव्यः, सर्व्वेषामेव शिक्षकाणाम् अग्रगण्यत्वेन गणयितव्य इत्यर्थः। एतयोरुभयोः यस्य उक्तगुणद्वयं वर्त्तते स एव श्रेष्ठ इति भाव.। अत्र अप्रस्तुतात् शिक्षक-रूपात् सामान्यात् हरदत्त गणदासरूपस्य विशेषस्य प्रस्तुतस्य प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कार', स च 'स एव शिक्षकाणां धुरि प्रतिष्ठापयितव्य. नान्य.' इति आर्थ्या परिसङ्ख्यया सङ्कीर्य्यते। इन्द्रोपेन्द्रवज्रयोरुपजाति वृत्तम्—"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता." इति लक्षणात्॥ १६॥

(ज) आर्य्याभ्यां मान्याभ्यां भवद्भ्यां हरदत्त-गणदासाभ्याम्। पिण्डितार्थ निष्कृष्टार्थः, सारार्थ इत्यर्थः। उपदेशदर्शनात् उपदिष्टस्य शिष्यस्य प्रयोगनैपुण्यावलोकनात्।

(झ) नः अस्माकं, परम् अत्यर्थं, सर्व्वथा इत्यर्थः, अभिमतं सम्मतं, जय-पराजयनिर्णयाय प्रस्तावितपरीक्षादाने अहं सर्व्वथा स्वीकृत एवेत्यर्थः।

(ञ) एवम् ईदृशं, स्व-स्व-शिष्येण प्रयोगप्रदर्शनरूपसिद्धान्तः इति यावत्, स्थितं स्थिरीकृतमित्यर्थः, पण्डितकौशिकीप्रभृतिभिरिति शेषः। अत्र भवत्याः कोऽभिप्रायः ? इति गणदासोक्तेः गूढाशयः।

राजा। देवि! एवमापद्यते, विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयति । (ठ)

---

(ट) मन्दमेधाः अल्पबुद्धिः। उपदेशं शिक्षाव्यापारं, मलिनयति दूषयति, बोधासामर्थ्यात् विपरीतभावेन बोधात् वा आचार्योपदेशं यथायथं ग्रहीतुं न शक्नोतीत्यर्थः। "मलिणेदि" इत्यत्र "मलिणेंदि" इति पाठे—मलिनयन्ति इति सं। अस्मिन् पक्षे "मंदमेधा सिस्सा" इत्यस्य मन्दमेधाः शिष्याः इति स०। नु इति प्रश्ने, "नु पृच्छायां वितर्के च" इत्यमरः ; मन्दमतेः शिष्यस्य बोधसामर्थ्याभावजनिताभिनयदोषोऽपि किमाचार्यस्यैव दोषत्वेन परिगणितो भवेत्? इति निष्कर्षः।

(ठ) एवं वक्ष्यमाणप्रकारम्, आपद्यते कीर्त्यते, लोकैरिति शेषः। किमापद्यते? इत्याह, विनेतुरिति।—अद्रव्यस्य अवस्तुनः, यद्वा—अद्रव्यस्य अभव्यस्य, अयोग्यस्य इत्यर्थः, अल्पबुद्धिशिष्यस्येति यावत्, "द्रव्यं भव्ये धने क्ष्मादौ जतुद्रुमविकारयोः। विनये भेषजे रीत्याम्" इति हैमः, "भव्यं शुभे च सत्ये च योग्ये भाविनि च त्रिषु" इति मेदिनी ; यद्वा—अद्रव्यस्य अविनयस्य, विनयशून्यस्येत्यर्थः, परिग्रहोऽपि ग्रहणमपि, अपिकारात् सुद्रव्यग्रहणमिति गम्यते, तीक्ष्णबुद्धिसुयोग्यशिष्यग्रहणस्य का कथा, अल्पबुद्धिशिष्यपरिग्रहोऽपि इति तस्यार्थ., "कृदभिहितभावो द्रव्यवत् प्रकाशते"इति न्यायात् परिगृहीतमद्रव्यमपि इत्यर्थो वा, विनेतुः शिक्षकस्य, बुद्धेः प्रतिभायाः, लाघवं मनोज्ञतां, सौन्दर्यमित्यर्थः, प्राखर्यमिति यावत्, प्रकाशयति प्रकटयति, "लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत्—"इति मेदिनी ; यो हि विनेता विनयननैपुण्येन निर्बोधमपि शिष्यं सुशिक्षितं कर्त्तुं शक्नोति, सामाजिकास्तमेव सुशिक्षकं निर्णीय प्रशंसन्तीति भावः। एतेन मालविका अल्पकालमेव आरब्धशिक्षा अपि गणदासस्य शिक्षादाननैपुण्येन निपुणतयैव अभिनीय शिक्षकस्य तस्य यशः प्रख्यापयिष्यतीति व्यज्यते। यद्वा—बुद्धेः लाघवं निःसारतां, हीनतामिति यावत्, शिष्यनिर्वाचने अनभिज्ञत्वात् इति भावः, शिष्यत्वग्रहणाय

देवी। [जनान्तिकम्]। कहं दाणिं? [गणदासं विलोक्य प्रकाशम्]। अलं अज्जउत्तस्स उस्साहकारणं मणोरहं परिपूरिअ। विरम णिरत्थादो आरंभादो। * (ड)

विदू। सुट्ठु भोदी भणादि। भो गणदास! संगीदअपदोवलंभिअसरस्सइउवाअणमोदआई खादमाणस्स किं दे मुहणिग्गहेण विवादेण? † (ढ)

* कथमिदानीम्? अलमार्य्यपुत्रस्योत्साहकारणं मनोरथं परिपूर्य्य। विरम निरर्थादारम्भात् इति स०।

† सुष्ठु भवती भणति। भो गणदास! सङ्गीतकपदोपलब्धसरस्वत्युपायनमोदकानि खादतः किं ते मुखनिग्रहेण विवादेन? इति स०।

समागतस्य जनस्य बुद्धिपरीक्षामकृत्वैव शिष्यरूपेण ग्रहणमेव शिक्षकस्य दोषाय, का कथा शिक्षादानस्य इति भावः।

(ड) जनान्तिकं "त्रिपताककरेणान्यान् अपवार्य्यान्तरा कथाम्। अन्योऽन्यामन्त्रणं यत् स्यात् जनान्ते तत् जनान्तिकम्॥" इत्युक्तलक्षणम्। "जनान्तिकम्" इत्यत्र "स्वगतम्" इति पाठान्तरं साधु। कथमिदानीम्? इदानीं केनोपायेन, मालविकाया अत्रानयनं प्रतिरुणध्मि? इति शेषः। उत्साहकारणम् उत्साहस्य अध्यवसायस्य, मालविकया अभिनयकरणार्थम् उद्यमस्य औत्सुक्यस्य वा इत्यर्थः, कारणं हेतुभूतं, मनोरथं मालविकाया दर्शनाभिलाषं, परिपूर्य्य पूरयित्वा, अलं निष्प्रयोजनम्, आर्य्यपुत्रस्य अभिलाषपूरणाय किमपि प्रयोजनं न पश्यामीत्यर्थः। (निषेधार्थक-अलंशब्दयोगे ल्यप्) निरर्थात् निष्प्रयोजनात्। "णिरत्थादो" इत्यत्र "णिरत्थभादो" इति पाठे—निरर्थकात् इति स०। आरम्भात् उद्यमात्, परस्परविवादव्यापारादिति भावः। राज्ञः समक्षमेव गणदासं विलोक्य प्रकाशम् "अलम् अज्जउत्तस्स—" इत्याद्युक्तिः असङ्गततया प्रतिभाति, तेन हि "[स्वगतं] कहं दाणिं? [गणदासं विलोक्य जनान्तिकम्] अलं अज्जउत्तस्स उस्साहकारणं मणोरहं परिपूरिअ। [प्रकाशम्] विरम णिरत्थादो आरंभादो" एवं पाठकल्पना साध्वीति मन्यामहे वयम्।

गण०। सत्यमयमेवार्थो देवीवाक्यस्य। श्रूयताम्—अवसरप्राप्त-मिदानीम्—(ण)

---

(ढ) सङ्गीतकेति।—सङ्गीतकपदेन नृत्यगीतादिरूपेण वस्तुना, सङ्गीतचर्चाकरणेन इत्यर्थः, "नृत्यं गीतं तथा वाद्यं त्रयं सङ्गीत-मुच्यते" इति सङ्गीतरत्नाकरः; "पद व्यवसितित्राण-स्थानलक्ष्माङ्घ्रि-वस्तुषु" इत्यमरः; उपलब्धानि अनुभूतानि, प्राप्तानीति यावत्, सरस्वत्याः सङ्गीताधिष्ठात्रीदेव्याः, उपायनानि उपहारभूतानि, "उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरः; मोदकानि भक्ष्य-विशेषान्, तव सङ्गीतनैपुण्येन गीतानुरागिभिः सरस्वतीप्रीत्यर्थं सरस्वती-सेवकाय तुभ्यं दत्तानीति भाव., खादत. भक्षयतः, ("खादमाणस्स" इत्यस्य खादमानस्य इति संस्कृते कृते "आत्मनेपदमिच्छन्ति परस्मै-पदिना क्वचित्" इत्युक्तेः परस्मैपदिनः खादधातोः आत्मनेपदप्रयोग.)। "संगीदपद लंभिग्र सरस्सईए" इति पाठान्तरम्; मुखनिग्रहेण मुखस्य निग्रहः संयमनं दण्डो वा यस्मात् तादृशेन, विविधसुखाद्यभोजनलाभ-प्रतिबन्धकेनेति यावत, विवादेन कलहेन, मुखस्य क्षोभजनकेन शुष्क-कलहेनेत्यर्थः, किम्? किं फलम्? "सुहनिग्गहेण" इति पाठे सुखनिग्रहेण इति स०। भोजनानन्दविघातकेनेति तस्यार्थः। तव सङ्गीतनैपुण्येन तुष्टा. जनाः विविधसुखाद्यमोदकादिकं तुभ्यमुपहारं ददति. तद्भक्षणेन त्वं प्रचुरमानन्दमनुभवसि च, हरदत्तेन सह विवादे तव पराजयश्चेत् भवेत्, तदा जना. त्वा न पुनः किमपि उपायनं दद्युः, ततश्च ते मुखनिग्रह एव अस्य विवादस्य फल भविष्यति, अत एव ईदृश-विवादात् निवृत्तिरेव ते कल्याणायेति निष्कर्षः। देव्या अनभि-मतत्वेन तदसन्तुष्टिभयात् गणदासश्चेत् मालविकया अभिनयप्रदर्शनात् विरमेत्, तदा राज. मनोरथव्याघातमाशङ्क्य गणदासस्योत्तेजनार्थं विदूषकस्येयं सोल्लुण्ठोक्तिरिति।

(ण) अयमेव अर्थ' निरर्थकविवादात् विरतिरूपः अर्थः। यद्वा—देवीवाक्यस्य अयमेव अर्थ. अभिधेयः, अभिप्राय इत्यर्थः, विदूषकेण यादृशः

लब्धास्पदोऽस्मीति विवादभीरो-
स्तितिक्षमाणस्य परेण निन्दाम्।
यस्यागमः केवलजीविकायै
तं ज्ञानपण्यं वणिजं वदन्ति॥ १७॥

---

अभिप्रायः प्रकटितः ईदृश एवार्थं इति यावत्, लोकैः श्रूयते इति शेषः, ... सत्यमेव इत्यर्थः। अवसरप्राप्तं लब्धावकाशं, मम वाक्यमिति शेषः, एतावन्तं कालं भवतामविरामवाक्यप्रयोगात् मम वचनावसरो नासीत्, इदानीं वचनावसरो मया लब्धः, अतो मे वक्तव्यं शृणु इति निष्कर्षः।

निजवक्तव्यं विवृणोति, लब्धास्पद इति।—अस्मि अहम्, अस्मीति अहमर्थे अव्ययं, लब्धं प्राप्तम्, आस्पदं प्रतिष्ठा येन तथाभूतः, "प्रतिष्ठा कृत्यमास्पदम्" इत्यमरः; जनसमाजे प्राप्तसम्मान इत्यर्थः, इति अस्माद्धेतोः, विवादभीरोः विवादात् कलहात्, भीरोः प्राप्तभयस्य, विवादे कदाचित् पराजयशङ्कया कलहविमुखस्य इत्यर्थः, परेण अन्येन, अन्यकर्तृकामित्यर्थः, निन्दां कुत्सां, "मूर्खोऽयं पराजयशङ्कया न केनापि सह विवदितुमुत्सहते" इत्यमपवादमित्यर्थः, (स्त्रीविहिताकारयोगे वा षष्ठीति कर्त्तरि तृतीया) तितिक्षमाणस्य, सहमानस्य, यस्य जनस्य, आगमः शास्त्रं, शास्त्रज्ञानमित्यर्थः, सङ्गीतादि-यत्किञ्चित् शास्त्रविद्या इति यावत्, केवलजीविकायै जीवनरक्षामात्रार्थं, भवेदिति शेषः, तं तादृशं जनं, ज्ञानं विद्या एव, पण्यं विक्रेयं यस्य तादृशं, वणिजं पण्याजीवं, क्रय-विक्रयाभ्यां जीविकासम्पादकमित्यर्थः, जीविकाभङ्गभीरुतया अपकृष्टपण्डितमिति भावः, वदन्ति कथयन्ति, पण्डिता इति शेषः। अत एव हरदत्तेन सह विवादो मे अपरिहार्य्य एव इति भावः। अत्र केवल-जीविकार्थमेव शास्त्रज्ञे जने वणिक्त्वारोपणार्थं ज्ञाने पण्यत्वारोपणात् परम्परितं रूपकमलङ्कारः,—"यत्र कस्यचिदारोपः परारोपणकारणम्। तत् परम्परितम्—॥" इति दर्पणोक्तेः। उपजातिवृत्तम्॥ १७॥

देवी। अइरोवणीदा दे सिस्सा। अपरिणिट्ठिदस्स उवदेसस्स उण अणज्जं आवेदणम्। *(त)

गण। अत एव मे निर्बन्धः। (थ)

देवी। तेण हि दुवेवि भअवदीए उवदेसं दंसेह। †(द)

* अचिरोपनीता ते शिष्या। अपरिनिष्ठितस्योपदेशस्य पुनरनार्य्यमावेदनम् इति स०।

† तेन हि द्वावपि भगवत्यै उपदेशं दर्शयतम् इति स०।

(त) अचिरेण अल्पदिनमात्रम्, उपनीता शिक्षालाभाय त्वत्सकाशं प्रेषिता, उपदेशग्रहणाय दीक्षिता इत्यर्थो वा, ते शिष्या मालविका, अचिरोपनीतत्वेन न सम्यक् शिक्षा जाता इति भावः, अपरिनिष्ठितस्य असमाप्तस्य, स्थैर्य्यमप्राप्तस्य इति यावत्, उपदेशस्य शिक्षादानव्यापारस्य, शिष्ये सङ्क्रामणरूपस्येत्यर्थः, आवेदनं विज्ञापनम्, अभिनयप्रदर्शनेन सदसत्त्वपरीक्षणमित्यर्थः, अनार्य्यम् असाधु, अनुचितमित्यर्थः, शिक्षालाभार्थं कतीयम एव न कोऽपि सुशिक्षितो भवति, तादृशाशिक्षितशिष्येण उपदेशस्य उत्कर्षापकर्षज्ञापनाय चेष्टा शिक्षकस्य अपाण्डित्यज्ञापिका एव, अत एव एतस्मादध्यवसायात् विरम्यतामिति निष्कर्षः। एतदुक्तिश्च राज्ञा मालविकायाः कथञ्चिदपि दर्शनं न भवतु इत्याशयेन गणदासस्य तया अभिनयप्रदर्शननिवारणार्था इति मन्तव्यम्। एवमुत्तरत्रापि। "अइरोवणीदाए सिस्साए उण पड़िट्ठिदस्स उवदेसस्स अणज्जं पआसणं" इति पाठे—अचिरोपनीतायां शिष्यायां पुनः प्रतिष्ठितस्य उपदेशस्य अन्याय्यं प्रकाशनम् इति स०।

(थ) अत एव अस्मादेव, मम शिष्याया अचिरोपनीतत्वेन अपरिनिष्ठितोपदेशत्वादेवेत्यर्थ, निर्बन्धः आग्रहातिशयः, अनया अभिनयकरणार्थेति शेषः, अत्यल्पकालं लब्धोपदेशाऽपि मालविका मम शिक्षादानकौशलेन स्वकीय-स्वाभाविक-प्रतिभाबलेन च सामाजिकान् अवश्यमेव प्रीणयितुं समर्था भविष्यतीति मे दृढविश्वासः, अतो न मे पराजयशङ्का कार्य्या देव्या इति भावः।

परि। देवि! नैतन्न्याय्यं, सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय। (ध)

देवी। [ जनान्तिकम् ]। मूढ़े परिव्वाजिए! मं जग्गतिं वि सुत्तं विअ करेसि? * [ इति सासूयं परावर्त्तते ]। (न)

[ राजा देवीं परिव्राजिकायै दर्शयति ]। (प)

---

* मूढ़े! परिव्राजिके! मां जाग्रतीमपि सुप्तामिव करोषि? इति सं०।

---

(द) तेन निजविजयलाभे दृढ़प्रत्ययात् निर्बन्धातिशयेन हेतुना इत्यर्थः, द्वावपि द्वावेव, केवलं भवान् मालविका च इत्यर्थः, अभिरत एवार्थे, भगवत्यै पूज्यायै, केवलं तुभ्यमेवेत्यर्थः, उपदेशं शिक्षां, शिक्षा-दान-ग्रहणपटुतामित्यर्थः। केवलं भवान् मालविकया सह भगवत्यै एव शिक्षानैपुण्यं दर्शयतु, तत्र राजा वा अपरः कश्चित् दर्शको वा अभिनेता वा नैव स्थातुमर्हतीति इति निष्कर्षः। एवञ्चेत् राजा मालविकां द्रष्टुं न शक्नुयादिति देव्या आशयः।

(ध) एतत् एकाकिन्या मया दर्शनं, न न्याय्यं न युक्तम्। सर्वज्ञस्यापि, का कथा असर्वज्ञाया स्त्रिया मम इत्यपि-शब्दार्थः। निर्णयाय उत्कर्षापकर्षनिर्द्धारणाय, अभ्युपगमः स्वीकारः, सन्दिग्धस्थले तन्निराकरणाय केनापि सह आलोचनाकरणासम्भवादिति भावः। एतेन राज-मालविकयोः परस्परसन्दर्शनं कौशिक्या अपि अभिप्रेतमिति तथा मालविकाया हितैषित्वमिति च व्यज्यते, तत्कारणञ्च सप्तमाङ्के स्फुटीभविष्यति।

(न) मूढ़े! अनभिज्ञे! अविदितममाभिप्राये! इत्यर्थः। जाग्रतीं मालविका यथा राज्ञो नयनगोचरीभूता न भवेत् तत्र अवहितामित्यर्थः। सुप्तामिव अनवहितामिव, वाक्कौशलेन उद्भ्रान्तामिवेति यावत्, करोषि कर्त्तुमिच्छसीत्यर्थः, एतत् खलु असम्भवमेव, नाहं कदाऽपि तव वाक्येन स्वरूढ़लक्ष्यं परित्यक्ष्यामीति भावः। सासूयं सविरागमिति यावत्, परावर्त्तते पराङ्मुखीभवति।

(प) देवीं विरक्तिवशात् पराङ्मुखीं, सङ्केतेनेति यावत्। दर्शयति, दर्शयति, इङ्गितेनेति शेषः।

पार।—

अनिमित्तमिन्दुवदने! किमत्रभवतः पराङ्मुखीभवसि?।
प्रभवन्त्योऽपि हि भर्त्तृषु कारणकोपाः कुटुम्बिन्यः॥ १८॥

विदू। णं सकारणं ज्जेव्व, अत्तणो पक्खो रक्खिदव्वो। [जनान्तिकं विलोक्य]। णं दिट्ठिआ कोवव्वाजेण देवीए परित्तादो भवम्। सुसिक्खिदोवि सव्वो उवदेसदंसणेण णिण्हादो होदि। * (फ)

* ननु सकारणमेव, आत्मनः पक्षो रक्षितव्यः। ननु दिष्ट्या कोपव्याजेन देव्या परित्रातो भवान्। सुशिक्षितोऽपि सर्वं उपदेशदर्शनेन निष्णातो भवति इति सं०।

देव्याः विरागापनयनाय तद्विरागस्य अहेतुकत्वं प्रदर्शयति, अनिमित्तमिति।—इन्दुवदने! चन्द्रानने! अनिमित्तम् अहेतुकम्, अत्रभवतः माननीयात् राज्ञः सकाशात्, किं कथं, पराङ्मुखीभवसि? विमुखीभवसि? त्वमिति शेषः, एतत्तु ते नोचितमिति भावः, हि यतः, कुटुम्बिन्यः पुरन्ध्र्यः, पतिपुत्रवत्यः पुरमहिला इत्यर्थः, भर्त्तृषु पतिषु, प्रभवन्त्योऽपि प्रभुत्वशालिन्योऽपि, वशीभूतभर्त्तृकाऽपीति यावत्, कारणकोपाः कारणादेव निमित्तादेव, कोपः क्रोधः यासां तादृश्यः, भवन्तीति शेषः, न त्वकारणकोपा इति भावः। भर्त्तृप्रियाया अपि तव निरपराधे भर्त्तरि कोपो न युज्यते इति तात्पर्य्यम्। अत्र वैधर्म्म्येण सामान्येन द्वितीयार्द्धप्रदर्शितेन विशेषसमर्थनात् अर्थान्तरन्यासोऽलङ्कारः, स च कारणकोपा इत्यनेन न त्वकारणकोपा इत्यन्यव्यवच्छेदात् आर्य्या परिसङ्ख्यया सङ्कीर्य्यते, इन्दुवदने इत्युपमया संसृज्यते च। आर्य्या जातिः॥ १८॥

(फ) ननु भोः! इति कौशिक्या आमन्त्रणं, सकारणं, देव्याः कोपप्रकटनमिति शेषः। कथं सकारणम्? इत्याशंसायामाह, आत्मनः पक्षः स्वपक्षः, स्वाश्रितो गणदास इत्यर्थः। देवी यदि अभिनयनिवारणार्थं कोपो न कुर्य्यात्, तदा अवश्यमेव गणदासः पराजितो भवेत्,

गण। देवि ! श्रूयताम्, एवं जनो गृह्णाति ; (ब) तदिदानीं—

विवादे दर्शयिष्यामि क्रियासङ्क्रान्तिमात्मनः ।
यदि मां नानुजानासि परित्यक्तोऽस्म्यहं त्वया ॥ १९ ॥

[ आसनादुत्थातुमिच्छति ] ।

---

अतश्च स्वपक्षगणदासस्य सम्मानरक्षार्थं देव्याः कोपप्रकटनं सकारणमेवेति भावः। दिष्ट्या भाग्येन, तव शुभादृष्टवशादित्यर्थः। कोपव्याजेन क्रोधच्छलेन, तव सम्मानरक्षार्थं देवी कपटक्रोधं प्रकाशितवती, न तु तत्त्वतः इति भावः, गणदासमुत्तेजयितुं विदूषकस्य सोल्लुण्ठोक्तिरियम्। उपदेशदर्शनेन शिक्षादानकौशलस्य उत्कर्षापकर्षप्रदर्शनेन, निष्णातः शिक्षितः, शिक्षितत्वेन निर्णीतः इत्यर्थः, "प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः" इत्यमरः ; हरदत्तस्य आत्मनश्च उत्कर्षापकर्षनिर्णयाय निजशिक्षादाननैपुण्यप्रदर्शनेन सभ्यान् सन्तोषयितुं प्रभवसि चेत् तदा सुशिक्षितत्वेन सम्मानितो भवेः इति भावः। राज्ञो मालविकासन्दर्शनाय विदूषकेण एवं कौशलं प्रकटितमिति मन्तव्यम्। "उपदेशदर्शनेन" इत्यत्र "उपदेशेन" इति पाठान्तरम्।

(ब) जनः लोकः, एवम् ईदृशं, भवती पराजयजनितापमानात् रक्षितुं मां विवादात् निवारयतीत्यर्थः इति, गृह्णाति मन्यते इत्यर्थः।

गणदासो निजसङ्कल्पं प्रकाशयति, विवादे इति।—विवादे व्यवहारे, जय-पराजयनिर्द्धारणे इत्यर्थः, आत्मनः स्वस्य, क्रियायाः अभिनयव्यापारस्य, सङ्क्रान्तिं सङ्क्रमणम्, उपदेशद्वारा शिष्ये सञ्चालनमित्यर्थः, शिष्यगतमात्मगुणमिति यावत्, मच्छिष्यायाः मालविकाया अभिनयनैपुण्यमिति भावः, दर्शयिष्यामि विचारकाणां नृपादीनां समीपे प्रकाशयिष्यामि, मां यदि न अनुजानासि न अनुमन्यसे, क्रियासङ्क्रान्तिं प्रदर्शयितुमिति शेषः, तदा अहं त्वया परित्यक्तोऽस्मि विसर्जितो भवामि, इति मंस्ये इति शेषः। अत्र क्रियासङ्क्रान्तिप्रदर्शने तव अनुमोदनाभावः मत्परित्याग इवेति बिम्बप्रतिबिम्बभावे पर्य्यवसानात् असम्भवद्वस्तुसम्बन्धा निदर्शना, तथा च अनुमोदनाभावे नाहमत्र स्थास्यामीति वस्तु व्यज्यते इति अलङ्कारेण वस्तुध्वनिः। अनुष्टुप् वृत्तम् ॥ १९ ॥

देवी। [स्वगतम्] का गई ? [प्रकाशम्] पभवदि आआरिअओ सिस्सजणस्स। * (भ)

गण। चिरमपदेशशङ्कितोऽस्मि। (म) [राजानमवलोक्य]। अनुज्ञातं देव्या, तदाज्ञापयतु देवः, कस्मिन्नभिनयवस्तुनि उपदेशं दर्शयिष्यामि। (य)

राजा। यदादिशति भगवती।

परि। किमपि देव्या मनसि वर्त्तते, ततः शङ्कितास्मि। (र)

---

* का गतिः ? प्रभवत्याचार्य्यकः शिष्यजनस्य इति सं०।

---

(भ) गतिः उपायः, "गतिः स्त्री मार्गदशयोः ज्ञाने यात्राऽभ्युपाययोः" इति मेदिनी। प्रभवति प्रभुर्भवति, शिष्योपरि आचार्य्यस्य अबाधप्रभुत्व विद्यते, अत एव त्वं तया अभिनयं कारयितुं योग्यो भवसीत्यर्थः। "आआरिअओ" इत्यत्र "आआरिआ" इति पाठान्तरम्।

(म) चिरं दीर्घकालं व्याप्य, अपदेशे निराकृते, मालविकया अभिनयप्रदर्शननिषेधे इत्यर्थः, यद्वा—अपदेशे व्याजे, किमपि छलमुद्भाव्य अभिनयप्रदर्शननिवारणे इत्यर्थः, "अपदेशः पुमान् लक्ष्ये निमित्तव्याजयोरपि" इति मेदिनी ; शङ्का जाता अस्य इति तथोक्तः (तारकादित्वादितच्)। मालविकया अभिनयप्रदर्शने भवत्या अहं निवारितो भवेयमिति सन्देहो मे स्थितः, स च इदानीं भवद्वचनेन दूरीभूत इत्यर्थः। "अपदेशशङ्कितः" इत्यत्र "अपदे शङ्कितः" इति पाठे—अपदे अस्थाने, शङ्काया अविषयेऽपीत्यर्थः।

(य) अभिनयवस्तुनि अभिनेयविषये, उपदेशं शिक्षां, शिक्षानैपुण्यमित्यर्थः।

(र) किमपि अनिर्वचनीयम्, अस्माकं दुर्ज्ञेयं किमपि वस्तु इत्यर्थः, किमपि अनिर्देश्यं विरागकारणमिति यावत्। शङ्कितास्मि, आदेशं कर्त्तुमिति शेषः।

देवी। अण्ण वीसद्धं, पभविस्सदि पभू अत्तणो परि-अणस्स। *(ल)

राजा। मम चेति ब्रूहि। (व)

देवी। भअवदि! अण्ण दाणिम्। †

परि। देव! शर्मिष्ठायाः कृतिं चतुष्पादोत्थं छलिकं दुष्प्रयोज्यमुदाहरन्ति, तत्रैकार्थसंश्रयमुभयोः प्रयोगं पश्याम, तावता ज्ञायत एवात्रभवतोरुपदेशान्तरम्। (श)

---

* अथ विश्रब्धम्। प्रभविष्यति प्रभुरात्मनः परिजनस्य इति सं०।

† भगवति! अथेदानीम् इति सं०।

---

(ल) विश्रब्धं विश्वस्तं, निर्भयमित्यर्थः, "समौ विस्रम्भ-विश्वासौ" इत्यमरः। प्रभुः स्वामी; वयं सर्वं एव तव परिजनाः, अस्मासु तव प्रभुत्वं निरङ्कुशम्, अत एव त्वं निर्भयं स्वाभिमतं प्रकाशयेति भावः। "पभविस्सदि पभू" इत्यत्र "पहवदि पहू" इति पाठान्तरम्।

(व) मम च, प्रभविष्यतीति शेषः, न केवलमात्मनः परिजनस्य, मम धारिण्या अपि त्वं प्रभविष्यसीत्यर्थः।

(श) शर्मिष्ठायाः दैत्याधिपतिवृषपर्वदुहितुः ययातिभार्य्यायाः, कृतिं 'कृदभिहितभावो द्रव्यवत् प्रकाशते" इति न्यायात् कृतं, शर्मिष्ठया विरचितमित्यर्थः, चतुर्भ्यः पादेभ्यः चरणेभ्यः, उत्तिष्ठतीति उत्थम् उत्थितं, चतुष्पदीयुक्तमित्यर्थः, (उत्तरपदवृत्तिः) यद्वा—चतुर्णां पादानां चरणानां, पादचतुष्टयसमन्वितगीतविशेषाणामित्यर्थः, उत्थम् उत्थानं, प्रारम्भ इत्यर्थः, यस्मात् तादृशं, पादचतुष्टययुक्तगीतेषु प्रथमं गीतमित्यर्थः, छलिकं "तदेव छलिकं नाम साक्षात् यदभिधीयते। व्यपदिश्य पुरावृत्तं स्वाभिप्रायप्रकाशकम्॥" इत्युक्तलक्षणः स्वाभिप्राय-प्रकाशकः सङ्गीतप्रधानः अभिनयविशेष इत्यर्थः, दुष्प्रयोज्यं दुःखेन अभिनेतुं योग्यम्, उदाहरन्ति कथयन्ति, विद्वांस इति शेषः। तत्र तस्मिन् छलिकविषये, उभयोः हरदत्त-गणदासयोः, एक एव अभिन्न एव,

आचार्य्यौ। यदाज्ञापयति भगवती।

विदू। तेण हि दुवेवि वस्सापेक्खागेहे संगोदरअणं करिअ अत्तभवदो दूदं पेसध। अहवा मिदंगसद्दो ज्जेव्व णो उट्ठाव-इस्सदि। * (ष)

हरदत्तः। तथा। [ इत्युत्तिष्ठति ]।

[ गणदासी भारिणीमध्योऽर्थति ]। (स)

* तेन हि द्वावपि वर्णापेक्षागृहे सङ्गीतरचनां कृत्वा अत्रभवतो दूतं प्रेषयतम्। अथवा मृदङ्गशब्द एव न उत्थापयिष्यति इति स०।

अर्थः वस्तु, संश्रयः अवलम्बनं यस्य तादृशम्, एकमेव अभिनेयविषय-माश्रित्य इत्यर्थः, प्रयोगम् अभिनयम्, उभयोरेव शिष्यद्वारा क्रमेण तन्नाटकाभिनयमित्यर्थः, पश्याम अवलोकयाम, (प्रार्थनायां लोट्) "पश्याम" इत्यत्र "पश्यामि" इति क्वचित् पाठः। तावता तथाविधेन अभिनयेन, उपदेशान्तरम् उपदेशस्य प्रभेदं, शिक्षादानव्यापारस्य सद-सत्त्वमित्यर्थः, "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये" इत्यमरः; एकस्मिन्नेव विषये दत्तपरीक्षयोः जनयोः शिक्षायाः तारतम्यं यथा स्फुटीभवति, न तथा विभिन्नविषये, अत एव आभ्याम् एकस्यैव नाटकस्य क्रमेण अभिनयः शिष्यद्वारा प्रदर्शनीय इति निष्कर्षः। ज्ञायते ज्ञास्यते इत्यर्थः, (भविष्यत्सामीप्ये लट्)।

(ष) वर्णेति।—वर्णस्य अभिनयोपयोगिरूपविशेषस्य, "वर्णो द्विजादि।·· भेदरूपाक्षरविलेपने॥" इति मेदिनी; अपेक्षा उद्भावनं, कल्पनमित्यर्थः, रूपविशेषपरिग्रहणाय कालप्रतीक्षणमिति यावत्, तदर्थं गृहं तत्र, वेशरचनागृहे, नेपथ्ये इति यावत्, "वस्सापेक्खागेहे" इत्यत्र "वण्णा पेक्खाघरे" इति पाठान्तरे वर्णो प्रेक्षागृहे इति स०।·सङ्गीतस्य नृत्य-गीत-वाद्यत्रितयस्य, रचनां कल्पनाम्, आयोजनमिति यावत्। अत्रभवतः इति (सम्बन्धे षष्ठी)। नः अस्मान्, उत्थापयिष्यति उद्गमयिष्यति, तत्र गमनाय त्वरयिष्यतीत्यर्थः। "अत्तभवदो" इत्यत्र "तत्तभवदो" इति पाठान्तरम्।

देवी। [गणदास विलोक्य]। जई भोदु अज्जो। णं विजअ-अभत्थिणी अहं अज्जस्स। * (ह)

[आचार्यौ प्रस्थितौ]। (क)

परि। इतस्तावत्। (ख)

आचार्यौ। [परिवृत्य]। इमौ स्वः। (ग)

परि। निर्णयाधिकारे ब्रवीमि, सर्वाङ्गसौष्ठवाभिव्यक्तये विगतनेपथ्ययोः पात्रयोः प्रवेशोऽस्तु। (घ)

* जयी भवत्वार्य्यः। ननु विजयाभ्यर्थिन्यहमार्य्यस्य इति सं०।

---

(स) धारिण्या अभिप्रायज्ञानार्थं गणदासस्य धारिणीं प्रति अवलोकनं लन्तव्यम्।

(ह) ननु इति आमन्त्रणार्थकमव्ययम्। विजयाभ्यर्थिनी विजयम् अभ्यर्थयति याचते या सा तादृशी, जयाभिलाषिणी। "जई भोदु ·· अज्जस्स" इत्यत्र "विअई होहि" इति पाठे—विजयी भव इति सं०।

(क) प्रस्थितौ गन्तुमारब्धौ, कतिचित्पदानि गतौ इत्यर्थः।

(ख) इतः अस्यां दिशि, अस्मिन् स्थाने इति वा, मत्समीपे इत्यर्थः, आगच्छतामिति शेषः।

(ग) परिवृत्य प्रत्यावृत्य। इमौ एतौ आवामित्यर्थः, स्वः भवाव', पस्थितौ इत्यर्थः।

(घ) निर्णयाधिकारे युवयोः उत्कर्षापकर्षनिरूपणार्थं परीक्षकपदे इत्यर्थः, अहं नियुक्तेति शेषः, अत एव ब्रवीमि कथयामि। सर्वेति।—सर्वेषाम् अङ्गानां भावव्यञ्जकसुखनेत्रादीनामवयवानाम् अभिनयाङ्ग-भूतानां नृत्य-गीतादीनाञ्च, सौष्ठवस्य सौन्दर्य्यस्य, अभिव्यक्तये प्रकाशनाय, विगतनेपथ्ययोः अकृतालङ्कारयोः, कल्पितसज्जारहितयोरित्यर्थः, स्वाभाविकभावेनैवावस्थितयोरिति यावत्, "नेपथ्यं स्यादलङ्कारे रङ्गभूम्यां नपुंसकम्" इति मेदिनी; पात्रयोः अभिनयकारिणोः नटयोरित्यर्थः, भवदुपदिष्टयोः शिष्ययोरिति यावत्, प्रवेशः रङ्गभूमौ समागमः, अस्तु

उभौ। नेदमावयोरुपदेश्यम् (ङ) [इति निष्क्रान्तौ]।

देवी। [राजानमवलोक्य]। जइ राअकज्जेसु वि ईरिसी णिउणदा अज्जउत्तस्स, तदो सोहणं भोदि। * (च)

राजा।—

अलमन्यथा गृहीत्वा न खलु मनस्विनि! मया प्रयुक्तमिदम्।
प्रायः समानविद्याः परस्परयशःपुरोभागाः॥ २०॥

[नेपथ्ये मृदङ्गध्वनिः। सर्वे कर्णं ददति]।

---

* यदि राजकार्य्येषु अपीदृशी निपुणता आर्य्यपुत्रस्य, ततः शोभनं भवति इति स०।

---

भवतु। वेशभूषादीनां स्वाभाविकसौन्दर्य्यप्रकाशस्य अन्तरायभूतत्वात् यथायथं निर्णयासम्भवादिति भावः।

(ङ) उपदेश्यम् उपदेशार्हम्, उपदेशमन्तरेणापि आवयोरेतत् सर्वथैव विदितम्, अत एव उपदेशस्य प्रयोजनाभावः।

(च) ईदृशी हरदत्त-गणदासयोरुत्कर्षापकर्षनिर्णयाय यादृशी तादृशी, निपुणता अभिज्ञता। शोभनं साधु, प्रशंसनीयमित्यर्थः, तुच्छात्तुच्छविषये मालविकां द्रष्टुं यादृक् कौशलम् आर्य्यपुत्रेण उद्भावितम्, प्रकृतिवर्गस्य मङ्गलविधानार्थं राज्यस्य दृढ़ीकरणार्थञ्च ईदृशं कौशलं प्रकाशयति चेत् तदेव साधु भवेदित्यर्थः। "णिउणदा" इत्यत्र "उवाअणिउणदा" तथा "भोदि" इत्यत्र "भवे" इति पाठान्तरे—उपायनिपुणता तथा भवेत् इति च स०। राज्ञो मालविकादर्शनं निरोद्धुमशक्नुवत्या देव्या इयं सोल्लुण्ठोक्तिरित्यवगन्तव्यम्।

देव्या आरोपितं निजदोषं शोधयितुमाह, अलमिति।—मनस्विनि! उदारमनस्के! या हि मनस्विनी, सा अकारणं कमपि नैव सन्दिग्धे, अतस्ते मयि नैव सन्देहः करणीय इति आमन्त्रणपदस्य तात्पर्य्यम्; अन्यथा अन्यप्रकारेण, मयैव एतत् सम्पादितमिति विपरीतमित्यर्थः, गृहीत्वा सम्प्रधार्य्य इत्यर्थः, अलं व्यर्थं, मालविकादर्शनाय मया एतत् कौशलं प्रकटितं, तव ईदृक्-निश्चयस्य कोऽपि हेतुर्न विद्यते

परि। हन्त ! प्रवृत्तं सङ्गीतकम्। तथा ह्येषा—

जीमूतस्तनितविशङ्किभिर्मयूरै-
रुद्ग्रीवैरनुगमितस्य पुष्करस्य।
निर्ह्रादिन्युपचितमध्यमस्वरोत्था
मायूरी मदयति मार्जना मनांसि॥ २१॥

इत्यर्थः। ननु कथमनिमित्तम् आचार्य्ययोरयं सङ्घर्षः उपस्थितः? इत्याशंसायामाह, मया न खलु नैव, इदम् आचार्य्ययोः विवाद-सङ्घटनं, प्रयुक्तं निष्पादितमित्यर्थः। यदि भवता न प्रयुक्तं, तर्हि कथमिदं सङ्घटितम्? इत्याह, प्राय इति।—समानविद्याः एकशास्त्राध्यायिनो जनाः, प्रायो बाहुल्येन, परस्परयशसि अन्योऽन्यकीर्त्तौ, परस्परस्य प्रशंसा-कीर्त्तने इत्यर्थः, पुरोभागाः दोषैकदर्शिता येषां ते तथोक्ताः, भवन्तीति शेषः, "दोषैकदृक् पुरोभागी" इत्यमरः; समानविद्यानामयमेव स्वभावो यत् ते इतरस्य अन्यकृतं प्रशंसावादं नैव सहन्ते, गुणेष्वपि तस्य दोषमुद्-घाटयन्ति, अत एवानयोः विवादः सञ्जात इति निष्कर्षः। अत्र द्वितीया-र्द्धोक्तेन सामान्येन प्रथमार्द्धोक्तस्य विशेषस्य समर्थनादर्थान्तरन्यासो-ऽलङ्कारः, किञ्च, मनस्विनि! इत्यामन्त्रणपदस्य साभिप्रायत्वात् परि-कराल‌ङ्कारोऽपि, तथा च—"उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः" इति दर्पणोक्तलक्षणात्। आर्य्या जातिः॥ २०॥

सङ्गीतं विचारयति, जीमूतेति।—जीमूतस्य मेघस्य, स्तनितं गर्जितं, विशङ्कन्ते इति तादृशैः मृदङ्गध्वनौ मेघगर्जितभ्रमवद्भिरित्यर्थः, अत एव उद्ग्रीवैः हर्षात् उन्नमितकन्धरैः, मेघध्वनौ मयूराणां हर्षोदयस्य कवि-समयसिद्धत्वात्, तथा च—"मेघध्वानेषु नृत्यं भवति च शिखिनाम्" इत्युक्तेः, मयूरैः शिखण्डिभिः, लोकालयविचारिभिरिति शेषः, कानन-चारिणां मृदङ्गरवश्रवणासम्भवादिति भावः, अनुगमितस्य अनुनादितस्य, अनुकृतस्य इति यावत्, "अनुगमितस्य" इत्यत्र "अनुरसितस्य" इति पाठेऽपि—स एवार्थः; पुष्करस्य वाद्यभाण्डमुखस्य, मृदङ्गस्य इति भावः; "पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले" इति मेदिनी; निर्ह्रादिनी निर्ह्रादवती, दूरप्रसारिणी मधुरगम्भीरनिनादा इति यावत्, उपचितः

राजा। देवि! तस्याः सामाजिका भवाम? (छ)

देवी। [जनान्तिकम्]। अह्वो! अविणओ अज्जउत्तस्स। * (ज)।

[सर्वे उत्तिष्ठन्ति]।

* अहो! अविनयः आर्य्यपुत्रस्य इति सं०।

परिपुष्टः, मयूरस्वरानुनादनेन बहुलीभूत इत्यर्थः, "उपचित" इत्यत्र "उपहित" इति पाठे—उपहितः संयोजितः, यः मध्यमस्वरः निषादादीनामन्यतमस्वरविशेषः, तस्मात् उत्तिष्ठति उद्गच्छतीति तादृशी, मायूरी मयूरप्रिया, मयूरस्य केकारवसदृशी इति वा, मायूरी-नाम्नीत्यर्थो वा, (मयूराख्यामियम् इति अस्य) एषा इति गद्यस्थ-पदेनान्वयः, इयं, मार्जना मूर्च्छना, तदाख्यः पुष्करयन्त्रस्य वाद्यविशेषः इत्यर्थः, तदुक्तं भरतेन—"मायूरी चार्द्धमायूरी तथा कार्मारवीति च। तिस्रस्तु मार्जना ज्ञेयाः पुष्करेषु स्वराश्रयाः॥ गान्धारो वामके कार्य्यः षड्जो दक्षिणपुष्करे। मध्यमश्चोर्द्धग. कार्य्यः मायूर्य्यास्तु स्वरा-स्त्वमी॥" इति, मनांसि मानसानि, अस्माकमिति शेषः, मदयति हर्षयति, अत एव तूर्णमेव तत्र गन्तव्यमिति भावः। एतेन परिव्राजि-कायाः सङ्गीतविद्यायामपि नैपुण्य प्रकटीभूतम्। श्लोकेऽस्मिन् मृदङ्गध्वनौ मयूराणां जीमूतस्तनितभ्रमात् तस्य च प्रतिभोत्थितत्वात् भ्रान्तिमान् अलङ्कारः, तथा च दर्पणे—"साम्यादतस्मिंस्तद्बुद्धिः भ्रान्तिमान् प्रति-भोत्थिता" इति, तथा मयूराणामुद्ग्रीवत्वं प्रति जीमूतस्तनितविशङ्कि-तायाः हेतुत्वेन निर्देशात् पदार्थहेतुकं काव्यलिङ्गमपि, "हेतोर्वाक्य-पदार्थत्वे काव्यलिङ्गं निगद्यते" इति तल्लक्षणात्, तदुभयोरन्योऽन्यसापेक्ष-त्वात् सङ्करः। प्रहर्षिणी वृत्तं—"त्र्याशाभिर्म-न-ज-र-गाः प्रहर्षिणीयम्" इति लक्षणात्॥ २१॥

(छ) तस्याः सङ्गीतसभायाः मायूरीमार्जनाया वा, सामाजिकाः सभ्याः, भवाम (इति प्रार्थनायां लोट्), वयमिति शेषः, प्रवृत्तं सङ्गीतकं श्रोतुं तत्र गच्छाम वयम्, अनुमन्यस्व त्वमिति भावः।

(ज) अविनयः प्रागल्भ्यं,धृष्टता इत्यर्थः. मत्समीपे एव भङ्ग्या मदनमि-त्रकार्य्यसम्पादनाय मात्रग्रहप्रकाशात् तदर्थमनुमतिप्रार्थनात्तस्य इति भावः।

विदू। [अपवार्य्य]। भो! धीरं गच्छ, तत्तभोदी धारिणी विसंवादइस्सदि। * (झ)

राजा —

धैर्य्यावलम्बिनमपि त्वरयति मा मुरजवाद्यरावोऽयम्।
अवतरतः सिद्धिपथं शब्दः स्वमनोरथस्येव ॥ २२ ॥

[इति निष्क्रान्ता सर्वे]।

इति प्रथमोऽङ्कः। (ञ)

---

* भो! धीरं गच्छ, तत्रभवती धारिणी विसंवादयिष्यति इति सं०।

---

(झ) अपवार्य्य परावृत्य, "तत् भवेदपवारितम्। रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते॥" इति तल्लक्षणात्। धीरम् अचञ्चलं, मन्दं मन्दमित्यर्थः। "गच्छ" इत्यत्र "गच्छम्ह" इति पाठे—गच्छामः इति सं०। विसंवादयिष्यति विप्रलब्धं करिष्यति, वञ्चयिष्यतीत्यर्थः, तव अधीरतां दृष्ट्वा मालविकायां ते अत्यन्तासक्तिं निश्चित्य ताम् अन्यत्रापसार्य्य, आचार्य्ययोः विवाद प्रशमय्य वा त्वां निराशं करिष्यतीति निष्कर्षः, "विप्रलम्भो विसंवादः" इत्यमरः; यद्वा—विसंवादयिष्यति विरुद्धं चिन्तयिष्यति, अन्यथा मंस्यते इत्यर्थः।

राजा निजाधीरताया हेतुं प्रकटयति, धैर्य्येति।—सिद्धेः साफल्यस्य, पन्थानं मार्गम्, अवतरतः आरोहतः, धावमानस्येत्यर्थः, स्वस्य आत्मनः, मन एव मानसमेव, रथः स्यन्दनः तस्य, शब्द इव ध्वनिरिव, अयं श्रूयमाणः, मुरजवाद्यरावः मृदङ्गवाद्यध्वनिः, "मुरजवाद्यराव." इत्यत्र "मुरजवाद्यराग" इति पाठे—मुरजवाद्ये रागः अनुरागः, आसक्तिरित्यर्थः, मुरजवाद्योत्पत्तिस्थाने गमनानुराग इति भावः, धैर्य्यं धीरत्वम्, अवलम्बते इति तादृशमपि अचञ्चलतया जिगमिषुमपि, मां त्वरयति अधीरीकरोति, सत्वरगमनाय त्वरां ददाति इत्यर्थः। अत्र मनोरथस्य शब्दस्य असम्भवत्वेऽपि इव-शब्देन तदुत्प्रेक्षणात् वाच्योत्प्रेक्षा, किञ्च, मन एव रथः इति निरङ्ग रूपक, तदुभयोरङ्गाङ्गिभावेनावस्थानात् सङ्करः, तेन च यदर्थमिद कौशलमुद्भावित, तस्य सिद्धिरवश्यम्भाविनीति वस्तुव्यञ्जनात् अलङ्कारेण वस्तुध्वनि.। आर्य्या जातिः॥ २२॥

# द्वितीयोऽङ्कः।

[ततः प्रविशति सङ्गीतरचनायां कृतायामासनस्थः सवयस्यो राजा, धारिणी, परिव्राजिका, विभवतश्च परिवारः]। (क)

राजा। भगवति! अत्रभवतोराचार्य्ययोः कतरस्य प्रथमम् उपदेशो दृश्यताम्? (ख)

---

(ञ) प्रथमः आदिमः, अङ्कः नाटकांशः, परिच्छेदविशेष इत्यर्थः, "अङ्को विभूषणे स्थाने समीपे नाटकांशके" इत्यजयः; इति समाप्तः, इतिशब्दः समाप्तौ। इत्यन्तो मुखसन्धिः। अत्र बीजस्य पुनरावर्त्तनात् समाधानं नाम सन्ध्यङ्गमुक्तम्। तथा अत्रैव सुखागमस्य गम्यमानत्वात् प्राप्तिनाम सन्ध्यङ्गमपि उक्तम्। किञ्च, नृत्यदर्शननिश्चयान्ते प्रथमाङ्कार्थे समाप्तिं गतेऽपि तमसमाप्यैव उत्तराङ्कादौ विष्कम्भकादौ प्रतिपाद्यस्य सङ्गीतस्य अत्रैव निपातनात् अङ्कावतरणं नामार्थोपक्षेपकमुक्तं भवति, तथा च—"अङ्कावतारस्त्वङ्कान्ते पातेणाङ्कस्य सूचनात्" इति।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचितायां मालविकाग्निमित्रटीकायां छात्रबोधिन्यां प्रथमाङ्कव्याख्या समाप्ता।

---

(क) सङ्गीतरचनायां सङ्गीतकल्पनायां, कृतायाम् आरब्धायाम् इत्यर्थः। "सङ्गीतरचनायां सङ्गीतनिवेशे, 'आसर' इति यस्य प्रसिद्धिः" इति कश्चित्। "सङ्गीतरचनायाम्" इत्यत्र "सङ्गीतशालाया रचनायाम्" इति क्वचिदधिकः पाठः। विभवतः ऐश्वर्य्यानुसारात्, अधिकारगौरवमनुसृत्य अग्र-पश्चात् उपविष्ट इति भावः, परिवारः परिजनः। इतः प्रभृति बिन्दु-प्रयत्नयोः समन्वयेन प्रतिमुखसन्ध्यारम्भ इत्यवगन्तव्यम्।

(ख) उपदेशः शिक्षादानव्यापारः, शिष्येषु विद्यासङ्क्रमणमित्यर्थः, दृश्यताम्, अस्माभिरिति शेषः। "उपदेशो दृश्यताम्" इत्यत्र "उपदेशं द्रक्ष्यामः" "प्रयोगं द्रक्ष्यामः" इति पाठान्तरद्वये—प्रयोगम् अभिनयम्।

परि। ननु समानेऽपि ज्ञानवृद्धभावे वयोऽधिकत्वात् गण-दासः पुरस्कारमर्हति। (ग)

राजा। तेन हि मौद्गल्य! एवमत्रभवतोरावेद्य नियोग-मशून्यं कुरु। (घ)

कञ्चु। यदाज्ञापयति देवः। [इति निष्क्रान्तः]।

गण। [प्रविश्य] देव! शर्मिष्ठायाः कृतिर्लयमध्या चतुष्पदा-ऽस्ति, तस्यास्तु छलिकप्रयोगमेकमना देवः श्रोतुमर्हति। (ङ)

---

(ग) समानेऽपि तुल्येऽपि, ज्ञानवृद्धभावे ज्ञानेन विद्यया, वृद्धः ज्येष्ठः, श्रेष्ठ इत्यर्थः, तस्य भावः सत्ता तस्मिन्, "ज्ञानवृद्धभावे" इत्यत्र "ज्ञानभावे" इति क्वचित् पाठः। वृद्धत्वं नाम द्विविधं, ज्ञानेन वयसा च, तत्र हरदत्त-गणदासयोः ज्ञानवृद्धत्वस्य तुल्यत्वेऽपि, वयोऽधिकत्वात् वयसा वृद्धत्वात्। "वयोऽधिकत्वात्" इत्यत्र "वयोवृद्धत्वात्" इति पाठा-न्तरम्। पुरस्कारं प्रथमवर्त्तित्वम्, अग्रे अभिनयप्रदर्शनरूपं सम्मानम् इति यावत्, उभौ तुल्यज्ञानौ अपि हरदत्तापेक्षया वयोवृद्धत्वात् गणदास एव आदौ अभिनयं दर्शयेत् इति निष्कर्षः।

(घ) तेन हि वयोऽधिकत्वात् गणदासस्यैव पुरस्कारार्हत्वेन। क्वचित् "तेन हि" इति पाठो नास्ति। क्वचित् "एवम्" इत्यस्य प्राक् "निगाद्यम्" इत्यधिकः पाठः, निगाद्य वाच्यम्। एवं कौशिक्याः प्रदर्शितां युक्तिम्, आवेद्य विज्ञाप्य, नियोगं स्वाधिकारं, निजकर्त्तव्यमित्यर्थः, अशून्यं सम्पूर्णं, कुरु, निजकर्त्तव्यं प्रतिपालय इत्यर्थः।

(ङ) शर्मिष्ठायाः कृतिः रचना, "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् शर्मिष्ठया विरचितमित्यर्थः। लयः लीयन्ते अस्मिन् सामाजिकानां मनांसि इति लयः गीत-वाद्य-पादन्यासादीनां क्रियाकालयोः साम्यं, "तालः कालक्रियामानं लयः साम्यम्" इत्यमरः; तेन मध्या, मध्यमानयुक्ता, न विलम्बिता, न वा द्रुता इति भावः, अत्र शृङ्गाररस विशेषतया प्रतिपाद्यत्वात् लयमध्या इत्युक्तं, तथा च भरतः,— "शृङ्गार-हास्ययोर्मध्यलयः करुणे विलम्बितः। वीर-रौद्राद्भुत-बीभत्स-

राजा। आचार्य! बहुमानादवहितोऽस्मि। (च)

[निष्क्रान्तौ गणदासः।]

राजा। [आत्मगतम्]। वयस्य!—

नेपथ्यगृहगतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः।
संहर्तुमधीरतया व्यवसितमिव मे तिरस्करिणीम्॥ १॥

---

मयानङ्गेषु द्रुतः॥" इति। चत्वारि पदानि यस्याः सा तादृशी चतुष्पदा चतुष्पदात्मिका, छलितस्तीत्यन्वयः। तस्याः लयमध्यायाः चतुष्पदायाः। "तस्यास्तु" इत्यनन्तरं "चतुष्पदवस्तुकं, चतुष्पदवर्णकं, चतुर्थवस्तुनः" इत्येते त्रयः पाठा अधिकतया दृश्यन्ते, तत्र—चतुष्पदवस्तुकं चत्वारि पदानि यस्य तादृशं वस्तु वर्णनीयविषयं यत्र तादृशम्। चतुर्थस्य वस्तुनः चतुर्थप्रबन्धस्येत्यर्थः। छलिकप्रयोग छलिकनामक गानबहुलमभिनयम्। एकमनाः अवहितचित्त.।

(च) बहुमानात् आदरातिशयात्, सङ्गीतश्रवणे आग्रहातिशयादित्यर्थः। क्वचित् "अवहितोऽस्मि" इत्यनन्तरं "तत् प्रवेशय पात्रम्" इत्यधिकः पाठो दृश्यते। तत्र पात्रं अभिनेतारम्।

मालविकादर्शने राज्ञो विलम्बासहत्वं प्रकटयति, नेपथ्येति।—नेपथ्यगृहं वेशरचनागृहं, तत्र गतायाः स्थितायाः, "नेपथ्यगृहगतायाः" इत्यत्र "नेपथ्यपरिगतायाः" इति पाठान्तरं, तस्याः मालविकायाः, दर्शनाय अवलोकनाय, समुत्सुकम् उद्युक्तं, व्यग्रमित्यर्थः, "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः; मे मम, चक्षु. नेत्रम, अधीरतया दर्शनविलम्बासहिष्णुतया, तिरस्करिणीं जवनिकां, "प्रतिसीरा जवनिका स्यात् तिरस्करिणी च सा" इत्यमरः; संहर्तुम् अपसारयितुमिव, व्यवसितम् उद्युक्त, भवतीति शेष.। अत्र वाच्या क्रियोत्प्रेक्षाऽलङ्कारः, तथा तिरस्करिणीसंहारव्यवसाय प्रति अधीरताया हेतुत्वेन वर्णनात् वाक्यार्थहेतुकं काव्यलिङ्गञ्च, उभयोर्निरपेक्षतया अवस्थानात् संसृष्टिः। आर्या जातिः॥ १॥

विदू। [ अपवार्य्य ]। उवट्ठिदं णअणमहु संणिहिदमक्खिअं च, ता अप्पमत्तो दाणिं पेक्ख। * ( छ )

[ ततः प्रविशत्याचार्य्यावेक्ष्यमाणाङ्गसौष्ठवा मालविका ]। ( ज )

विदू। [ जनान्तिकम् ]। पेक्खदु भवं। ण क्खु से पडिच्छंदादोवि हीअदि महुरदा। † ( झ )

---

* उपस्थितं नयनमधु सन्निहितमक्षिकञ्च, तदप्रमत्त इदानीं प्रेक्षस्व इति स०।

† प्रेक्षतां भवान्। न खल्वस्याः प्रतिच्छन्दादपि हीयते मधुरता इति स०।

---

( छ ) नयनमधु नयनयोः मधु इव, तृप्तिजनकत्वादिति भावः, तच्च सन्निहिता समीपस्था, मक्षिका "मौमाछि" इति प्रसिद्धः मधुकरः यस्य तादृशम्। अप्रमत्तः एकाग्रचित्तः। मधुस्वरूपिणी नेत्रानन्ददायिनी मालविका समागतप्राया, मक्षिकासदृशः भवांश्च तदास्वदितुं सन्निहितः, अतः यथेच्छं पश्य इति भावः। "णअणमहु" इत्यत्र "णअणमहुरसं जदिच्छ" इति पाठे—नयनमधुरसं, यदृच्छम् इति स०। नयनमधुरसं मधु इव आस्वाद्यम्। यदृच्छं यथेच्छमित्यर्थः।

( ज ) आचार्य्येति।—आचार्य्येण उपाध्यायेन गणदासेन, अवेक्ष्यमाणम् अवलोक्यमानम्, अङ्गसौष्ठवं मुखाद्यवयवानां सौन्दर्य्यं यस्याः तादृशी।

( झ ) अस्याः मालविकायाः, प्रतिच्छन्दात् परनियोगानुवर्त्तनात्, परस्य आशयानुसरणादपि इत्यर्थः, यद्वा—प्रतिच्छन्दात् प्रतिरूपात्, आलेख्यपटाङ्कितप्रतिमूर्त्तेरित्यर्थः, "प्रतिरूपं प्रतिच्छन्दः" इति त्रिकाण्डशेष.। मधुरता माधुर्य्यं, देहस्य कमनीयता इत्यर्थः, न हीयते न न्यूना भवति। परच्छन्दानुसारेण सज्जिताया अपि अस्याः स्वाभाविकी कान्तिः न विनष्टा, अथवा चित्रपटे यादृक् सौन्दर्य्यमस्माभिर्दृष्टं, तदनुरूपैवेयमिति भावः।

राजा । [ अपवार्य ] । वयस्य !—

चित्रगतायामस्यां कान्तिविसंवादशङ्कि मे हृदयम् ।
सम्प्रति शिथिलसमाधिं मन्ये येनेयमालिखिता ॥ २ ॥

गण । वत्से ! मुक्तसाध्वसा सत्त्वस्था भव । (ञ)

राजा । [ स्वगतम् ] । अहो ! सर्वास्ववस्थास्वनवद्यता रूपस्य । (ट)

---

राजा स्वाशयं प्रकाशयति, चित्रगतायामिति ।—चित्रगतायाम् आलेख्यपटे अङ्कितायाम्, अस्यां मालविकायां, दृष्टायामिति शेषः, मे मम, हृदयं चेतः, कान्तिविसंवादशङ्कि कान्तेः शोभायाः, विसंवादं विपर्य्यासं, शङ्कते इति तादृश, प्रकृतमालविकया सह चित्रितमालविकायाः सादृश्यमस्ति न वा इति सन्देहाकुलमित्यर्थः, आसीदिति शेषः, सम्प्रति इदानीं, प्रत्यक्षदर्शनकाले, इत्यर्थः, येन चित्रकरेण, इयं मालविका, आलिखिता चित्रिता, शिथिलसमाधिं श्लथप्रयत्नं, चित्राङ्कनकाले तं चित्रकरं विषयान्तराकृष्टचेतसमिति, असमग्रलेख्यसामग्रीकमिति वा यावत्, मन्ये शङ्के, सम्भावयामीत्यर्थः, एतस्या अङ्कने या या सामग्री अपेक्षिता, यथायथाङ्कनासामर्थ्यात् सा तस्य नासीदिति मन्ये, यतः आलेख्यगताया अपि प्रकृतेयमधिकमनोहारिणीति निष्कर्षः । श्लोकेऽस्मिन् उत्प्रेक्षावाचकस्य "मन्ये" शब्दस्य प्रयोगात् समाधेश्च मनसो गुणरूपत्वात् वाच्या गुणोत्प्रेक्षाऽलङ्कारः, तथाच दर्पणे—"मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः" इति । आर्य्या जातिः ॥ २ ॥

(ञ) मुक्तसाध्वसा विगतभया, राज्ञः समक्षं प्रकाशजनितसङ्कोचविरहिता इति यावत्, सत्त्वस्था सत्त्वे स्वभावे प्रकृतौ वा तिष्ठतीति सत्त्वस्था प्रकृतिस्था, स्थिरचित्ता इति यावत्, सभायां राज्ञः समक्षं प्रकाशजनितसङ्कोचादिकं विहाय धीरा भव, अन्यथा सम्यगभिनयं कर्त्तुं न समर्था भवेदिति भावः । "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः" इत्यमरः ।

(ट) अनवद्यता अनिन्दनीयता, मनोहारिता इत्यर्थः । "सर्वास्ववस्थासु अनवद्यता रूपस्य" इत्यत्र "सर्वस्थानानवद्यता रूपविशेषस्य" इति पाठान्तरम् ।

तथा हि—

दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
सङ्क्षिप्तं निविडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितोऽमितञ्च जघनं पादावरालाङ्गुली
छन्दो नर्त्तयितुर्यथैव मनसि श्लिष्टं तथाऽस्या वपुः ॥ ४ ॥

सर्वावस्थासु अनवद्यतां प्रकटयति, दीर्घाक्षमिति ।—वदनं मुखं, दीर्घे आयते, अक्षिणी नयने यत्र तादृशम् आयतलोचनं, तथा शरदिन्दुरिव शारदचन्द्र इव, कान्तिः शोभा यस्य तादृशं शरच्चन्द्रसदृशदृष्टिसुभगरूपं, बाहू भुजद्वयम्, अंसयोः स्कन्धयोः, नतौ नम्रौ, वृषस्कन्धवत् उन्नतस्कन्धत्वं पुरुषाणां सुलक्षणं, न तु स्त्रीणां, तासां नतस्कन्धत्वस्य सुलक्षणत्वात् सुलक्षणीयमिति भावः, उरः वक्षःस्थलं, निविडौ घनौ, मांसलौ इत्यर्थः, उन्नतौ उत्तुङ्गौ च, स्तनौ यत्र तादृशम्, अत एव सङ्क्षिप्तं सङ्कुचितम्, अप्रशस्तमिति यावत्, स्तनयोरापीनत्वेन परस्परसंश्लेषात् उरसः सङ्कुचितत्वम्, अप्रशस्तवक्षःस्थलस्य स्त्रीणां सुलक्षणत्वात्, पार्श्वे कुक्षिद्वयं, प्रमृष्टे इव घृष्टे इव, उन्नतानतत्वराहित्यात् केनचित् पाणिना परिमृज्य समीकृते इव इत्यर्थः, पार्श्वास्थ्नामलक्षितत्वादिति भावः, मध्यः मध्यदेशः, कटिदेश इत्यर्थः, पाणिमितः पाणिना करेण, पाण्युपलक्षितत्वात् मुष्टिना इत्यर्थः, मितः परिमितः, परिमेय इत्यर्थः, मुष्टिग्राह्यः इति यावत्, मृगराजकटिरिति भावः, जघनं कटिपुरोभागः, "पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः" इत्यमरः ; अमितं प्रशस्तं, विशालमिति यावत्, "अमितञ्च" इत्यत्र "नितम्बि" इति पाठे—प्रशस्तनितम्बयुक्तं, विशालत्वात् पर्वतसानुवदिति च ध्वन्यते, पादौ चरणौ, अरालाः कुटिलाः, नता इत्यर्थः, "अरालः कुटिले सर्जरसे च समदन्तिनि" इति विश्वः ; अङ्गुलयो यत्र तादृशौ, अत एव नर्त्तयितुः नृत्याचार्य्यस्य गणदासस्य, मनसि चेतसि, यथा यादृक्, छन्दः अभिप्रायः ; "अभिप्रायश्छन्द आशयः" इत्यमरः ; यादृशे अङ्गसौष्ठवे सति नृत्यं मनोहरं भवेदित्यर्थः, अस्याः मालविकायाः, वपुः शरीरं, तथैव तेनैव प्रकारेणेत्यर्थः, श्लिष्टं संहतं, रचितं सिद्धसौन्दर्य्य-

गाय। [ उपगानं कृत्वा चतुष्पदवस्तुकं गायति ] (ठ)।

दुल्लहो पिओ तस्सिं भव हिअअ! णिरासं

अम्हो! अपंगओ मे फुरइ किंपि वामओ।

गुणेन सङ्घटितमित्यर्थः, स्वभावत एव मनोहारिणी एषा गणदासस्य शिक्षावशात् नृत्यप्रारम्भे अङ्गचालनादिनैपुण्येन इदानीं सर्वजनमनोहारिणी जाता इति भावः। एतेन मालविकायाः नृत्यारम्भोचितसंस्थानविशेषो ध्वन्यते, तथा चोक्तं वसन्तराजीये—"अङ्गस्य चतुरस्रत्वं समपादौ लताकरौ। आरम्भे सर्वनृत्यानामेतत् सामान्यमिष्यते॥" इति। अत्र चतुर्थपादस्थवाक्यं प्रति पूर्वपादत्रयस्थवाक्यार्थानां हेतुत्वेनोल्लेखात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, स च शरदिन्दुकान्ति वदनम् इत्युपमया, पार्श्वे प्रमृष्टे इव इत्युत्प्रेक्षया च संसृज्यते। शार्दूलविक्रीडितं वृत्तम्॥ ३॥

(ठ) उपगानं गानारम्भात् प्राक् कर्त्तव्यम् "आलापचारि" इति लोके ख्यातं वसन्तादिरागानुगतस्वरविशेषालापमित्यर्थः। चतुष्पदवस्तुकं पदचतुष्टययुक्तं प्रबन्धं, "प्रबन्धो रूपकं वस्तु निबन्धस्याभिधानयम्" इति कात्यवेमोक्तेः।

मालविका चतुष्पदवस्तुगानमुखेन राज्ञे निजाभिलाषं निवेदयति, दुल्लह इति।—प्रियः दयितः जनः, दुर्लभः दुष्प्रापः, दुःखेन लब्धुं शक्यः इत्यर्थः, दुर्दैववशादिति भावः, अत एव हृदय! हे चित्त! तस्मिन् प्रिये, प्रियप्राप्तिविषये इत्यर्थः, निराशम् आशाशून्यं, भव, "अशक्ये वासना यस्य तस्य सर्वा विडम्बना" इति कविवाक्यात् दुर्लभस्य आशायाः परिणामविरसत्वात् तां परित्यज इति भावः; "पिओ" इत्यनन्तरं क्वचित् "मे" इत्यधिकः पाठः; अहो! विस्मये, मे मम, वामकः वामः, अपाङ्गकः नेत्रप्रान्तः, किमपि अनिर्वचनीयं यथा तथा, अप्रत्याशितभावेनेति यावत्, स्फुरति स्पन्दते, प्रियस्य दुर्लभत्वेन तत्र निराशीभवनौचित्येऽपि अकस्मात् यदा वामापाङ्गः स्फुरति, तदा अस्य फलं प्रियसमागमं कथं लभेय इति बोद्धुं न शक्नोमि, परन्तु स्त्रीणां वामाक्षिस्पन्दनस्य अभीष्टसमागमसूचकत्वात् मन्ये, 'प्रियसमागमो मे अवश्य-

एसो सो चिरदिट्ठो कह उण दट्ठव्वो ?
णाह ! म पराहीणं तुइ गणअ सतिण्हं ॥ (ङ)४ ॥

* दुर्लभः प्रियस्तस्मिन् भव हृदय ! निराशम्
अहहापाङ्गको मे स्फुरति किमपि वामकः ।
एष स चिरदृष्टः कथं पुनर्द्रष्टव्यः ?
नाथ ! मां पराधीनां त्वयि गणय सतृष्णाम् ॥ इति स० ।

प्नोतीति अहो इति विस्मयार्थकेन अव्ययेन द्योतितं, चिरदृष्टः सङ्कल्पवशात् बहुदिनावधि हृदये सर्वदा प्रत्यक्षीकृत इत्यर्थः, सः अतिवाञ्छितः, एषः पुरतः परिदृश्यमानः प्रियः, कथं केनोपायेन, पुनः वारान्तरे, द्रष्टव्यः ? अवलोकयितव्यः ? एतावन्तं कालं सङ्कल्पवशात् यः मनसा प्रत्यक्षीकृत., स इदानीं किञ्चित्कालं साक्षात् परिदृश्यमानोऽपि केनोपायेन पुनरेवं साक्षात् द्रष्टव्यः इति नावधारयितुं शक्नोमीति भावः, "फुरइ" इत्यत्र "परिप्फुरइ" इति पाठे—परिस्फुरति इति स० । "दट्ठव्वो" इत्यत्र "उवणइदव्वो" इति पाठान्तरे—उपनेतव्यः इति स० । एवं दर्शनाभिलाषं प्रकटयित्वा निजमनोभावं प्रकाशयति,नाथ ! हे प्रभो !, हे दयित ! इति यावत्, पराधीनां परायत्तां, स्वस्य अप्रभुमिति यावत्, मां त्वयि त्वद्विषये, सतृष्णां साभिलाषाम्, अनुरागिणीमित्यर्थ, गणय विजानीहि, त्वयि सानुरागाऽपि अहं पराधीनत्वात् त्वत्समीपं गन्तुमसमर्था, अत एव कृपया त्वमेव अविलम्ब मा त्वत्सकाशं नय,नाहं कालक्षेपं सोढुं समर्था इति भावः । "गणअ" इत्यत्र "परिगणअ" इति पाठान्तरे—परिगणय इति स० । एतदेव चतुष्पदबद्धं पद्यं छलिकं नाम नाट्यं प्रकृतार्थानुगुणञ्च,एतदेव द्वारीकृत्य मालविकया राज्ञे आत्मानुरागः प्रकटितः, तच्चाग्रे विदूषकोक्त्या स्फुटीभविष्यति । अत्र च चतुर्षु पादेषु क्रमेण वैराग्योत्सुक्य-सङ्कल्पात्मसमर्पणरूपा. चतस्रः अवस्थाः प्रदर्शिताः । श्लोकेऽस्मिन् चतुर्षु चरणेषु क्रमेण निर्वेदः, विस्मयः, हर्षश्चिन्ता, दैन्यञ्चेति व्यभिचारिभावास्तत्तदनुभावैर्मुखरागादिभि. सम्यक् प्रदर्शिता इत्यपि केचित् । अत्र निराशत्वं प्रति प्रियस्य दुर्लभत्वं हेतुरिति निर्देशात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४ ॥

[ ततो यथारसमभिनयति ]। (ड)

विदू। [अपवार्य्य]। भो वअस्स! चदुप्पदवत्थुअं दुवारीकरिअ तुइ उवट्ठाविदो विअ अप्पा अत्तभोदीए। * (ढ)

राजा। सखे! एवमावयोर्हृदयम्। अनया खलु (ण)—

जनमिममनुरक्तं विद्धि नाथेति गेये
वचनमभिनयन्त्या स्वाङ्गनिर्देशपूर्वम्।

---

* भो वयस्य! चतुष्पदावस्थाकं द्वारीकृत्य त्वय्युपस्थापित इवात्माऽत्रभवत्या इति स०।

---

( ड ) यथारसं रसानुकूलं, विप्रलम्भशृङ्गाररसानुकूलं यथा तथेत्यर्थः, अभिनयति अङ्गभङ्गीविशेषेण वाचा च विप्रलम्भशृङ्गाररसं प्रकाशयतीत्यर्थः।

( ढ ) चतुष्पदावस्थाकं चत्वारि पदान्येव चतस्रः अवस्था वैराग्यौत्सुक्यसङ्कल्पात्मसमर्पणरूपा यत्र तादृशं पद्यं, यद्वा—चतुर्षु पदेषु प्रकटिताः चतस्रः अवस्था यत्र तादृशं पद्यम्। "चदुप्पदवत्थुअं" इत्यत्र "चदुप्पदवत्तुअं" "चउप्पदवत्तुअं" इति च पाठे—"चतुष्पदवस्तुकम्" इति स०। चतुष्पदवस्तुकं छलिकाख्यं चतुष्पदनिबद्धं प्रबन्धमिति तस्यार्थः, द्वारीकृत्य उपायीकृत्य, उपायरूपेण गृहीत्वेत्यर्थः, "दुल्लहो पिओ" इत्यादि गानच्छलेनेति भावः, आत्मा स्वं, त्वयि तुभ्यमित्यर्थः, उपस्थापितः समर्पितः, उपहाररूपेण दत्तः इत्यर्थः। "अत्तभोदीए" इत्यत्र "तत्तभोदीए" इति पाठान्तरम्।

( ण ) आवयोः मालविकायाः मम च उभयोरेव, हृदयम् एवम् अन्योऽन्यानुरक्तमित्यर्थः, न केवलम् अस्या एव हृदयं मयि सानुरागं, ममापि अस्यां तथैवेति निष्कर्षः। "एवमावयोः"इत्यत्र "एवमेव ममापि" इति पाठान्तरम्। अनया मालविकया।

राजा मालविकायाश्चेष्टितं स्वाभिप्रायानुकूलमिति विदूषकं विज्ञापयति, जनमिति।—नाथ! हे प्रभो! इमं मल्लक्षणं, जनं मां मालविकामित्यर्थः, अनुरक्तम् अनुरागिणं, त्वयीति शेषः, विद्धि जानीहि, इति

प्रणयगतिमदृष्ट्वा धारिणीसन्निकर्षा-
दहमिव सुकुमारप्रार्थनाव्याजमुक्तः ॥ ५ ॥

[मालविका गीतान्ते निष्क्रमितुमारब्धा]।

विदू। भोदि! चिट्ठ। किं पि वो विसुमरिदो तत्त कम्मभेदो, तं दाव पुच्छिस्सं। * (त)

---

* भवति! तिष्ठ। किमपि वो विस्मृतः तत्र कर्मभेदः, तं तावत् प्रक्ष्यामि इति सं०।

---

एवमर्थके चतुष्पदवस्तुकस्य चतुर्थचरणरूपे, गेये गाने, गानकाले इत्यर्थः, वचनं "णाह म पराहीणं तुइ गणअ सतिस" इति वाक्यं, स्वाङ्गनिर्देशपूर्वं स्वस्य आत्मनः, अङ्गं हृदयादिरूपं, तन्निर्देशपूर्वं तत्प्रदर्शनपूर्वकम्, अभिनयन्त्या अभिनयेन प्रकाशयन्त्या, अङ्ग वाक्यादिभिः अवस्थानुकरणस्य अभिनयपदार्थत्वात् "मं" इत्युच्चारणकाले हृदयोपरि हस्तस्थापनरूपाङ्गिकाभिनयेन, "णाह म पराहीणं" इत्यादिरूपवाचिकाभिनयेन च, आत्मनि स्वानुरागं निवेदयन्त्या इत्यर्थः, अनया इति गाग्यपदेनान्वयः, मालविकया, धारिण्याः देव्याः, सन्निकर्षात् सामीप्यात, मद्दिषार उपस्थितिहेतोरित्यर्थः, प्रणयगतिं स्वस्यां मम अनुरागावस्थाम्, अदृष्ट्वा अनवलोक्य, सम्यक् अबुद्धा इति यावत्, सुकुमारप्रार्थनाव्याजं सुकुमारा सुकोमला, सुनम्रा इति यावत्, या प्रार्थना "कहं उण दट्ठव्वो" इत्यादिरूपा याच्ञा, तस्याः व्याजः छलं यस्मिन् कर्मणि तत् यथा तथा, अहम् अग्निमित्रः, उक्त इव किमपि कथित इव, मामेव उद्दिश्य तया स्वानुरागसूचकं तत् वाक्यं प्रयुक्तमिवेत्यर्थः। अत्र अहमुक्त इव इति वाच्या क्रियोत्प्रेक्षा ऽलङ्कारः। मालिनी वृत्तं—"न-न म-य य-युतेयं मालिनी भोगिलोकैः" इति तल्लक्षणात्॥ ५॥

(त) वः युष्माकं, युष्मासु इत्यर्थः। तत्र छलिकगाने। कर्मभेदः कार्य्यविशेषः। तं कर्मभेदम्। राज्ञो दर्शनपिपासा निवारयितुं यथेच्छं दर्शनावसरप्रदानाय किञ्चिदधिककालं तदानीमतिरमणीयदर्शनायाः मालविकायाः तत्रावस्थापनाय विदूषकस्य कौशलमिदम्॥ "किपि"

गण। वत्से! उपमात्र श्चिल्लोपदेशविशुद्धा यास्यसि। (थ)

[ मालविका स्थिता ]। (द)

राजा। [ स्वगतम् ]। अहो! सर्वास्ववस्थासु चारुता शोभान्तरं पुष्यति। (ध) तथा हि—

वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे

कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम्।

---

इत्यत्र "किंचि" इति पाठान्तरे—किञ्चित् इति स०। "तत्र" इति पाठः बहुषु पुस्तकेषु न दृश्यते।

(थ) "वत्से!" इत्यत्र "भद्रे!" इति पाठान्तरम्। उपदेशविशुद्धा उपदेशे शिक्षायां, शिक्षितविषये इत्यर्थः, विशुद्धा निर्दोषा, यं कर्ममेदं भवती विस्मृतवतीत्यनेनोक्तं, तस्य सम्यक् उत्तरदानेन निजशिक्षा न सदोषा इति प्रमाणयित्वा यास्यसि, अन्यथा एते तव शिक्षा इदानीमपि असम्पूर्णा इति मंस्यन्ते इति निष्कर्षः। "वत्से!" इत्यादि "यास्यसि" इत्यन्तपाठे—"भद्रे! उपदेशविशुद्धा यातुमर्हसि" इति पाठान्तरम्।

(द) स्थिता गमनात् निवृत्ता इत्यर्थः। "मालविका स्थिता" इत्यत्र "मालविका निवृत्य स्थिता" इत्यधिकः पाठः क्वचित्।

(ध) चारुता रमणीयता, शोभान्तरं विशिष्टं सौन्दर्यम्, अन्यविधं सौन्दर्यं वा, पुष्यति धारयति, वर्द्धयतीत्यर्थः, या हि स्वभावत एव सुन्दरी, सा यादृक्वेशभूषादिकं करोति, येन भावेन अवतिष्ठते वा, तत् सर्वमेव तस्याः सौन्दर्यवर्द्धनाय भवति इति निष्कर्षः।

तदेव प्रतिपादयितुमाह, वाममिति।—सन्धौ सन्धिस्थाने, कर-प्रकोष्ठयोः संयोगस्थाने मणिबन्धे इत्यर्थः, स्तिमितं स्थिरं, निस्पन्दभावेनावस्थानादिति भावः, वलयं कटकं, करभूषणमिति यावत् यत्र तादृशम्, एतेन हस्तयोः वलत्वमुपचितत्वञ्च व्यज्यते, वामं हस्तं करं, नितम्बे कटिदेशे इति यावत्, न्यस्य संस्थाप्य, श्यामा प्रियङ्गुः शारिवा वा, श्यामलता इत्यर्थः, "श्यामा स्त्री शारिवोभयोः। अप्रसूताङ्गनायाञ्च प्रियङ्गावपि वागुजे" इति मेदिनी; तस्याः विटपसदृशं शाखातुल्यम्,

पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्यादस्याः स्थितमतितरां कान्तमृज्वायतार्द्धम् ॥ ६ ॥

देवी। णं गोदमवअणं वि अज्जो हिअए करेदि ? * (न)

* ननु गौतमवचनमप्यार्यो हृदये करोति ? इति सं०।

एतेन हस्तयोः सुकोमलत्वं स्निग्धत्वम् अस्थूलत्वञ्च व्यज्यते, द्वितीयं दक्षिणं हस्तं, स्रस्तं शिथिलं यथा तथा, मुक्तं लम्बितमित्यर्थः, कृत्वा विधाय, दक्षिणकरं दक्षिणोरूपार्श्वे लम्बितभावेन स्थापयित्वा इत्यर्थः, पादस्य वाम-दक्षिणयोरन्यतरचरणस्य, अङ्गुष्ठेन वृद्धाङ्गुल्या, आलुलितानि मन्दं मन्दं चालितानि, कुसुमानि पुष्पाणि, सौन्दर्यसौगन्ध्यसम्पादनार्थं कोमलचरणायाः पीड़ानिवारणार्थञ्च इतस्ततो विक्षिप्तानि इति भावः यत्र तादृशे, एतेन चरणयोः कुसुमादपि सुकोमलत्वं व्यज्यते, कुट्टिमे निबद्धाया भुवि, स्फटिकादिमणिनिबद्धरङ्गभूमौ इत्यर्थः, "कुट्टिमोऽस्त्री निबद्धा भूः" इत्यमरः ; पातिते विनिहिते, अक्षिणी नेत्रे यस्मिन् तत् यथा तथा, ऋजु सरलम्, अत एव आयतं दीर्घम्, अर्द्धं देहार्द्धभागः, नाभितश्चरणावधि निम्नार्द्धाङ्गमिति यावत् यस्मिन् तत् यथा तथा च, अस्याः मालविकायाः, स्थितम् अवस्थानम्, दण्डवदवस्थितिर्भङ्गी इति यावत्, नृत्यात् नर्त्तनात्, अपीति शेष, अतितराम् अत्यर्थं, कान्तं रमणीयं, दृश्यते इति शेषः। अत्र हस्तादीनां विशेषणस्य साभिप्रायत्वात् परिकरालङ्कारः,—"उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः" इति लक्षणात्, किञ्च, "श्यामाविटपसदृशम्" इत्यत्र 'सदृश' शब्दप्रयोगात् आर्थी उपमा, तथा स्थितस्य कान्तत्वं प्रति पूर्वपादत्रयोक्तवाक्याना हेतुत्वनिर्देशात् वाक्यार्थहेतुकं काव्यलिङ्गञ्च, तदेतेषां परस्परसापेक्षत्वात् सङ्करः। मन्दाक्रान्ता वृत्त—"मन्दाक्रान्ताऽम्बुधिरसनगैः मो भ नौ तौ गयुग्मम्" इति लक्षणात् ॥ ६ ॥

(न) गौतमस्य गोतमगोत्रजातस्य, गौतमाख्यस्य वा, विदूषकस्येति शेषः, वचनं वाक्यम्। हृदये करोति ? अवश्यकर्त्तव्यतया चेतसि स्थिरीकरोति ? चाटुजीविनः विदूषकस्य असम्बद्धप्रलापं सत्यं मत्वा आर्य्यः

गण। देवि ! मा मैवम्। देवप्रत्ययात् सम्भाव्यते सूक्ष्मदर्शिता गौतमस्य। (प) पश्य—

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः॥ ७॥

---

तदनुसारेण कार्य्यं कर्त्तुं नार्हति, अतः मालविकामिदानीं गन्तुमनुजानातु इति भावः।

(प) मा मैवम् एवं गौतमवचनस्य अवज्ञेयत्वमित्यर्थः, मा मा न हि न हि, अत्यन्तनिषेधसूचनार्थं मा-शब्दस्य द्विरुक्तिः। अत्र हेतुमाह, देवेति।—देवस्य राज्ञः, लोकचरित्राभिज्ञस्येति भावः, प्रत्ययात् विश्वासात्, विदूषकस्य कार्य्यकुशलितां प्रतीति भावः, यद्वा—देवस्य प्रत्ययात् अधीनात्, देवस्य एकान्ताज्ञावहत्वेन सर्वदा साहचर्य्यादिति यावत्, "प्रत्ययोऽधीनशपथ ज्ञानविश्वासहेतुषु" इत्यमरः। "दैवप्रत्ययात्" इति पाठान्तरम्। सूक्ष्मदर्शिता तीक्ष्णबुद्धित्वम्, अन्तर्दृष्टिरिति यावत्, सम्भाव्यते अनुमानेन बुध्यते इत्यर्थः।

विद्वत्संसर्गस्य प्रभावं प्रमाणयितुं दृष्टान्तविशेषमाह, मन्द इति।—पङ्कच्छिदः कर्दमनाशकस्य, जलप्रसादनकतकाख्यवृक्षस्येत्यर्थः, फलस्य "निर्मलीफल" इति प्रसिद्धस्य कतकफलस्य, निकषेण सङ्घर्षेण, सम्मिश्रणेनेत्यर्थः, आविलं कलुषं, कर्दमाक्तमित्यर्थः, पय इव जलमिव, विपश्चितः विदुषः, संसर्गेण साहचर्य्येण, मन्दोऽपि मूर्खोऽपि, जन इति शेषः, "मन्दोऽतीक्ष्णे च मूर्खे च" इति मेदिनी; अमन्दताम् अमूर्खतां, विद्वत्तामित्यर्थः, पक्षे—निर्मलतामित्यर्थः, एति गच्छति। विदुषः राज्ञः संसर्गात् मूर्खस्य विदूषकस्यापि सूक्ष्मदर्शिता जाता इति निष्कर्षः। अत्र विपश्चित्सङ्गेन मन्दस्य अमन्दताप्राप्तिरूपात् सामान्यादप्रस्तुतात् राज्ञः संसर्गात् विदूषकस्य वैचक्षण्यप्राप्तिरूपस्य प्रस्तुतस्य विशेषस्य प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः, स च पङ्कच्छिदः फलस्येव इति उपमासङ्कीर्णः। पथ्यावक्त्रं वृत्त—"युजोश्चतुर्थतो जेन पथ्यावक्त्रं निगद्यते" इति लक्षणात्॥ ७॥

[ विदूषकं विलोक्य ]। तच्छृणुमो विवाचितमार्य्यस्य। (फ)

विदू। [ गणदासं विलोक्य ]। कोसिइ दाव पुच्छ, पच्छा जो मए कम्मभेदो दिट्ठो, त भाणिस्सं। * (ब)

गण। भगवति! यथादृष्टमभिधीयता गुणो वा दोषो वेति। (भ)

परि। यथा दर्शितं सर्वमनवद्यम। (म) कुतः,—

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः

पादन्यासो लयमुपगतस्तन्मयत्वं रसेषु।

---

* कौशिकीं तावत् पृच्छ। पश्चात् यो मया कर्मभेदो दृष्टः, तं भणिष्यामि इति सं०।

---

(फ) विवाचितं वक्तुमिष्ट, वक्तव्यमित्यर्थः। शृणुमः श्रोतुमिच्छाम इत्यर्थः।

(ब) कर्मभेद कर्मवैशिष्ट्यं, कर्मणः पार्थक्यमित्यर्थः, दोष इति यावत्, यद्वा—कर्मभेदः कार्य्यविदारणम्, अवश्यकर्त्तव्यस्य अङ्गहानिरिति यावत्, "भेदो द्वैधे विशेषे स्यादुपजापे विदारणे" इति मेदिनी।

(भ) यथादृष्टं दृष्टमनतिक्रम्य, यत् दृष्टं तदित्यर्थः।

(म) यथा यदित्यर्थः, दर्शितं, भवता मालविकया वा इति शेषः, भवता (प्रयोजककर्त्रा) मालविकया (प्रयोज्यकर्त्र्या) इति वा। "यथा दर्शितम्" इत्यत्र "यथा दृष्टम्" इति पाठान्तरम्। अनवद्यम् अनिन्दनीयम्, अतीव प्रशंसनीयमित्यर्थः।

अनवद्यतां प्रकटयति, अङ्गैरिति।—अन्तः अभ्यन्तरे, निहितानि स्थापितानि, वचनानि वाक्यानि येषां तादृशैः, वाक्यमन्तरेणापि भावविशेषेण वाक्यवत् सुस्पष्टमर्थसूचकैरिति यावत्, अङ्गैः नेत्रवक्त्रहस्ताद्यङ्गभङ्गीभिरित्यर्थः, अर्थः अभिनेयं वस्तु, "दुल्लहो पिओ" इत्यादि गीतार्थः इत्यर्थः, सम्यक् सुस्पष्टं यथा तथा, सूचितः प्रकटितः, पादन्यासः चरणविक्षेपः, नृत्यकाले पादचालना इत्यर्थः, लयं तालसाम्यम्, उपगतः प्राप्तः, वाद्ययन्त्रस्य तालसाम्यमनुसृत्य चरणचालना कृता

शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद्रागबन्ध स एव ॥ ८ ॥

इत्यर्थः, "उपगतः" इत्यत्र "अनुगतः" इति पाठान्तरं, रसेषु अभिनेय-विषयगतशृङ्गाराख्येषु रसेषु, निर्वेदादिभावभेदेन "दुल्लहो" इत्यादि सङ्गीतगतशृङ्गारस्य नानाभावविवक्षया रसेषु इति बहुवचननिर्देशः, तन्मयत्वं तदात्मकत्वं, रसस्वरूपत्वमित्यर्थः, अस्या इति शेषः, रसस्वरूपत्व-प्राप्तिमन्तरेण रसाभिव्यक्तिर्न जायते, न वा तेन सामाजिकानामपि रसग्रहणमिति तन्मयत्वोक्तिः, यद्वा—तन्मयत्व यया प्रथनमिदं गीतं कृतं, तया स्वस्य अभेदत्वरूपं सारूप्यमित्यर्थः, प्रकटीभूतमिति शेषः, शाखा नृत्यहस्तानां मालाविशेषः, नृत्यकाले मनोहररूपेण हस्तेन मानप्रदान-मित्यर्थः, हस्तचालना इत्यर्थो वा, "शाखा तु नृत्यहस्तानां या माला वित्तनर्त्तना" इति काटयवेमघृतवचनात्, सा एव योनिः उत्पत्तिकारणं यस्य तादृशः सन्, अभिनये शाखाया एव विशेषोपयोगित्वात् इति भावः, अभिनयः नाट्यप्रयोगः, "प्रयोगो यस्तु नाट्यादेर्भवेदभिनयोऽपि सः" इत्युक्तेः, अभिनयः नाटकीयपात्राणामवस्थाऽनुकरणं वा, मृदुः सुकुमारः, सर्वजनमनोहर इत्यर्थः, तस्य अभिनेयस्य, ये विकल्पाः विकल्पन्ते इति विकल्पाः विविधकल्पाः, विविधदैहिकभङ्गीविशेषा इति यावत्, तस्य अभिनयस्य विकल्पा भेदा इत्यर्थो वा, तेषाम् अनुवृत्तौ अनुसरणे, भावः चेष्टा, तद्गतः अवस्थाभेद इत्यर्थः, "भावः सत्ता-स्वभावाभिप्राय-चेष्टात्मजन्मसु" इति मेदिनी ; तथा स एव अभिनेयनायकादिगत एव, अनुकार्य्यसदृशः एवेत्यर्थः, रागबन्धः अनुरागसम्बन्धः, अविकलानुरागाभिनय इत्यर्थः, विषयात् विषयान्तरा-दित्यर्थः, एतत्सङ्गीतातिरिक्तविषयादिति भावः, भावम् अभिप्रायं, चित्त-वृत्तिविशेषमित्यर्थः, नुदति प्रेरयति, आकर्षतीत्यर्थः, विषयान्तरसंसर्ग-राहित्येन स्वप्रवणं करोतीति यावत्। "नुदति" इत्यत्र "तुदति" इति क्वचित् पाठः। मालविकायाः सङ्गीतादिकं सर्वमेवानवद्यमिति भावः। श्लोकेऽस्मिन् मालविकायाः नृत्यगीतादेरनवद्यताप्रतिपादनं प्रति एकस्यैव अङ्गैरन्तर्निहितवचनैः इत्यस्य साधकत्वे सत्यपि बहुसाधकान्तरोल्लेखात्

गण। देव कथ मन्यते ?

राजा। वयं स्वपक्षशिथिलाभिमानाः संवृत्ताः। (य)

गण। अद्य नर्त्तयिताऽस्मि।—(र)

उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिन।
श्यामायते न विद्वत्सु यः काञ्चनमिवाग्निषु॥ ९॥

समुच्चयालङ्कार., "समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके। खले कपोतिकान्यायात् तत्करः स्यात् परोऽपि चेत्॥" इत्यादिदर्पणोक्त-लक्षणात्, किञ्च, अङ्गानामन्तर्निहितवचनत्वस्य असम्बन्धेऽपि तत्सम्बन्धोक्ते-रसम्बन्धे सम्बन्धरूपातिशयोक्तिरपि, तदेतयोरङ्गाङ्गिभावेन सङ्करः, भावो भावम् इति छेकानुप्रासश्चेति संसृष्टिः। अत्र नुदतेस्तुदतेर्वा आकर्षणार्थक-त्वाभावात् अवाचकत्वदोषः, तथा 'रागबन्धः' इत्यनन्तरं च कारस्य तु-कारस्य वा अवश्यवक्तव्यस्य अनभिधानात् वाच्यानभिधानदोषश्चेति मन्तव्यं, "भावो भावं जयति विषयात् रागयुक्तिस्तु सैव" इति पाठात् तयोः समाधानम्। मन्दाक्रान्ता वृत्तम्॥ ८॥

(य) स्वपक्षेति।—स्वपक्षे स्वाश्रिते, मन्नियुक्ते हरदत्ते इत्यर्थः, शिथिलः मन्दीभूतः, अभिमानः गर्वः, हरदत्त एव श्रेष्ठ इत्यहङ्कार इत्यर्थः येषां तादृशाः, संवृत्ताः जाताः, तव गुणवत्तां दृष्ट्वा हरदत्त एव श्रेष्ठः सङ्गीताचार्य्यः इत्यहङ्कारो मे दूरीभूतः इत्यर्थः।

(र) अद्य अस्मिन् अहनि, नर्त्तयिता प्रशस्तनर्त्तकः, नृत्यशिक्षक इत्यर्थः, अस्मि भवामि, अभिनयेन भवतः सन्तोषसाधने समर्थत्वादिति भावः, भवद्वाक्यश्रवणेन तथा भवतः सन्तोषदर्शनेन च आत्मानं नृत्याचार्य्येषु श्रेष्ठं मन्ये इति निष्कर्षः।

स्वस्य श्रेष्ठनर्त्तकत्वं प्रमाणयितुमाह, उपदेशमिति।—सन्तः साधवः, अपक्षपातिनो विद्वांस इत्यर्थः, उपदेशिनः उपदेशदातुः शिक्षकस्य, तं तादृशम्, उपदेशं शिक्षां, शुद्धं निर्दोषं, सगुणमिति यावत्, विदुः जानन्ति, स्वीकुर्वन्तीत्यर्थः, यः उपदेशः, अग्निषु वह्निषु, काञ्चनमिव सुवर्णमिव, विद्वत्सु सुधीषु, भवादृश-सदसद्विचारक्षमेषु इति यावत्, "विद्वत्सु" इत्यत्र "युष्मासु" इति पाठान्तरं, न श्यामायते न श्याम इव

देवी। दिट्ठिआ परिक्खाराहणेण अज्जो वड्ढदु। * (ल)

गण। देवि। त्वत्परिग्रहोऽपि मे वृद्धिहेतुः। (व) [ विदूषकं विलोक्य ]। गौतम। वदेदानीं यत्ते मनसि वर्त्तते।

विदू। पढमोवदेसदंसणे पढमं बम्हणपूजा कादव्वा, सा णं वो विसुमरिदा। † (श)

* दिष्ट्या परीक्षाराधनेन आर्य्यो वर्द्धताम् इति सं०।

† प्रथमोपदेशदर्शने प्रथमं ब्राह्मणपूजा कर्त्तव्या, सा ननु वो विस्मृता इति सं०।

आचरति, न मलिनीभवतीत्यर्थः, न सदोषत्वेन परिणतो भवतीति यावत्। भवन्तः सर्व्व एव एकवाक्येन यदा मच्छिष्याया मालविकायाः अभिनयनैपुण्य प्रशंसन्ति, तदा तत्-शिक्षकोऽहमद्य आत्मानं नर्त्तकश्रेष्ठं विवेचयामीत्यर्थः। अत्र अप्रस्तुतात् सामान्यात् उपदेशिन उपदेशात् प्रस्तुतस्य नृत्याचार्य्यस्य गणदासस्य विशुद्धोपदेशस्य प्रतीतेः अप्रस्तुत-प्रशंसाऽलङ्कारः, स च उपमासङ्कीर्णः। अनुष्टुप् वृत्तम् ॥ ८ ॥

(ल) परीक्षाराधनेन परीक्षा प्रमाणेन वस्तुनिर्द्धारणं, विद्वज्जन-समीपे श्रेष्ठत्वाश्रेष्ठत्वयोः परिचयप्रदानमित्यर्थः, तथा आराधनेन उपासनया, सभ्यानां प्रफुल्लतासम्पादनरूपेणेत्यर्थः, वर्द्धतां क्रमशः उन्नतिं लभतां, लोके अधिकतरं समादरं प्राप्नोतु इत्यर्थः। "परिक्खाराहणेण" इत्यत्र "अपरिक्खाराहणेण" तथा "वड्ढदु" इत्यत्र "बड्ढदू" इति पाठे—परीक्षाराधनेन, तथा वर्द्धते इति सं०।

(व) त्वत्परिग्रहः त्वया ग्रहणं, नाट्याचार्य्यपदे त्वत्कर्त्तृकनियोग इत्यर्थः, वृद्धिहेतुः उन्नतिकारणं, न केवल शिक्षावैशिष्ट्यं मे वृद्धिहेतुः, त्वदाश्रितः नाट्याचार्य्योऽहमित्यपि मे गौरवहेतुरिति भावः। "त्वत्परिग्रहोऽपि मे" इत्यत्र "देवीपरिग्रह एव" इति पाठान्तरम्।

( श ) प्रथमोपदेशदर्शने प्रथमं प्रथमवारम्, उपदेशदर्शने शिक्षा-कौशलप्रदर्शने इत्यर्थः। वो युष्माकं, युष्माभिरित्यर्थः। विदूषकः राज्ञो मालविकादर्शनपिपासां पूरयितुं गीतान्ते निष्क्रमणोद्यतायास्तस्याः

परि। अह्नो। प्रयोगाभ्यन्तरः प्रश्नः। (ष)

[सर्वे प्रहसिताः। मालविकाऽपि स्मितं (स) करोति]।

राजा। [स्वगतम्]। उपात्तसारश्चक्षुषा मे स्वविषयः। यदनेन— (ह)

---

"विसुमरिदो कम्मभेदो" इति छलमुद्भाव्य गमनं प्रत्यवस्थात्. ततो गण-दासेन कर्मभेदं प्रदर्शयितुम् आहतः स तद्विचारभारं कौशिक्यां समर्पित-वान्, तेन च कौशिक्या तत्सङ्गीतस्य अनवद्यत्वे प्रतिपादिते इदानीं तं कर्मभेदं ब्राह्मणपूजाया अक्षरणरूपं निर्दिश्य औदरिको ब्राह्मणः स्वकीयनर्मप्रियत्वं प्रकटितवान्, ततश्च परिहासस्य गम्यमानत्वात् नर्मनाम सन्ध्यङ्गमुक्तं भवतीति मन्तव्यम्। "पढमोवदेसदंसणो पढमं बम्हणपूजा" इत्यत्र "पुढमोवदेसदंसणो पुढमं बम्हणस्स पूआ" इति पाठान्तरेऽपि समान एव संस्कृतानुवादः।

(ष) प्रयोगाभ्यन्तरः निदर्शनविषयक इत्यर्थः, दृष्टान्तसूचक इति यावत्, लोके दृष्टान्तत्वेन प्रदर्शनोपयोगी इति भावः, "तं दाव पुच्छिस्सं" इत्यनेनोपक्रम्य विदूषकः यादृशं प्रश्नं कृतवान्, तत् दृष्टान्त-त्वेन स्थातुमर्हतीति उपहाससूचिका परिव्राजिकोक्तिरेषेति मन्तव्यं, "प्रयोगः कार्मणेऽपि स्यात् प्रयुक्तौ च निदर्शने" इति मेदिनी। यद्वा— प्रयोगाभ्यन्तरः प्रयोगमध्यवर्त्ती, नाट्योपयोगीत्यर्थः।

(स) प्रहसिताः प्रकर्षेण हसिताः, उच्चैर्हास्यं कृता इत्यर्थः। स्मितम् ईषद्धास्यम्, "ईषद्विकासि नयनं स्मितं स्यात् स्पन्दिताधरम्" इति दर्पणोक्तलक्षणकमिति यावत्।

(ह) मे मम, चक्षुषा नयनेन, स्वस्य नयनस्य, दर्शनेन्द्रियस्येत्यर्थः, विषयः इन्द्रियार्थः, रूपमित्यर्थः, "रूप शब्दो गन्ध-रस-स्पर्शाश्च विषया अमी। गोचरा इन्द्रियार्थाश्च" इत्यमरः; उपात्तः गृहीत,सारः स्थिरांशः, श्रेष्ठभाग इत्यर्थः यस्य तथाभूतः, "सारो बले स्थिरांशे च" इत्यमरः; जात इति शेषः, चक्षुर्मम द्रष्टव्यसारं दृष्ट्वा इदानीं कृतार्थं जातमिति भावः। अनेन चक्षुषा। श्लोकस्थेन "दृष्टम्" इति पदेनास्यान्वयः।

स्मयमानमायताक्ष्याः किञ्चिदभिव्यक्तदशनशोभि मुखम्।
असमग्रलक्ष्यकेशरमुच्छ्वसदिव पङ्कजं दृष्टम् ॥ १० ॥

गण। महाब्राह्मण। न खलु प्रथमं नेपथ्यसवनमिदम्। अन्यथा कथं त्वा दक्षिणीयं नार्चयिष्यामः? (क)

---

चक्षुष उपात्तसारत्वं प्रतिपादयति, स्मयमानमिति।—उच्छ्वसत् विकसत्, स्फुटनोन्मुखमिति यावत्, अत एव असमग्रम् असम्पूर्णं, किञ्चिन्मात्रं यथा तथेत्यर्थः, लक्ष्याः दृश्याः, दृश्यमाना इत्यर्थः, केशराः किञ्जल्काः यस्य तादृशं, "किञ्जल्कः केशरोऽस्त्रियाम्" इत्यमरः; पङ्कजमिव पद्ममिव, आयताक्ष्याः आकर्णविश्रान्तलोचनायाः, मालविकाया इति शेषः, स्मयमानम् ईषद्धास्ययुक्तं, किञ्चित् ईषत्, अभिव्यक्तैः प्रकाशितैः, दशनैः दन्तैः, शोभते राजते इति तादृशं किञ्चित्प्रकाशितदन्तरुचिकौमुदीविभूषितं, मुखं वदनं, दृष्टम् अवलोकितम्, अनेन चक्षुषा इति गद्यस्थकर्तृपदेनान्वयः। अत्र स्मयमानमिति पदस्य किञ्चिदभिव्यक्तदशनशोभित्वे तथा उच्छ्वसदिति पदस्य असमग्रलक्ष्यकेशरत्वे हेतुत्वेनोल्लेखात् पदार्थहेतुके काव्यलिङ्गालङ्कारे, ते च उपमया सङ्कीर्य्येते। आर्य्या जातिः ॥ १० ॥

(क) महाब्राह्मण! ब्राह्मणोत्तम! इति परिहाससूचकसम्बोधनम् अल्पबुद्धेर्विदूषकस्य सन्तोषसाधनार्थमवगन्तव्यं, वस्तुतस्तु "शङ्खे तैले तथा मांसे वैद्ये ज्यौतिषिके द्विजे। यात्रायां पथि निद्रायां महच्छब्दो न दीयते ॥" इति शास्त्रात् ब्राह्मणशब्दस्य प्राक् महच्छब्दप्रयोगः निकृष्टब्राह्मणसूचक एव, मूर्ख ब्राह्मण! प्रतिग्रहपतित ब्राह्मण! इति वा तस्यार्थः। नेपथ्य रङ्गभूमिः, रङ्गभूमिदर्शनमित्यर्थः, तदेव सवनं व्रतार्थं स्नानमित्यर्थः, यद्वा—नेपथ्ये रङ्गभूमौ, सवनं स्नानम्, अवगाहनमिति यावत्, प्रवेश इति भावः, "नेपथ्यं तु प्रसाधने। रङ्गभूमौ वेशभेदे" इति हैमः; "सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च" इति मेदिनी। यद्वा—सवनं प्रसवः, अवतरणमित्यर्थः, प्रथमम् आदिमं, नेपथ्यसवनं रङ्गभूमौ अवतरणम्, इतः पूर्वं बहुशः अनया रङ्गभूमौ अवतीर्य्य सङ्गीतादिकञ्च कृतमित्यर्थः। "नेपथ्यसवनम्" इत्यत्र "नेपथ्यदर्शनं" "नेपथ्य-

विदू। मए णाम सुक्खघणगज्जिदे अतरिक्खे जलपाणेण चादआइदम्। * (ख)

परि। एवमेव। (ग)

विदू। तेण हि पण्डिदपरितोसप्पच्चया णं मूढा जादी। जदि अत्तभोदीए सोहणं भणिदं, तदो इमं से पारितोसिअं पअच्छामि। [इति राज्ञो हस्तात् कटकमाकर्षति]। † (घ)

---

* मया नाम शुष्कघनगर्जितेऽन्तरीक्षे जलपानेन चातकायितम् इति स०।

† तेन हि पण्डितपरितोषप्रत्यया ननु मूढा जातिः। यद्यत्रभवत्या शोभनं भणितं, तत इदमस्यै पारितोषिकं प्रयच्छामि इति स०।

---

प्रदर्शनम्" इति च पाठान्तरद्वयम्। अन्यथा प्रथमनेपथ्यसवनं चेत् इत्यर्थ, दक्षिणीयं ( दक्षिणामर्हतीति छ ) दक्षिणादानयोग्य, सुब्राह्मण-मिति भावः। "दक्षिणीयम्" इत्यत्र "अर्चनीयम्" इति पाठान्तरम्। नार्चयिष्यामः न आराधयिष्यामः, अभिनयोऽयं यदि प्राथमिकोऽभविष्यत्, तदा अवश्यमेव यथायोग्यं दक्षिणादानेन त्वां समसंस्यास्यहे इति निष्कर्षः।

(ख) शुष्केति।—शुष्कस्य जलहीनस्य, घनस्य मेघस्य, गर्जितं गर्जनं यस्मिन् तादृशे, अन्तरीक्षे आकाशे, शारदीयान्तरीक्षे इति भावः, जलपानेन जलपिपासुना सता इत्यर्थः, "जलपाणेण" इत्यत्र "जलपाणं इच्छदा" इति पाठे—जलपानमिच्छता इति स०। चातकायितं चातकवत् आचरित, तृषार्त्तश्चातको यथा मेघगर्जनं श्रुत्वैव जलपानाशया अन्तरीक्षे मुख व्यादाय तिष्ठति, तत्र जलमस्ति न वा इति न विचारयति च, ततो जलाभावात् तदलब्ध्वा दुःखितो भवति, तद्वदहमपि किञ्चित्प्राप्त्याशया मुखं व्यादायापि कृपणगणदासात् किमपि अप्राप्य दुःखितो भवामीति सरलार्थः। अत्र "मए णाम सुहचादएण विअ सुक्खघणगज्जिदे अतरिक्खे जलपाणं इच्छिद" इति क्वचित् पाठान्तरम्।

(ग) एवमेव त्वया यदुक्तं तत् सत्यमेव इत्यर्थः। उक्तिरियं परि-हासव्यञ्जिकेति मन्तव्यम्। क्वचित् पाठोऽयं नास्ति।

देवी। चिट्ठ. गुणंतर अजाणंतो किं-णिमित्तं तुमं आहरणं देसि ? .. (ङ)

* तिष्ठ, गुणान्तरमजानन् किं-निमित्तं त्वमाभरणं ददासि ? इति स०।

(घ) तेन हि मालविकाया अभिनयदर्शनेन सर्वेषामेव भवता परितुष्टत्वेन हेतुना इत्यर्थः। मूढ़ा स्वयं सदसद्विचारासमर्था, जाति' अस्मादृशो जन इत्यर्थः, पण्डितपरितोषप्रत्यया पण्डितानां विदुषां, सदसद्विचाराभिज्ञानामित्यर्थः, परितोषेण सन्तोषेण, सन्तोषदर्शनेनेत्यर्थः, प्रत्ययः विश्वासः, उत्कर्षविषये निश्चयता इत्यर्थः यस्याः तादृशी, पण्डितानां परितोष एव प्रत्ययः परीक्षणीयविषयस्य वैशिष्ट्ये विश्वासः यस्यास्तादृशी इति वा समासवाक्यं, ये स्वयं गुणदोषविचारासमर्थाः, ते "मूढ़ाः परप्रत्ययनेयबुद्धयः" इति कविवचनानुसारेण पण्डितानां प्रशंसावचनेनैव परीक्षणीयस्य गुणवत्तायां विश्वसन्ति, प्रशंसन्ति च परीक्षादातारमिति भावः, यूयं सर्वे यदा मालविकां प्रशंसन्ति, तदा अहमपि तां प्रशंसामीति निष्कर्षः। ननु इति निश्चये। "तेण हि" इत्यत्र "अहवा" "मूढा जादी" इत्यत्र "मूढजादी" इति पाठे—अथवा, मूढ़जातिः इति च स०। तत्र परितोषेण किं भवेत् ? इत्याशंसायामाह, जदीति।—"जदि" इत्यत्र "जदो" इति पाठे—यतः इति स०। अत्रभवत्या माननीयया, मालविकया इत्यर्थः, "अत्रभवत्या कौशिक्या" इति कश्चित्। शोभनं सुन्दरं, मनोहरं यथा तथेत्यर्थः, भणितं कथितं, गीतमित्यर्थः। अस्यै मालविकायै। कटकं वलयं। स्वयं गुण-दोषविचारे असमर्थस्य मम भवतां परितोषदर्शनेन अय विश्वासो जातः यदनया शोभनं गीतम्, अत एव पुरस्काराही एषा इति भावः।

(ङ) गुणान्तरं गुणविशेषं, कीदृशे गुणे विद्यमाने गुणी पारितोषिकमर्हति, तत्स्वरूपमित्यर्थः। परितोषलिङ्गं कटकं लब्धुः मालविकायाः राजनि चेत् अनुरागवृद्धिर्भवेदित्याशङ्का महिष्या विदूषक एवं निषिद्धः इति मन्तव्यम्।

विदू। परकेरंत्ति करिअ। * (च)

देवी। [आचार्य्यं विलोक्य]। अज्ज! गणदास! णं दंसि-दोवदेसा दे सिस्सा? † (छ)

गण। वत्से! एहि, गच्छाव इदानीम्। (ज)

[सहाचार्य्येण निष्क्रान्ता मालविका]।

विदू। [जनान्तिकम]। एत्तिओ से मदिविहवो भवंतं सेविदुं। ‡ (झ)

राजा। अलमलं परिच्छेदेन। (ञ) अहं हि—

---

* परकीयमिति कृत्वा इति सं०।

† आर्य्य! गणदास! ननु दर्शितोपदेशा ते शिष्या? इति सं०।

‡ एतावान्मे मतिविभवो भवन्तं सेवितुम् इति सं०।

---

(च) परकीयम् अन्यदीयम्, इति कृत्वा इति निश्चित्य, प्रयच्छामीति शेषः, स्वकीयञ्चेत् एवं दातुं न शक्नुयां, परधनेन उदारताप्रकटनस्य अनायाससाध्यत्वादिति भावः। उक्तिरियं परिहासरसिकस्य विदूषकस्य अनुरूपैवेति मन्तव्यम्।

(छ) दर्शितेति।—दर्शितः प्रदर्शितः, उपदेशः शिक्षा, शिक्षा-नैपुण्यमित्यर्थः. यया सा तादृशी, शिष्या मालविका। तव शिष्यायाः [illegible] परिसमाप्तञ्चेत् इदानीं तां प्रस्थातुमाज्ञापयेति भावः।

(ज) गच्छावः, आवामिति शेषः। "एहि गच्छावः" इत्यत्र "प्रतिष्ठस्व" इति पाठान्तरम्।

(झ) सेवितुम् आराधयितुं, प्रीणयितुमिति यावत्, एतावान् एतत्परिमाण एव, मालविकाया दर्शनसङ्घटनपर्य्यन्त एवेत्यर्थः, मति-विभवः बुद्धिसम्पत्, बुद्धिप्रभाव इत्यर्थः, यावत्परिमिता मे बुद्धिः, तया मया एतत्पर्य्यन्तः कृतः, इदानीमस्या लाभाय भवानेवोपायं स्थिरीकरोतु इति भावः।

(ञ) परिच्छेदेन तव मतिविभवस्य एतावान् इति इयत्ताकरणेन, अलमलमिति अवधारणे द्विर्भावः, परिच्छेदो नैव करणीय इत्यर्थः, त्वया

भाग्यास्तमयमिवाक्ष्णोर्हृदयस्य महोत्सवावसानमिव ।
द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरस्करणीम् ॥ ११ ॥

विदू । [ आत्मगतम् ] । साधु, दरिद्दादुरो विअ वेज्जेण ओसहं उप्पादीअमाणं इच्छसि । * (ट)

* साधु, दरिद्रातुर इव वैद्येनौषधमुत्पाद्यमानमिच्छसि इति स० ।

देव्याः कोपमगणयित्वा तां मह्यं दर्शयितुं यादृक् बुद्धिकौशलं प्रकटितं, तेन तव रतिविभवस्य इयत्तेव भवितुं नार्हतीति भावः ।

एवं विदूषकं प्रशस्य राजा स्वामवस्थां प्रकटयति, भाग्येति ।—तस्याः मालविकायाः, तिरस्करिणीं जवनिकान्तर्गमनं, प्रस्थानमिति यावत्, "तिरस्करणम्" इति पाठे—तिरोधानम्, इतः प्रस्थानमित्यर्थः, अक्ष्णोः नयनयोः, ममेति शेषः, भाग्यस्य शुभादृष्टस्य, अस्तमयमिव अदृश्यीभवनमिव, विनाशमिवेत्यर्थः, हृदयस्य अन्तःकरणस्य, महोत्सवावसानमिव सुमहदानन्दजनकव्यापारस्य परिसमाप्तिमिव, धृतेः धैर्य्यस्य, "धृतिर्धारणधैर्य्ययोः" इत्यमरः ; द्वारपिधानमिव द्वारं प्रवेशनिर्गमनमार्गः, तस्य पिधानमिव अवरोधनमिव, धैर्य्यावलम्बनस्य प्रतिबन्धकमिवेत्यर्थः, मन्ये सम्भावयामि, मालविकायाः अन्तर्द्धाने मम नेत्रयुगलं विफलमिव, हृदयं निरानन्दमिव, तथा धैर्य्यञ्च अवरुद्धमार्गमिव मन्ये इति समुदितार्थः, मालविकाया अदर्शने अत्यर्थमधीरोऽस्मि, अत एव त्वं पुनरपि कौशलेन मां मालविकां दर्शय, तव बुद्धिप्रभावः अतुलनीय इति भावः । अत्र अस्तमयमिव अवसानमिव पिधानमिवेति त्रयाणां क्रियोत्प्रेक्षाणां संसृष्टिः । आर्य्याजातिः ॥ ११ ॥

(ट) साधु उत्तमम्, ( "वेश या चो'क" इति वङ्गभाषा । "बहुत् आच्छा" इति हिन्दीभाषा ) दरिद्रातुर इव निर्धनरोगीव । उत्पाद्यमानं प्रस्तूयमानम् । "दरिद्दादुरो विअ" इत्यत्र "दलिद्दो विअ आदुरो" "उप्पादीअमाणं" इत्यत्र च "दीअमाणं" इति पाठान्तरे—दरिद्र इव आतुरः, तथा दीयमानम् इति च स० । निर्धनो रोगी यथा वैद्येन महायासं स्वीकार्य्य प्रस्तूयमानेन औषधेन निरामयीभवितुमिच्छति,

हर। [प्रविश्य]। देव! मदीयमिदानीं प्रयोगमवलोकयितुं प्रसादः क्रियताम्। (ठ)

राजा। [स्वगतम्]। अवसितो मे दर्शनार्थः। [दाक्षिण्यमवलम्ब्य प्रकाशम्]। ननु पर्य्युत्सुका एव वयम्। (ड)

हर.। अनुगृहीतोऽस्मि।

[नेपथ्ये]। जयतु जयतु देवः। उपारूढ़ो मध्याह्नः। (ढ) तथाहि—

पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां
सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि।

---

औषधप्रस्तुतार्थं न कमपि आयासं स्वीकरोति, तथा भवानपि मालविकादर्शनाय मय्येव सर्वं भारमर्पयित्वा स्वयं न किञ्चिदपि आयासं स्वीकर्त्तुमिच्छति, एतत्तु ते नोचितमिति भावः।

(ठ) प्रयोगम् अभिनयम्। प्रसादः अनुग्रहः, "प्रसादोऽनुग्रहे काव्यगुणे स्वास्थ्य प्रसत्तिषु" इति मेदिनी।

(ड) अवसितः समाप्तिं गतः। दर्शनार्थः दर्शनप्रयोजनं, मालविकादर्शनार्थमेव मे हरदत्त-गणदासयोरभिनयदर्शनस्पृहा, इदानीं मुख्यप्रयोजनसिद्धेः सा निवृत्ता इति भावः, "अर्थोऽभिधेय-रै-वस्तु-प्रयोजन-निवृत्तिषु" इत्यमरः। दाक्षिण्यम् औदार्य्यं,सर्वत्र समदर्शित्वरूपं मनोभावम् इत्यर्थः, "दक्षिणे सरलोदारो" इत्यमरः। पर्य्युत्सुकाः उद्युक्ताः, अभिनयदर्शनाय व्यग्रा इत्यर्थः, "इष्टार्थोद्युक्त उत्सुकः"इत्यमरः।

(ढ) उपारूढ़ः समुपस्थित इत्यर्थः।

मध्याह्नः समुपस्थितः, इदानीं सभाभङ्गः क्रियतामिति राज्ञे विज्ञापनाय नैपथ्यवर्त्ती वैतालिकः मध्याह्नं वर्णयति, पत्रेति।—हंसाः प्रसिद्धजलचरपक्षिविशेषाः, दीर्घिकापद्मिनीनां सरोवरस्थकमलिनीनां, पत्रच्छायासु पत्राच्छन्नानातपप्रदेशेषु, मुकुलितनयनाः मुद्रितनेत्राः सन्तः, तिष्ठन्तीति शेषः, तीक्ष्णसूर्यातप सोढुमसमर्थतयेति भावः, सौधानि राजसदनानि, "सौधोऽस्त्री राजसदनम्" इत्यमरः; अत्यर्थतापात्

विन्दूत्क्षेपात् पिपासुः परिसरति शिखी भ्रान्तिमद्वारियन्त्रं
सर्वैरुस्रैः समग्रस्त्वमिव नृप! गुणैर्दीप्यते सप्तसप्तिः ॥ १२ ॥

विदू। अविहा अविहा, अम्हाणं भोअणवेला। अत्तभवदो उइदवेलादिक्कमेण चिकित्सआ दोसं उदाहरंति। हरदत्त! किं भणासि? * (प)

* अपिहा अपिहा, अस्माकं भोजनवेला। अत्रभवत उचितवेलातिक्रमेण चिकित्सका दोषमुदाहरन्ति। हरदत्त! किं भणसि? इति सं०।

---

अतीवौष्ण्यात्, तीव्रसूर्य्यकिरणैः अतीव सन्तप्तत्वाद्धेतोरित्यर्थः, वलभिः चन्द्रशाला, पारावतादिनिवासार्थं सौधोपरिस्थचतुरस्रगृहविशेष इत्यर्थः, "शुद्धान्ते वलभी चन्द्रशाले सौधोर्द्ध्ववेश्मनि" इति रभसः, तस्याः परिचये अनुशीलने, तत्र वासादिविषये इत्यर्थः, द्वेषिणः विद्वेषयुक्ताः, स्पृहाशून्या इति यावत्, पारावताः कपोताः यत्र तादृशानि, जातानीति शेषः, तीव्रसूर्य्यकिरणैर्नितरां सन्तप्तेषु सौधोपरिस्थेषु स्वेषामावासेषु नेवेदानीमुपविशन्तीति निष्कर्षः, शिखी मयूरः, पिपासुः पुनः पुनः जलपानेच्छुः सन्, विन्दूत्क्षेपात् जलकणानामूर्द्ध्वोत्पतनात्, जलकणाः ऊर्द्ध्वमुत्पत्य समन्ततो विन्दु-विन्दुरूपेण पतन्ति इति दृष्ट्वा इत्यर्थः, भ्रान्तिमत् घूर्णमानं, वारियन्त्रं "फोयारा" इति प्रसिद्धं जलयन्त्रं, परिसरति अभिगच्छति, अत एव नृप! हे राजन्! सप्तसप्तिः सप्त सप्तसङ्ख्यकाः, सप्तय. अश्वाः यस्य तादृशः सप्ताश्वः, सूर्य्य इत्यर्थः, "सूरसूर्य्यार्य्यमादित्यद्वादशात्मदिवाकराः। भास्करविवस्वत्-सप्ताश्व—" इत्यमरः; सर्वैः निखिलैः, गुणैः शौर्य्यादिभिः, समग्रः परिपूर्णः, सर्वगुणान्वित इत्यर्थः, त्वमिव उस्रैः किरणैः, सहस्रसङ्ख्यकैरिति भावः, "किरणोस्रमयूखांशुगभस्तिघृणिधृष्णयः" इत्यमरः; समग्रः परिपूर्णः सन्, दीप्यते विभाति। श्लोकेऽस्मिन् प्रथमपादत्रये तिरश्चां चेष्टावर्णनात् स्वभावोक्तिरलङ्कारः, चतुर्थपादे तु प्रसिद्धस्योपमानस्य सूर्य्यस्य उपमेयत्वप्रकल्पनात् प्रतीपालङ्कारः, तथा च दर्पणकारः,—"प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्। निष्फल-

हर। अस्ति चान्यस्य वचनावकाशोऽत्र ? (त)

राजा। [ हरदत्तमवलोक्य ]। तेन हि त्वदीयमुपदेशं श्वो द्रक्ष्यामः। विश्रम्यतां भवान्। (थ)

---

त्वाभिधानं वा प्रतीपमिति कथ्यते॥" इति। अनयोः परस्परनिरपेक्षत्वात् संसृष्टिः। स्रग्धरा वृत्तम्॥ १२॥

( ण ) अपिहा अपिहा इति सम्भ्रमार्थकमव्ययम् ( "ओः हो" इति वङ्गीयानां भाषा )। कश्चित् "अबिहा अबिहा" इत्यस्य "अविधा अविधा" इति संस्कृतं पठति। अत्रभवतः माननीयस्य राज्ञः, उचिता अभ्यस्ता, प्रतिदिवसीया इति यावत्, या वेला भोजनकालः, यद्वा—उचिता योग्या, शास्त्रकृद्भिर्नियमिता इत्यर्थः, या वेला समयः, "याममध्ये न भोक्तव्यं यामयुग्मं न लङ्घयेत्" इत्येवं-निर्दिष्टा यामयुग्मालङ्घनरूपा इत्यर्थः, तस्याः अतिक्रमेण उल्लङ्घनेन, निर्दिष्टसमयमतीत्य भोजनेन इत्यर्थः, दोषं दूषणं, स्वास्थ्यहानिरूपमिति यावत्, उदाहरन्ति कथयन्ति। किं भणसि ? किं कथयसि ? अत्र विषये तव किं मतम् ? इत्यर्थः, इदानीं भोजनार्थं गमनमेवोचितमिति भावः। "अम्हाणं" इत्यारभ्य "चिकित्सआ" इत्यन्तपाठस्थले—"अरुहाणं उदा भोअणवेला उवट्ठिदा। उदवेलादिक्कमे चिइच्छआ" इति पाठान्तरम्।" "हरदत्त! किं भणासि?" इत्यत्र [ "हरदत्तं विलोक्य ]। किं दाणिं भणासि ?" इति पाठान्तरम्।

( त ) अत्र अस्मिन् विषये, भवत्कथितविषये इत्यर्थः, अन्यस्य अपरस्य, ममेत्यर्थः, वचनावकाशः किमपि वक्तुमवसरः, अस्ति ? इति काका विषयेऽस्मिन् किमपि वक्तव्यमेव नास्तीति व्यज्यते, इदानीं सर्वैरेव गन्तव्यं, मम अभिप्रायजिज्ञासया अलमिति तात्पर्य्यम्। "अस्ति चान्यस्य वचनावकाशः" इत्यत्र "नास्ति ( अस्ति ) वचनस्यान्यस्यावकाशः" इति पाठान्तरम्।

( थ ) उपदेशं शिक्षाम्। श्वः परदिने, "श्वः परश्वः परेऽहनि" इत्यमरः। "विश्रम्यताम्" इत्यत्र "विश्राम्यतु" इति पाठान्तरम्। "श्वो द्रक्ष्यामः" इत्यत्र "श्वो वयं द्रक्ष्यामः" इत्यधिकः पाठः क्वचित्।

परि। यदाज्ञापयति देवः। [इति निष्क्रान्त]।

देवी। णिव्वत्तेदु अज्जउत्तो मज्झण्णविहिं। * (द)

विदू। भोदी विसेसेण पाणभोअणं तुवरावेदु। † (ध)

परि। [उत्थाय]। स्वस्ति भवते। [इति देव्या सह निष्क्रान्ता]। (न)

विदू। भो! ण केवलं रूवे, सिप्पे वि अदुदीआ मालविआ। ‡ (प)

---

* निर्वर्त्तयत्वार्य्यपुत्रो मध्याह्नविधिम् इति स०।

† भवती विशेषेण पानभोजनं त्वरयतु इति स०।

‡ भोः! न केवलं रूपे, शिल्पेऽप्यद्वितीया मालविका इति स०।

---

(द) निर्वर्त्तयतु सम्पादयतु। मध्याह्नविधिं मध्याह्नकालिकस्नान-भोजनादिविधानम्। "णिव्वट्टेदु अज्जउत्तो मज्जणविहिं" इति पाठान्तरे—निर्वर्त्तयतु आर्य्यपुत्रो मज्जनविधिम्" इति स०।

(ध) विशेषेण विशेषरूपेण, प्रकृष्टरूपेण इत्यर्थः, पानभोजनं, कर्त्तुमिति शेषः, त्वरयतु त्वरान्विता भवतु, सुखपालिता भवती इतःपूर्वं कदाचिदपि एतावतीं वेलामुपोषिता नासीत्, कार्य्यवशादद्य भोजनवेला अतीतप्राया, तेन च ते सुमहान् क्लेशो भवतीति मन्ये, अत एव सत्वरं गत्वा भोजनं सम्पादयतु इति निष्कर्षः। यद्वा—पानभोजनं, व्यवस्थापयितुमिति शेषः, राज्ञः पानभोजनादेः व्यवस्थां कर्त्तुमित्यर्थः। एतेन देवीं प्रस्थाप्य मालविकायाः पुनर्दर्शनविषयकः निभृतालापः करणीयः इति व्यज्यते। "भोदी" इत्यत्र "भोदि!" "तुवरावेदु" इत्यत्र "तुवरावेहि" इति पाठान्तरद्वये—भवति!, तथा त्वरय इति स०। भवति! इत्यस्य मान्ये! इत्यर्थः।

(न) भवते राज्ञे, स्वस्ति क्षेमं भवतु, शुभं भवतु इत्यर्थः; "स्वस्त्याशीः-क्षेमपुण्यादौ" इत्यमरः। "नमःस्वस्ति—" इत्यादिना राज्ञे इत्यत्र चतुर्थी। "देव्या" इत्यत्र "सपरिजनया देव्या" इति क्वचिदधिकः पाठः।

(प) शिल्पे कलाविद्यायां, सा च विद्या नृत्यगीतादिरूपा चतुः-

राजा। वयस्य !—

अव्याजसुन्दरीं तां विज्ञानेन ललितेन योजयता।

उपकल्पितो विधात्रा बाणः कामस्य विषदिग्धः॥ १२॥

किं बहुना, चिन्तयितव्योऽस्मि ते। (फ)

---

शिल्पभेदभिन्ना इत्यमरटीकायां दीक्षितः, "शिल्पं कर्म कलादिकम्" इत्यमरः। अद्वितीया द्वितीयरहिता, अतुलनीया इत्यर्थः। "भो !" इत्यत्र "भो वयस्य !" इत्यधिकः पाठः क्वचित्।

मालविकायाः रूप-कलादिकं पुंसां प्राणान्तकरमिति विवृणोति, अव्याजेति।—अव्याजसुन्दरीम् अकपटरूपवतीं, स्वभावत एव अतुलनीयसौन्दर्य्यशालिनीमित्यर्थः, तां मालविकां, ललितेन सुन्दरेण, सुकुमारेणेति यावत्, "ललितं त्रिषु सुन्दरम्" इत्यमरः; विज्ञानेन शिल्पविषयकज्ञानेन, नृत्य-गीतादिरूपकलाविद्यया इति यावत्, "विज्ञानं शिल्पशास्त्रयोः" इत्यमरः; योजयता सङ्गमयता, विधात्रा स्रष्ट्रा ब्रह्मणा, विषदिग्धः विषलिप्तः, कामस्य अनङ्गस्य, बाणः शरः इव, उपकल्पितः विरचितः, नो चेत् तत्सम्पर्कात् ममेदृशी पीड़ा कथं भवेदिति भावः। "उपकल्पितः" इत्यत्र "परिकल्पितः" इति पाठान्तरम्। अत्र इव-शब्दाप्रयोगात् प्रतीयमाना उत्प्रेक्षाऽलङ्कारः, तदुक्तं विश्वनाथेन—"वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः" इति। किञ्च, स्वभावमनोहरायाः ललितविज्ञानशालिन्याः अत एव आनन्ददायिन्या मालविकायाः कामुकानां क्लेशहेतुत्वात् विरूपसङ्घटनरूपः विषमालङ्कारश्च, तथा च दर्पणः,—"विरूपयोः सङ्घटना या च तत् विषमं मतम्" इति, अनयोरङ्गाङ्गिभावेनावस्थानात् सङ्करः। आर्य्या जातिः॥ १२॥

(फ) चिन्तयितव्यः स्मर्त्तव्यः, यथा अहं मालविकया सङ्गन्तुं शक्नोमि, तद्विषयकः उपायः त्वया शीघ्रं करणीयः, अन्यथा नाहं जीवेयमिति भावः।

विदू। भवदावि अहं। दिढ़ विपणिकंदू विअ मे हिअअ-ब्भंतरं दज्झदि। * (व)

राजा। एवमेव। भवानस्मदर्थे त्वरताम्। (भ)

विदू। गिहीददक्खिणोम्हि। किं तु मेहावलोरुद्धजोण्हा विअ पराहीणदंसणा तत्तभोदी मालविआ। भवंपि खुणापरि-

---

* भवताऽप्यहम्। दृढ विपणिकन्दुरिव मे हृदयाभ्यन्तरं दह्यते इति स०।

† गृहीतदक्षिणोऽस्मि। किं तु मेघावलोरुद्धज्योत्स्नेव पराधीनदर्शना

---

(व) भवताऽपि अहं, चिन्तयितव्य इति शेषः, मया यथा त्वं चिन्तयितव्यः, तथा अहमपि त्वया इत्यर्थः। कथं चिन्तयितव्य? इत्याह, दृढ़मिति।—विपणिकन्दुः विपणिः आपणस्य, "दोकान" इति प्रसिद्धायाः पण्यशालाया इत्यर्थः, "विपणिः पण्यवीथ्याञ्च भवेदापणपण्ययो" इति मेदिनी; य. कन्दुः स्वेदनी, "ताओया" "चाटु" "खोला" इत्यादि नाम्ना प्रसिद्धः भर्जनपात्रविशेष. इत्यर्थः, "ना कन्दुर्वा स्वेदनी स्त्रियाम्" इत्यमरः; स इव, हृदयाभ्यन्तरं हृदयमध्यं, "हिअअ-ब्भंतरं दज्झदि" इत्यत्र "उअरब्भंतर दज्झइ" इति पाठान्तरे—"उदराभ्यन्तरं दह्यते" इति स०। अयमेव पाठ साधुः। दृढ़म् अत्यर्थं, दह्यति दग्धं भवति, क्षुधा मामतीव पीड़यति इत्यर्थः।

(भ) एवमेव इति अङ्गीकारार्थे प्रयोग., यथा ते क्षुधानिवृत्ति-र्भवेत् तथा करिष्यामीति भाव, "एवं प्रकारोपमयोरङ्गीकारेऽवधारणे" इति विश्व। अस्मदर्थे मम प्रयोजनसाधनाय इत्यर्थः। "एवमेव भवान्" इति अविच्छेदपाठे—भवान् यथा क्षुन्निवृत्त्यर्थं त्वरते तथा इत्यर्थः। "अस्मदर्थे" इत्यत्र "सुहृदर्थेऽपि" इति पाठान्तरम्।

(म) गृहीतदक्षिण. गृहीता "एवमेव" इति भोजनदानार्थमङ्गीकारसूचकवाक्येनैव प्राप्ता, दक्षिणा यज्ञादिसमाप्तौ देयधनादिविशेषः, अत्र तु तव कार्य्यसम्पादनार्थं पुरस्कारविशेष इत्यर्थ. येन तथाभूतः। "गिहीददक्खिणोम्हि" इत्यत्र. "गहीदो क्खणो" इति पाठान्तरे—

चरो विअ गिद्धो आमिसलोलुवो भीरुओ अ, अच्चंतादुरो विअ कज्जसिद्धिं पत्थंतो मे रोअसि । † (म)

---

तत्रभवती मालविका । भवानपि सूनापरिचर इव गृध्र आमिषलोलुपो भीरुकश्च, अत्यन्तातुर इव कार्य्यसिद्धिं प्रार्थयमानो मे रोचसे इति सं० ।

---

गृहीतः चण. इति स० । मेघावलीति ।—मेघावल्या जलदपटलेन, रुद्धा आवृता, ज्योत्स्ना कौमुदी,"मेहावलीरुद्धजोण्हा"इत्यत्र "मेहावलीपिहिदा जोण्हा" इति पाठान्तरम् । पराधीनदर्शना पराधीनं देव्या अधीनं, दर्शनं साक्षाल्लाभो यस्याः सा तादृशी, देव्या अभिप्रायेण तस्याः गमनागमननियन्त्रणादिति भावः, मेघापसरणमन्तरेण यथा तदावृत-ज्योत्स्नाया दर्शनं न सम्भवति, तथा प्रतिबन्धकीभूताया देव्या अनुग्रह-मन्तरेण मालविकादर्शनं नैव सम्भवतीति निष्कर्षः । सूनापरिचरः सूनायां वधस्थाने, श्मशाने इत्यर्थः, "सूना पुत्रयां वधस्थान-गलशुण्डिकयोः स्त्रियाम्"इति मेदिनी ; परिचरति भ्रमतीति तादृशः,"सूणापरिसरचरो" इति पाठे—"सूनापरिसरचरः" इति स० । सूनायाः परिसरे प्रान्तभूमौ, समीपदेशे इत्यर्थः, चरतीति तादृशः इति तस्यार्थः, गृध्रः "शकुन" इति प्रसिद्धः श्मशानचरः पक्षिविशेषः, "गिद्धो" इत्यत्र "विहंगो" इति पाठे—विहङ्गः इति स० ; आमिषलोलुपः आमिषं मांसं भोग्यवस्तु च, सम्भोग इति च वा, गृध्रपक्षे—मांसं, राजपक्षे—मालविकारूप भोग्य-वस्तु, मालविकायाः सम्भोग इति वा, "आमिषं पुंनपुंसकम् । भोग्य-वस्तुनि सम्भोगेऽप्युत्कोचे पलकेऽपि च" इति मेदिनी ; तत्र लोलुपः लुब्धः, अथ च भीरुकः भयशीलः, गृध्रो यथा मांसलोभात् श्मशाने परिभ्रमति, अथ च दाधप्राप्त्याशङ्कया भीत इव वर्त्तते, तथा भवानपि मालविकालोभात् तस्याः सामीप्यं कामयसे, किन्तु देवीतो बिभेतीति भावः । अत्यन्तातुर इव नितरां पीड़ित इव, आतुर्य्यतया नितान्त-मसहाय इवेत्यर्थः, कार्य्यसिद्धिं मालविकायाः पुनः साक्षात्काररूप-कार्य्यसाधनमित्यर्थः, प्रार्थयमानः याचमानः, मे मह्यं, रोचसे मम प्रीतिप्रदो भवसीत्यर्थः, प्रभुरपि त्वं नितान्तमार्त्त इव दीनं तवाश्रितं

राजा। कथमनातुरो भविष्यामि ? (य)यदा—

सर्वान्तःपुरवनिताव्यापारं प्रति निवृत्तहृदयस्य।
सा वामलोचना मे स्नेहस्यैकायनीभूता ॥ १४ ॥

[ इति निष्क्रान्ताः सर्वे ]।

इति द्वितीयोऽङ्कः ॥ २ ॥

---

आश्चर्यं मा यत् कार्य्यसिद्ध्यर्थं याचसे, तत् मयि ते स्नेहाधिक्यादिति सम्भावयामि, एवञ्च तवाय व्यवहारो माम् अतीवानन्दयतीति निष्कर्षः। "अव्वंतातुरो विअ" इत्यत्र "ता अणादुरो भविअ" इति पाठे—तत् अनातुरो भूत्वा इति, "पत्थंतो" इत्यत्र च "पत्थेंतो" इति पाठे—प्रार्थ्यमानः इति च स०।

(य) अनातुरः अपीड़ितः, स्वस्थः इत्यर्थः, कामेनाविरतं पीड्यमानत्वादिति भावः।

आतुरत्वे कारणं प्रकाशयति, सर्वेति।—सा मच्चित्तहारिणी, वामलोचना सुन्दरनेत्रा, मृगाक्षीति यावत्, मालविकेति शेषः, सर्वासाम् अन्तःपुरवनितानाम् अवरोधस्थकामिनीनाम्, अन्यासां राज्ञीनामित्यर्थः, व्यापारं सानुरागहास्यकौतुकादिचेष्टाविशेषमित्यर्थः, सर्वासु अन्तःपुरवनितासु व्यापारमिति वा, प्रति निवृत्तं पराङ्मुखं, हृदयं चेतो यस्य तादृशस्य, राजपुरवधूनां चेष्टितं प्रति विरक्तस्येत्यर्थः, "सर्वान्तःपुरवनिताव्यापारप्रतिनिवृत्तहृदयस्य" इति समस्तपाठः क्वचित्; मे मम, स्नेहस्य प्रणयस्य, एकायनीभूता एकमात्राश्रयस्वरूपिणी, जातेति शेषः, केवलं मालविकायामेव मे हृदयमिदानीमेकान्तासक्तम्, अत एव तामप्राप्य कथमनातुरो भविष्यामीति निष्कर्षः। अत्र सर्वान्तःपुरवनिताभ्यः मालविका स्नेहस्य एकायनीभूता इव जाता इति प्रतीयमानत्वात् प्रतीयमानोत्प्रेक्षाऽलङ्कारः। आर्य्या जातिः ॥ १४ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचितायां
मालविकाग्निमित्रटीकायां छात्रबोधिन्यां
द्वितीयाङ्कव्याख्या समाप्ता।

—०*०—

## तृतीयोऽङ्कः ।

[ ततः प्रविशति परिव्राजिकायाः परिचारिका समाहितिका ]।

समा। आणत्तम्हि भअवदीए, "समाहिदिए ! देवस्स उववणत्थं बीजपूरअं गेण्हिअ आअच्छ" त्ति । ता दाव पमदवणपालिअं महुअरिअं अण्णेसामि । [ परिक्रम्यावलोक्य च ]। एसा तवणीआसोअं आलोअंती महुअरिआ चिट्ठदि, जाव णं संभावेमि । * (क)

[ ततः प्रविशत्युद्यानपालिका ]।

समा। [ उपसृत्य ]। आलि । सुहो दे उज्जाणवणवावारो ? † (ख)

---

* आज्ञप्ताऽस्मि भगवत्या—"समाहितिके ! देवस्योपवनस्य बीजपूरकं गृहीत्वा आगच्छ" इति । तत्तावत् प्रमदवनपालिकां मधुकरिकामन्विष्यामि । एषा तपनीयाशोकमालोकयन्ती मधुकरिका तिष्ठति, यावदेनां सम्भावयामि इति सं० ।

† आलि ! सुखस्ते उद्यानवनव्यापारः ? इति सं० ।

---

(क) देवस्य राज्ञः अग्निमित्रस्य । "देवस्स उववणत्थ"इत्यत्र"देवीए उवाअणत्थं" इति पाठे—देव्या उपायनार्थम् इति सं० । बीजपूरकं मातुलुङ्ग, "टावा लिबु वा छोलङ्ग लेबु" इति प्रसिद्धं निम्बूकविशेषमित्यर्थः, "फलपूरो बीजपूरो रुचको मातुलुङ्गके" इत्यमरः । प्रमदवनपालिकां प्रमदवनम् अन्तःपुरोचितम् उद्यानम्, अन्तःपुरिकाभिः सह विहरणार्थं राज्ञामन्तःपुरसंलग्नमुद्यानमित्यर्थः, "पुमानाक्रीड़ उद्यानं राज्ञः साधारणं वनम् । स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ॥" इत्यमरः । तपनीयाशोकं तपनीय स्वर्ण, स्वर्णवर्णपुष्पविशिष्टमित्यर्थः, अशोकं तदाख्यवृक्षविशेषं, "स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् । तपनीयं शातकुम्भम्—" इत्यमरः । एनां मधुकरिकाम् । सम्भावयामि सम्भाषयामीत्यर्थः । "संभावेमि" इत्यत्र"उवसप्पामि" इति पाठे—उपसर्पामि इति सं० ।

मधु। अम्मो! समाहिदिआ!! सहि! साअदं दे? *

समा। हला! भअवदी आणवेदि—"अरित्तपाणिणा अम्हारिसजणेण अत्तभवं देक्खिदव्वो, ता बीजपूरएण पेक्खदुं इच्छामि"त्ति। † (ग)

---

* अहो! समाहितिका!!। सखि! स्वागतं ते? इति स०।

† हला! भगवत्याज्ञापयति, "अरिक्तपाणिना अस्मादृशजनेन अत्रभवान् द्रष्टव्यः, तत् बीजपूरकेण प्रेक्षितुम् इच्छामि" इति इति स०।

---

(ख) उपसृत्य समीपं गत्वा। आलि! सखि! "आलिः सखी वयस्या च" इत्यमरः। "आलि!" इत्यत्र "महुअरिए" इति पाठे—मधुकरिके! इति स०। क्वचित् "आलि!" इत्यनन्तरम् "अवि" (अपि इति स०) इत्यधिकः पाठः। सुखः सुखयतीति सुखः सुखकर इत्यर्थः। उद्यानम् उपवनमेव, वनम् अरण्यम्, अरण्यसदृशमित्यर्थः, एकाकिनी निःसङ्गत्वेनावस्थानादिति भावः, यद्वा—उद्याने वनस्य निवासस्य, अवस्थानस्येत्यर्थः; यद्वा—उद्यानमेव वनम् आलयः, गृहमित्यर्थः, "वनं नपुंसकं नीरे निवासालयकानने" इति मेदिनी; तस्य व्यापारः रक्षणादि कार्य्यम्, उद्यानस्य रक्षणवर्द्धनादि कार्य्यं ते सुखकरं किम्? इत्यर्थः। "उज्जाणवणवावारो" इत्यत्र "उज्जाणवावारो" इति पाठे—उद्यानव्यापार इति स०।

(ग) हलेति सख्याः सम्बोधनं, "हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति" इत्यमरः। अरिक्तपाणिना अशून्यहस्तेन, किमपि फलमादाय इत्यर्थः, "रिक्तपाणिर्न पश्येत्तु राजानं देवतां गुरुम्। नैमित्तिकञ्च वैद्यञ्च फलेन फलमादिशेत्॥" इति स्मरणादिति भावः। अत्रभवान् माननीयो देवः। "अत्तभवं देक्खिदव्वो" इत्यत्र "तत्तहोदी देवी देक्खिदव्वा" इति पाठे—तत्रभवती देवी द्रष्टव्या इति स०। बीजपूरकेण मातुलुङ्गोपहारदानेन इत्यर्थः। "पेक्खिदुं" इत्यत्र "सुस्सुसिदुं" इति पाठे—शुश्रूषितुम् इति स०।

मधु। यं सण्णिहिद ज्जेव्व बीजपूरअं। कहेहि, अस्सोस्स-संघस्सिदाणं णट्टाआरिआणम् उवदेसं देक्खिअ कदरो भअवदीए पसंसिदो ? * (घ)

बका। दुवे वि किल आगमिणो पओअणिउणा अ ; किं दु सिस्सागुणविसेसेण उण्णमिदो गणदासो। † (ङ)

मधु। अह मालविआगअं कोलीणं किं सुणीअदि ?‡ (च)

* ननु सन्निहितमेव वीजपूरकम्। कथय, अन्योऽन्यं सङ्घर्षितयोः नाट्याचार्य्ययोरुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसितः ? इति स०।

† द्वावपि किल आगमिनौ प्रयोगनिपुणौ च ; किन्तु शिष्यागुण-विशेषेण उन्नमितो गणदासः इति स०।

‡ अथ मालविकागतं कौलीनं किं श्रूयते ? इति स०।

(घ) अन्योऽन्यसङ्घर्षितयोः परस्परं सञ्जातसङ्घर्षयोः, आत्मनः श्रेष्ठत्वप्रतिपादनार्थं परस्परं जातस्पर्द्धयोरित्यर्थः। कतरः उभयोर्मध्ये कः। भगवत्या कौशिक्या।

(ङ) "किल" इत्यत्र "क्खु" ( खलु इति स० ) इति पाठान्तरम्। आगमिनौ शास्त्रज्ञौ, सङ्गीतशास्त्रनिपुणौ इत्यर्थः, प्रयोगनिपुणौ अभिनयपटू, द्वावेव तुल्यज्ञानौ इत्यर्थः। शिष्येति।—शिष्यायाः मालविकायाः, गुणविशेषेण सौन्दर्य्यसङ्गीतनृत्यादिषु नैपुण्याधिक्येन, उन्नमितः उत्कर्षं नीतः, हरदत्तात् श्रेष्ठत्वेन स्वीकृत इत्यर्थः। "सिस्सागुणविसेसेण उण्णमिदो गणदासो" इत्यत्र "दिस्साए विसेसेण मालविआए उण्णमिदो उवदेसो गणदासस्स" इति पाठे—दृश्यायाः विशेषेण मालविकाया उन्नमितः उपदेशो गणदासस्य इति स०।

(च) अथ प्रश्नार्थकमव्ययम्। मालविकागतं मालविकासङ्क्रान्तं, कौलीनं लोकवादः, अन्तःपुरिकासु मालविकाविषयिणी आलोचना इत्यर्थः, "स्यात् कौलीन लोकवादे युद्धे पश्वहिपक्षिणाम्" इत्यमरः ; यद्वा—कौलीनं गुह्यव्यापारः, तथा जन्मविषयिणी देवस्य तस्यामनुरागविषयिणी

समा। वाढं किल तस्सिं साहिलासो भट्टा ; केवलं देवीए धारिणीए चित्तं रक्खंतो अत्तणो पहुत्तणं ण दंसेदि। मालविआवि इमेसु दिअसेसु अणुहूदमूच्छा विअ मालदीमाला मिलाअमाणा लक्खीअदि, अदो अवरं ण जाणे। विसज्जेहि मं। (छ)

वाढं किल तस्यां साभिलाषो भर्त्ता ; केवलं देव्या धारिण्याश्चित्तं रक्षन् आत्मनः प्रभुत्वं न दर्शयति। मालविकाऽप्येषु दिवसेषु अनुभूतमूर्च्छेव मालतीमाला म्लायमाना लक्ष्यते, अतोऽपरं न जाने। विसृज माम् इति स०।

---

वा निगूढ़जल्पना इत्यर्थः, "कौलीनं गुह्यजन्ययोः" इति मेदिनी। "किं" इत्यत्र "किरिसं" (कीदृशम्? इति स०) इति पाठान्तरम्।

(छ) वाढ़ भृशम्, अत्यर्थमित्यर्थः, "वाढ भृश-प्रतिज्ञयोः" इत्यमरः ; "वाढ़" इत्यत्र "वलीयं" "दिढ़" इति च पाठान्तरद्वयम् ; तत्र "वलीयः" "दृढ़म्" इति च स०। साभिलाषः सकाम, अनुरक्त इत्यर्थः। चित्तं मनः, रक्षन् अनुपालयन्, अनुरञ्जयन् इत्यर्थः, देव्याः मन पीड़ां परिहर्त्तुमिच्छन् इति भावः, आत्मनः प्रभुत्वं प्रभावं, प्रकाशमेव मालविकाग्रहणे निरङ्कुशसामर्थ्यमित्यर्थः, नो चेत् कथ राजा मालविकाया दर्शनलाभार्थं विविधकौशलमुद्भावयति? तदर्थं सीदति च? इति भावः। "केवलं" इत्यारभ्य "दंसेदि" इत्यन्तस्थले" किं तु केवलं धारिणीए चित्त रक्खंती पहुत्तणा दंसेदि" इति पाठे—किन्तु केवलं धारिण्याश्चित्तं रचन् प्रभुत्वं दर्शयति इति स०। एषु दिवसेषु अभिनयकरणदिनमारभ्य अद्यपर्य्यन्तदिनेषु, अनुभूतमूर्च्छा प्राप्तमोहा, मोहग्रस्तेव शून्यमनस्का इति यावत्, सूर्य्यसन्तापेन शुष्कत्वात् अत्यर्थं विवर्णा च, "अणुहूदमूच्छा" इत्यत्र "अणुहूदमुत्ता" इति पाठे—अनुभूतमुक्ता इति स०। म्लायन्ती मलिना, विवर्णा, क्षीणाङ्गी वा इत्यर्थः, "मिलाअमाणा" इत्यत्र "मिलाणा" इति पाठे—म्लाना इति स०। एतेन मालविकाऽपि राजनि एकान्तमनुरक्ता कामवाणपीड़िता च इति

मधु। एदं साहावलंबि बीजपूरअं गेण्ह। * (ज)

समा। [नाट्येन गृहीत्वा]। हला! तुमं वि इदो पेसलतरं साहुजणसुस्सूसाए फलं पावेहि। † [इति प्रस्थिता]। (झ)

मधु। सहि! सम ज्जेव्व गच्छम्ह। अहं वि इमस्स चिराअ-माणकुसुमोग्गमस्स तवणोआसोअस्स दोहलणिमित्तं देवीए णिवेदेमि। ‡ (ञ)

---

* एतत् शाखावलम्बि वीजपूरकं गृहाण इति सं०।

† हला! त्वमपीतः पेशलतरं साधुजनशुश्रूषया फलं प्राप्नुहि इति सं०।

‡ सखि! सममेव गच्छावः। अहमप्यस्य चिरायमाणकुसुमो-द्गमस्य तपनीयाशोकस्य दोहदनिमित्तं देव्यै निवेदयामि इति सं०।

---

प्रतीयते इति भावः। "अदो अवरं" इत्यत्र "अदो वर" इति पाठे—', अत परम् इति सं०। विसर्जय परित्यज, वीजपूरं दत्त्वा गमनाय अनुमन्यस्व इति यावत्।

(ज) शाखावलम्बि शाखाविलग्नम्। "साहावलंबि" इत्यत्र "साहावलंबिदं" (शाखावलम्बितम् इति सं०) इति पाठान्तरम्।

(झ) "तहा [इति नाट्येन वीजपूरं गृहीत्वा]" इत्यधिकः पाठः क्वचित्। इतः अस्मात्, मया यादृशं फलं प्राप्तं, तस्मादपि इत्यर्थः, यद्वा—इतः अस्मात् वीजपूरकवचादित्यर्थः, पेशलतरम् अतिशयेन रुचिरम्, अत्युत्कृष्टमित्यर्थः, "पेशलो रुचिरे दक्षे" इति मेदिनी। साधुजनशुश्रूषया साधुजनानां सज्जनानां, शुश्रूषया परिचर्य्यया, भगवत्याः कौशिक्याः सन्तोषविधानाद्धेतोरित्यर्थः। प्रार्थनापूर्त्तिजनित-चित्तप्रसादादिदमाशीर्वचनमिति बोद्धव्यम्। प्रस्थिता प्रस्थातुमारब्धा इत्यर्थः।

(ञ) सममेव सहैव, त्वया सह मिलित्वैवेत्यर्थः, "साकं सार्द्धं समं सह" इत्यमरः। चिरायमाणकुसुमोद्गमस्य चिरायमाणः विलम्ब-मानः, कुसुमोद्गमः पुष्पप्रकाशो यस्य तथाभूतस्य, तपनीयाशोकस्य

यथा। जुज्जदि, अहिआरो क्खु तुह। * (ट)

[ इति निष्क्रान्ते ]।

[ प्रवेशकः ]। (ठ)

[ ततः प्रविशति कामयमानावस्थो राजा विदूषकश्च ]। (ड)

---

* युज्यते, अधिकारः खलु ते इति सं०।

---

स्वर्णवर्णपुष्पाशोकवृक्षस्येत्यर्थः। दोहदनिमित्तं दोहदः गर्भलक्षणं, तन्निमित्त तदर्थं, पुष्पप्रसवाय गर्भलक्षणप्रकाशार्थमित्यर्थः, पुष्पोत्पत्तिहेतुभूत-योषित्पादाघातार्थमिति यावत्, "पादाघातादशोकं विकसति बकुलं योषितामास्यमद्यै." इति कविसमयसिद्धेरिति भाव., देवी स्वयमागत्य काञ्चिदन्तःपुरिकां प्रेरयित्वा वा अशोकवृक्षे पादाघातं करोतु कारयतु वा, अन्यथा कुसुमोद्गमे विलम्बो भविष्यतीति विज्ञापनार्थमिति निष्कर्षः। "दोहदो गर्भलक्षणे। अभिलाषे तथा गर्भे" इति हैमः।

(ट) युज्यते युक्तं भवति, देव्यै एतन्निवेदनमिति शेषः। अधिकारः नियोग., कर्त्तव्यमित्यर्थः, उद्यानस्य उत्कर्षसम्पादनार्थमेव तव नियोगादिति भाव.।

(ठ) प्रवेशकः प्रवेशयति रङ्गभूमौ नीचपात्राभ्यां कथाप्रसङ्गेन नायक-नायिकादिरूपं प्रधानपात्रमवतारयति य. प्रबन्धः स प्रवेशकः "प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥" इति दर्पणोक्तलक्षणकः अर्थोपक्षेपकविशेषः। तथा चात्र नीचपात्राभ्यां चेटीभ्यां प्राकृतभाषया द्वितीय-तृतीयाङ्कयोर्मध्ये प्रयोज्यमानत्वात्, विष्कम्भकलक्षणोक्तानां "असोअसंवट्टिअदोहलं चट्टा-आरिआए उवदेस—" "वाहं किल तस्सिं साहिलासो भट्टा" इत्यादिरूपवृत्ताना, तथा "चिराअमाणकुसुमोग्गमस्स—"इत्यादिरूपवर्त्तिष्यमाणानाञ्च कथांशानां निदर्शकत्वात् अस्य प्रवेशकत्वमवगन्तव्यम्।

(ड) कामयमानानां नारीसङ्गमभिलषतां कामिनाम्, अवस्थेव अवस्था दशा, कार्श्य-पाण्डुत्वादिकमित्यर्थः यस्य तादृ.।

राजा। [ आत्मानं (ढ) विलोक्य ]।—

शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे
भवेत् सास्रं चक्षुः क्षणमपि न सा दृश्यत इति।
तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं
प्रसक्ते निर्वाणे हृदय! परितापं व्रजसि किम्? ॥ १ ॥

---

(ढ) आत्मानं शरीरं, निजदेहमित्यर्थः, "आत्मा पुंसि स्वभावे च · शरीरमनसोरपि" इति मेदिनी।

राजा आत्मानं विलोक्य निजामवस्थां वर्णयति, शरीरमिति।— दयितायाः प्रियायाः मालविकायाः, आलिङ्गनसुखे आश्लेषजनिते आनन्दे, असति अविद्यमाने सति, अप्राप्नुवति सतीत्यर्थः, शरीरं देहः, क्षामं कृशं, स्यात् भवेत्, भवितुमर्हेदित्यर्थः, (सम्भावनायां लिङ्) प्रियाविच्छेदे सर्वेषामेव कामिनामेवमेव भवति, अत एव ममापि भवतु, तत्र न किमपि वक्तव्यमस्ति, यतः सः कामिसाधारण एव स्वभाव इति भावः, अनेन स्मरजा कृशतावस्था सूचिता इति मन्तव्यं, तथा सा प्रिया, क्षणमपि अत्यल्पकालमपि, न दृश्यते न अवलोक्यते, इति अस्मात् हेतोः, चक्षुः नयनं, सास्रम् अश्रुपूर्णं, भवेत् भवितुमर्हेदित्यर्थः, (अत्रापि पूर्ववत् लिङ्) प्रणयिन्या अदर्शने सर्वेषामेव कामिनां नेत्रं सजलं भवति, अत एव ममापि भवतु, तत्रापि न किमपि वक्तव्यमस्ति, यतः एवमेव प्राणिनां स्वभाव इति भावः, किन्तु हृदय! हे मानस! त्वं सारङ्गाक्ष्या मृगलोचनया, तया मालविकया, कदाचिदपि क्षणमात्रमपि, विरहितं वियुक्तं, न असि न भवसि, तदेकायत्तचित्ततया निरन्तरमेव तत्सङ्गसुखमनुभवसीत्यर्थः, सर्वदैव हृदयाभ्यन्तरे विराजमानत्वात् मानसनेत्रेण दृश्यमानत्वाच्चेति भावः, अत एव निर्वाणे निर्वृतौ, सुखे इत्यर्थः, "निर्वाणमस्तं गमने निर्वृतौ गजमज्जने। सङ्गमेऽप्यपवर्गे च" इति विश्वः; प्रसक्ते सम्भाविते, सर्वथैव सुखकारणे विद्यमानेऽपीत्यर्थः, किं कथं, परितापं खेदं, विषादमिति यावत्, व्रजसि? गच्छसि? अनुभवसीत्यर्थः। प्रियाया आलिङ्गनसुखालाभात् शरीरस्य क्षीणता

विदू। अलं भवदा धीरदं उज्झिअ परिदेविदेण। दिट्ठा मए मालविआए पिअसही वउलावलिआ, सुणाविदा अ अत्थो जो भवदा संदिट्ठो। * (ख)

राजा। ततः किमुक्तवती ?

विदू। विण्णवेहि भट्टारअं—"अणुगिहीदह्मि इमिणा णिओएण, किं तु सा तवस्सिणी देवीए अहिअअरं रक्खीअमाणा रक्खिदाणाविअ णिहीणं सुहं समासादइदव्वा ? तहवि जतिस्सं" त्ति। † (ग)

* अलं भवतो धीरतामुज्झित्वा परिदेवितेन। दृष्टा मया मालविकायाः प्रियसखी वकुलावलिका, श्राविता चार्थो यो भवता सन्दिष्टः इति सं०।

† विज्ञापय भट्टारकम्—"अनुगृहीताऽस्मि अनेन नियोगेन, किं तु सा तपस्विनी देव्या अधिकतरं रक्ष्यमाणा रक्षितानामिव निधीनां सुखं समासादयितव्या ? तथाऽपि यतिष्ये इति इति सं०।

सम्भवेत्, तथा दर्शनाप्राप्तेः चक्षुषः सास्त्वमपि सम्भवेत्, किन्तु निरन्तरमनुध्यानवशात् त्वं यस्याः सङ्गसुखमनुभवसि, कदाचिदपि या त्वत्तो न दूरं गच्छति, तदथ कथं सन्तापमनुभवसि ? एतत्तु ते नोचितमिति निष्कर्षः। अत्र विरहरूपपरितापकारणाभावे सत्यपि तदुत्पत्तेः किं विभावना ? उत सर्वदा मनसि विद्यमानत्वात् सुखहेतौ सत्यपि निर्वृतिप्रसक्तिरूपतत्फलाभावात् विशेषोक्तिरिति सन्देहोत्पत्तेः विभावना विशेषोक्त्योः सन्देहसङ्करः, तथा निर्वाणे प्रसक्तेऽपि परिताप इत्यनेन विरोधालङ्कारोऽपि व्यज्यते। अपि च 'कदाचित्' इत्यत्र अपि शब्दस्य अवश्यं वक्तव्यस्य अनभिधानात् वाच्यानभिधानदोषः न्यूनपदतादोषो वा, तथा निर्वाणशब्दस्य मोक्ष-निर्वृतिरूपोभयार्थकत्वेऽपि निर्वृत्यर्थे रूढ्यभावात् मोक्षार्थे एव प्रसिद्धत्वाच्च अत्र निर्वृत्यर्थे प्रयोगात् निहतार्थतादोषः। शिखरिणी वृत्तम् ॥ १ ॥

( ख ) उज्झित्वा विहाय। परिदेवितेन विलापेन, अधीरो भूत्वा

राजा। भगवन्! सङ्कल्पयोने! प्रतिबन्धवत्स्वपि विषयेष्वभिनिवेश्य तथा प्रहरिष्यसि, यथा जनोऽयं न कालान्तरक्षमो भवति। (थ) [सविस्मयम्]।—

---

विलापं मा कुरु इति समुदितार्थः। अर्थः अभिधेयः, वक्तव्यमित्यर्थः, मालविकायै यत् वक्तव्यं श्रावयितुमहमादिष्ट इति समुदितार्थः।

(त) भट्टारक देवं, राजानमित्यर्थः, "राजा भट्टारको देवः" इत्यमरः। क्वचित् "भट्टारअ" इति पद न दृश्यते। नियोगेन नियोगः नियोजनम्, "एवमेवं कुरु" इत्यादेश इत्यर्थः तेन कार्य्यभारप्रदानेनेत्यर्थः। तपस्विनी करुणापात्री, दीना इत्यर्थः, दुर्भागिनीति यावत्, "तपस्वी करुणापात्रम्" इति हलायुधः। अधिकतरं पूर्वापेक्षया अधिकं सावधानमित्यर्थः। रक्षितानां स्थापितानां, भूगर्भादौ प्रोथितानामिति यावत्, निधीनां शेवधीनामिव, दुर्लभरत्नविशेषाणामिवेत्यर्थ, सुखम् अनायासं, किं समासादयितव्या? प्रापयितव्या? नेतव्या किम्? इत्यर्थः, देव्या अधिकतरं रक्ष्यमाणत्वात् नैव प्रापयितव्या इति भावः। तु किन्तु, रक्षिताना निधीनामिव देव्या अधिकतर रक्ष्यमाणा सा तपस्विनी सुखं समासादयितव्या किम्? इत्यन्वयः कार्य्यः। "किन्तु" इति पदं समस्तवाक्य पठितव्यं चेत्, "सुहं" इत्यत्र "ण सुहं" (न सुखम् इति सं०) इति पदम् अवश्यमेव पठनीयम्, अन्यथा अर्थासङ्गतेरिति सुधीभिर्द्रष्टव्यम्। "अहिअअर" इत्यारभ्य "सुहं" इत्यन्तपाठस्थले "अहिअ रक्खन्तीए णाअरक्खिदो विअ णिही ण सुहं" इति पाठान्तरे—अधिकं रक्षन्त्या नागरक्षित इव निधिः न सुखम् इति सं०। यतिष्ये चेष्टिष्ये, परस्परमेलनायेति शेषः। "जतिस्सं" इत्यत्र "घडइस्सं" इति पाठे—घटयिष्यामि इति सं०।

(थ) भगवन्! माहात्म्यशालिन्! प्राणिमात्रेष्वेव निरङ्कुशप्रभावविस्तारात् कामस्य "भगवन्!" इत्यनेन सम्बोधन कृतमिति। सङ्कल्पयोने! सङ्कल्पः मानसं कर्म, 'एवमेवं करिष्यामि' इति मनोव्यापार इत्यर्थ, यूनोः अन्योऽन्यगतमनोभावः इति यावत्, "सङ्कल्पः कर्म मानसम्" इत्यमरः; स एव योनिः उत्पत्तिकारणं यस्य तत्सम्बुद्धौ, हे मनोभव!

क्व रुजा हृदयप्रमाथिनी ?
क्व च ते विश्वसनीयमायुधम् ?।
मृदुतीक्ष्णतरं यदुच्यते
तदिदं मन्मथ! दृश्यते त्वयि ॥ २ ॥

इत्यर्थः। प्रतिबन्धवत्स्वपि विघ्नयुक्तेषु अपि, विषयेषु अर्थेषु, भोग्यवस्तुषु इत्यर्थः, अभिनिवेश्य अभिनिवेशः एकान्तासक्तिः तं जनयित्वा, तथा तेन प्रकारेण। "अभिनिवेश्य तथा प्रहरिष्यसि" इत्यत्र "अभिनिवेशकारी किं तथा प्रहरसि" इति पाठान्तरम्। "प्रहरिष्यसि" इत्यत्र "प्रहरसि" इति पाठ एव साधुः। अयं मत्लक्षणः एव.। कालान्तरक्षमः कालविलम्बसहनसमर्थः। 7009

कोमलस्यापि कामशरस्य नितान्तदुःसहत्वं प्रकटयति, क्वेति।— हृदयस्य चेतसः, प्रमाथिनो विलोडनकारिणी, धैर्य्यलोपकारिणीत्यर्थः, रुजा उपतापः, यन्त्रणा इत्यर्थः, "स्त्री रुग्रुजा चोपताप—" इत्यमरः; क्व? कुत्र? विश्वसनीय विश्रम्भपात्रं, सुकोमलकुसुमनिर्म्मितत्वात् पीड़ाकरोऽयं भवितुं नार्हतीति विश्वासस्थानमित्यर्थः, ते तव, आयुधञ्च अस्त्रञ्च, बाणाश्चेत्यर्थः, क्व? कुत्र? उभयोर्म्महदन्तरमित्यर्थः, कौसुमशरेण एवं हृदयप्रमाथनमतीवासम्भवमेवेति भावः, मृदु कोमलम्, अथच तीक्ष्णतरम् अतीव खरम्, अन्तर्भेदकमिति यावत्, यत् उच्यते कथ्यते,लोकैरिति शेषः, एकमेव वस्तु मृदु सदपि अतीव निशितं दृश्यते इति यत् लोकैः कथ्यते, मन्मथ! हे काम! तत् मृदु अपि तीक्ष्णम्, इदं वस्तु, त्वयि भवति, दृश्यते लक्ष्यते, एकमेव तवैवायुधं कुसुममयत्वेन कोमलं सदपि प्रस्तरकठिनवक्षसां शूराणामपि धैर्य्यविघातनात् तीक्ष्णतरमेव भवति, अतश्च शैत्य सन्तापयोर्विरुद्धगुणयोरेकत्र समावेश इव मृदुत्व-तीक्ष्णतरत्वयोर्विरुद्धगुणयोः स अतीवाद्भुत एवेति भावः। प्राणिनां मनसः उन्माथकत्वेन तव मन्मथ इति नाम सार्थकमिति ज्ञापनार्थं "मन्मथ!" इति आमन्त्रणपदं कविना प्रयुक्तमिति मन्तव्यम्। श्लोकेऽस्मिन् हृदयप्रमथनत्वायुधविश्वसनीयत्वयोः विरूपयोः सङ्घटनात् विषमालङ्कारः, "विरूपयोः सङ्घटना या च तत् विषमं मतम्" इति दर्पणोक्तलक्षणात्। सुन्दरी वृत्तम्—"अयुजोः

विदू। णं भणामि, तस्सिं साहणिज्जे कज्जे किदो मए उवाओवक्खेवोत्ति। ता पज्जवत्थावेदु भवं अत्ताणं। * (ट)

राजा। अथेमं दिवसशेषम् उचितव्यापारविमुखेन चेतसा क्व नु यापयामि ? (ध)

विदू। अज्ज एव्व पढमावदारसुहआणि रत्तकुरवआणि उवाअणं पेसिअ णवबसन्तावदारव्ववदेसेण इरावदीए णिउणिआमुहेण आचक्खिदो—"इच्छेमि अज्जउत्तेण सह दोलाधिरोहणं अणुभविदुं"त्ति। भवदावि संपडुणादं, ता पमदवणं एव्व गच्छम्ह। † (न)

* ननु भणामि, तस्मिन् साधनीये कार्य्ये कृतो मया उपायोपचेप इति; तत् पर्य्यवस्थापयतु भवान् आत्मानम् इति स०।

† अद्यैव प्रथमावतारसुभगानि रक्तकुरवकाणि उपायनं प्रेष्य नववसन्तावतारव्यपदेशेन इरावत्या निपुणिकामुखेनाख्यातः,—"इच्छामि आर्य्यपुत्रेण सह दोलाधिरोहणमनुभवितुम्" इति। भवताऽपि सम्प्रतिज्ञात, तत् प्रमदवनमेव गच्छाव इति स०।

यदि सौ ज-गौ युजोः स-भ-रा लगौ यदि सुन्दरो तदा॥" इति तल्लक्षणात्॥ २॥

(ट) साधनीये सम्पादनीये, मालविकया मिलनसाधनरूपे इत्यर्थः। उपायोपचेपः उपायस्य साधनस्य, येन कार्य्यसिद्धिर्भवेत् तादृशव्यापारस्येत्यर्थः, उपायस्य सामादीनामन्यतमस्येत्यर्थो वा, उपक्षेपः प्रयोग इत्यर्थः। "उवाओवक्खेओ" इत्यत्र क्वचित् "उअक्खेओ" इति मात्रः पाठः। पर्य्यवस्थापयतु स्थिरीकरोतु, धैर्य्यधारणं करोतु इत्यर्थः।

(ध) अथ इति प्रश्नार्थकमव्ययं, "मङ्गलानन्तरारम्भ प्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः। दिवसशेषं दिनस्य अवशिष्टभागम्। उचितेति।—उचितः अभ्यस्तः, प्रतिदिनं करणीयः इत्यर्थः, यः व्यापारः कार्य्यः, तस्मात् विमुखेन प्रतिनिवृत्तेन, उदासीनेनेति यावत्। यापयामि ? अतिवाहयामि ?

राजा। न क्षममिदम्। (प)

विदू। कहं विश्व। *

राजा। वयस्य! निसर्गनिपुणाः स्त्रियः। कथ मामन्य-सङ्क्रान्तहृदयमुपलालयन्तमपि ते सखी न लक्षयिष्यति? (फ)

---

* कथमिव? इति स०।

---

(न) प्रथमेति।—प्रथमावतारेण प्रथमाविर्भावेण, आद्यविकाशेन हेतुना इत्यर्थः, सुभगानि मनोहराणि, अतीव आदरणीयानीत्यर्थः, रक्तकुरुवकाणि रक्तवर्णझिण्टीपुष्पाणि, "सैरीयकस्तु झिण्टी स्यात् तस्मिन् कुरुवकोऽरुणे" इत्यमरः; उपायनम् उपहारम्। नवेति।—नवस्य नूतनस्य, सद्यः समागतस्येत्यर्थः, वसन्तस्य तदाख्यस्य ऋतोः, अवतार आविर्भाव, तस्य व्यपदेशेन छलेन, इरावत्या गीतवाद्यनिपुणया अपरया राज्ञ्या, निपुणिकामुखेन निपुणिका इरावत्याः सहचरी चेटी वा, तन्मुखेन तद्द्वारा इत्यर्थः, आख्यात. कथित.। "आचक्खिदो" इत्यत्र "पत्थिदो भव" इति पाठे—प्रार्थितो भवान् इति स०। दोलाधिरोहणमनुभवितुं दोलाया-मुपविश्य तद्दोलनजातानन्दमुपभोक्तुमित्यर्थः। सम्प्रतिज्ञातम् अङ्गीकृतम्, इरावत्या इच्छां पूरयितुमिति भाव.। "भवदावि संपडिस्सादं" इत्यत्र "भवदावि से पडिस्सादं" इति पाठे—भवताऽपि अस्याः प्रतिज्ञातम् इति स०।

(प) इदं प्रमदवनगमनं, न क्षमं न युक्तं, नोचितमित्यर्थः, यद्वा—न क्षमं न हितं, नावयो. श्रेयस्करमित्यर्थः, "क्षमा भूमौ तितिक्षायां स्त्रियां युक्ते नपुंसकम्। वाच्यवत् शक्त-हितयोः" इति मेदिनी।

(फ) निसर्गनिपुणाः निसर्गेण स्वभावेन, स्वभावत एवेत्यर्थः, निपुणाः दक्षाः, प्रणयिजनस्य चित्तवृत्तिपरिज्ञाने स्वभावत एव पटीयस्य इत्यर्थः। अन्येति।—अन्यस्याम् अपरस्यां स्त्रियां, सङ्क्रान्त लग्नम्, अनुरक्तमित्यर्थः, हृदयं चित्तं यस्य तथाभूतम्, उपलालयन्तं सादरमनुरोधं आलयन्तमपि, बहिः सानुराग समादरं प्रदर्शयन्तमपीत्यर्थः, ते सखी

अतः पश्यामि—(व)

उचितः प्रणयो वरं विहन्तुं
बहवः खण्डनहेतवो हि दृष्टाः ।
उपचारविधिर्मनस्विनीनां
न तु पूर्वाभ्यधिकोऽपि भावशून्यः ॥ १ ॥

---

इरावती न लङ्घयिष्यति? न ग्रस्यति? अपि तु लङ्घयिष्यत्येवेत्यर्थः, प्रणयपालस्य चित्तवृत्तिं प्रति स्त्रीणां स्वभावसिद्धानुभूतेरिति भावः। "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इत्यनुशासनात् अन्या-शब्दस्य पुंवद्भावः।

(व) अतः अस्माद्धेतोः, पश्यामि विवेचयामीत्यर्थः, वक्ष्यमाण-श्लोकोक्तमुपायं समीचीनतया इति शेषः।

किं पश्यामि? इत्याह, उचित इति।—प्रणयः याच्ञा, दोलाधि-रोहणाय इरावत्या प्रार्थनेत्यर्थः,"प्रणयः प्रश्रयो प्रेम्णि याच्ञा-विश्रम्भयो-रपि" इति मेदिनी; विहन्तुं खण्डयितुं, विफलयितुमित्यर्थः, तत्प्रार्थनानुयायिकार्य्याकरणेनेति भावः, उचितः युक्तः, वरं मनाक्प्रियं, तस्याः प्रार्थनाया अपूरणेनापि न विशेषदोषो भवेदिति भावः। ननु कथं न विशेषदोषो भवेत्? इत्याह, बहव इति—हि यतः, बहवः अनेके, विविधा इति यावत्, खण्डनस्य विघातस्य, प्रार्थनानुयायिकार्य्या-करणस्येत्यर्थः, हेतवः कारणानि, राजकार्य्याणां बाहुल्यं शारीरपीड़ा इत्यादयो विविधा हेतवः इत्यर्थः, दृष्टाः कल्पयितुं शक्या इत्यर्थः, मयेति शेषः। ननु वाचिकसमादरप्रदर्शनेन तां सन्तोषयतु, सहसा प्रणयास्पदस्य प्रणयखण्डनं नोचितमित्याह, उपचारेति।—तु किन्तु, मनस्विनीनां प्रशस्तमनसां, बुद्धिमतीनामित्यर्थः, मानिनीनामिति भावः, पूर्वाभ्यधिकोऽपि पूर्वस्मात् उपचारविधेः अतिशयेनाधिकोऽपि, का कथा अल्पस्य इत्यपि-शब्दार्थः, भावशून्यः आन्तरिकानुरागविरहितः, उपचारविधिः सेवाविधानम्, अनुरागसूचकव्यवहार इत्यर्थः, न, वरमिति पूर्वेणान्वयः, अनुरागशून्यः पूर्वस्मादधिकोऽपि उपचारविधिः तां सन्तोषयितुं न समर्थो भवेत्, अतः तादृशविधिर्नैव करणीयः, कृते तु

विदू। णारिहदि भवं अंतेउरट्ठिदं दक्खिण्णं एक्कपदे पिट्ठदो कादुं। * (भ)

राजा। [विचिन्त्य]। तेन हि प्रमदवनमार्गमादेशय। (म)

विदू। इदो इदो भवं। † (य)

[उभौ परिक्रामतः]।

---

* नार्हति भवानन्तःपुरस्थितं दाक्षिण्यमेकपदे पृष्ठतः कर्तुम् इति सं०।

† इत इतो भवान् इति सं०।

---

मनस्विनी सा अवश्यमेव मच्चित्तभावं लक्षयिष्यति, तेन च अनिष्टमेव आपतिष्यतीति भावः। अत्र अप्रस्तुतात् मनस्विनीसामान्यात् प्रस्तुतायाः विशेषायाः इरावत्याः प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः। मालभारिणी वृत्तं—"विषमे स स जा यदा गुरू चेत् स-भ-रा येन तु मालभारिणीयम्" इति लक्षणात्॥ ३॥

(भ) अन्तःपुरस्थितम् अन्तःपुरिकासु अवरोधवर्त्तिनीषु राज्ञीसु अवस्थितं, तद्गतमित्यर्थः, "अंतेउरट्ठिद" इत्यत्र "अंतेउरपड्ढिट्ठिदं" इति पाठे—अन्तःपुरप्रतिष्ठितम् इति सं०। दाक्षिण्यं सर्वासु समवर्त्तित्वम्, "एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः" इति दर्पणोक्त-लक्षणक दक्षिणनायकव्यवहारमित्यर्थः, एकपदे सपदि, सहसा इत्यर्थः, "तत्क्षणैकपदे तुल्ये सद्यः सपदि च स्मृते" इति हलायुधः; पृष्ठतः कर्तुं पश्चात् कर्तुं, निराकर्तुमिति यावत्, परित्यक्तुमित्यर्थः, नार्हति न योग्यो भवति, ईदृशव्यवहारो भवता नैवाचरणीयः दाक्षिण्यविलोपाशङ्कयेति भावः।

(म) तेन तवाभिमतस्य युक्तियुक्तत्वेनेत्यर्थः। आदेशय प्रदर्शय इत्यर्थः।

(य) इतः इतः अस्यां दिशि अस्यां दिशि, अनेन मार्गेण अनेन मार्गेण इत्यर्थो वा, आगच्छतु इति शेषः।

विदू। णं एदं पमदवणं पवणबलचलाहिं पल्लवंगुलीहिं तुअरावेदि विअ भवन्तं पविसिदुं। * (र)

राजा। [स्पर्शं रूपयित्वा]। अभिजातः खलु वसन्तः। (ल) सखे! पश्य—

उन्मत्तानां श्रवणसुभगैः कूजितैः कोकिलानां
सानुक्रोशं मनसिजरुजः सह्यतां पृच्छतेव।
अङ्गे चूतप्रसववसुरभिर्दक्षिणो मारुतो मे
सान्द्रस्पर्शः करतल इव व्यापृतो माधवेन ॥ ४ ॥

---

* नन्वेतत् प्रमदवनं पवनबलचलाभिः पल्लवाङ्गुलीभिस्त्वरयतीव भवन्तं प्रवेष्टुम् इति सं०।

---

(र) पवनेति।—पवनबलेन वायुवेगेन, चलाभिः चञ्चलाभिः, कम्पिताभिरित्यर्थः, पल्लवाः किसलयानि एव, अङ्गुल्यः ताभिः। त्वरयति त्वरायुक्तं करोतीव, पल्लवरूपाङ्गुलीसङ्केतेन सत्वरं प्रवेष्टुमाह्वयतीवेत्यर्थः। क्रियोत्प्रेक्षाऽलङ्कारः। "पवणबलचलाहिं" इत्यत्र "पवणदरचलाहिं" तथा "तुअरावेदि" इत्यत्र "तुवरेदि" इति पाठे—पवनदरचलाभिः, तथा त्वरयति इति सं०।

(ल) स्पर्शं प्रमदवनस्य वायोः स्पर्शं, स्पर्शजनितभावविशेषमित्यर्थः, "स्पर्शम्" इत्यत्र "स्पर्शसुखम्" इति क्वचित् पाठः। रूपयित्वा अभिनीय। अभिजातः अभि सर्वतोभावेन, जातः प्रादुर्भूतः, सम्यक्तया आविर्भूत इत्यर्थः। खलु इति वाक्यालङ्कारे।

वसन्ताविर्भावं समर्थयितुमाह, उन्मत्तानामिति।—उन्मत्तानां प्रकृष्टमदानां, वसन्तागमनेन अतीव हृष्टानामित्यर्थः, "उन्मत्तानाम्" इत्यत्र "आमत्तानाम्" इति पाठान्तरं, कोकिलानां पिकानां, श्रवणसुभगैः श्रुतिसुखकरैः, कूजितैः रवैः, पञ्चमस्वरैः इति यावत्, मनसिजरुजः कामजनितपीडायाः, अनङ्गस्य शराघातजनितवेदनाया इत्यर्थः, सह्यतां सहनयोग्यतां, सानुकम्पं सदयं यथा तथा, "कृपा दयाऽनुकम्पा स्यादनुक्रोशः" इत्यमरः; पृच्छतेव जिज्ञासमानेनेव, मामिति शेषः, माधवेन

विदू। पविस णिव्वुदिलाहाअ। * (व)

[ उभौ प्रविशत ]

विदू। अवधाणेण दिट्ठिं देहि, एदं क्खु भवंतं विअ लोहइदुकामाए पमदवणलच्छीए जुवदीवेसलज्जावइत्तिअं कुसुमणेवत्थं गहिदं। † (श)

---

* प्रविश निर्वृतिलाभाय इति स०।

† अवधानेन दृष्टिं देहि, एतत् खलु भवन्तमिव लोभयितुकामया प्रमदवनलक्ष्म्या युवतिवेशलज्जापयितृकं कुसुमनेपथ्यं गृहीतम् इति स०।

---

मधुना, वसन्तेनेत्यर्थः, "माधवोऽब्जे मधौ राधे यादवे ना स्त्रियां मिसौ। मधुशर्करावासन्तीकुट्टनीमदिरासु च॥" इति "मधु पुष्परसक्षौद्रमद्ये ना तु मधुद्रुमे। वसन्तदैत्यभिच्चैत्रे" इति च मेदिनी; चूतस्य आम्रस्य, "आम्रश्चूतः" इत्यमरः; प्रसवेन पुष्पेण, आम्रमुकुलेनेत्यर्थः, "स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने" इत्यमरः; सुरभिः सुगन्धिः, दक्षिणः दक्षिणस्याः दिशः प्रवहमाण इत्यर्थः, मारुतः वायुः, मलयानिल इति यावत्, मे मम, अङ्गे शरीरे, कामानलदग्धे इति भावः, सान्द्रः मृदुः, कोमल इत्यर्थः, "सान्द्र वने घने मृदौ" इति मेदिनी; स्पर्शः यस्य तादृशः, करतल इव पाणितल इव, व्यापृतः नियोजितः। लोके यथा कश्चित् चिकित्सकः दाहरोगिणश्चिकित्सार्थं गत्वा तस्य दाहजसन्तापस्य सह्यतां पृच्छति, तथा तच्छान्त्यर्थं स्वकरतलेन तस्य अङ्गं मन्दं मन्दं परामृशति च, एवं वसन्तोऽपि कोकिलकूजनच्छलेन कामानलतापस्य सह्यतां पृच्छन् तच्छान्त्यर्थं सुगन्धिमलयानिलं मम देहे व्यापारयतीति काव्येन वसन्ते चिकित्सकव्यवहारसमारोपात् समासोक्तिरलङ्कारः, स च पृच्छतीव इति उत्प्रेक्षया तथा करतल इव इत्युपमया च सङ्कीर्य्यते। मन्दाक्रान्ता वृत्तम्॥ ४॥

(व) निर्वृतिलाभाय सुखप्राप्तये, "निर्वृतिः स्वस्थितावस्तं गमने च सुखे स्त्रियाम्" इति मेदिनी।

(श) अवधानेन अप्रमादेन, अभिनिवेशसहकारेणेत्यर्थः। "अवधाणेण" इत्यत्र "अवहाणेण" इति पाठान्तरम्। प्रमदवनस्य लक्ष्म्या

राजा। ननु विस्मयादवलोकयामि—

रक्ताशोकरुचा विशेषितगुणो बिम्बाधरालक्तकः
प्रत्याख्यातविशेषकं कुरबकं श्यामावदातारुणम्।
आक्रान्ता तिलकक्रियाऽपि तिलकैर्लग्नद्विरेफाञ्जनैः
सावज्ञेव मुखप्रसाधनविधौ श्रीर्माधवी योषिताम्॥ ५॥

श्रिया, शोभयेत्यर्थः, सवन्त लोभयितुकामया इव प्रलुब्ध कर्त्तुमिच्छन्त्या इव, "लोहइदुकामाए" इत्यत्र "विलोहइदुकामाए" इति पाठान्तरम्; युवतीनां वेशस्य प्रसाधनस्य, भूषणादिना कृतशोभाया इत्यर्थः, लज्जायित्रकं लज्जादायकं, युवतीनां वेशादपि अधिकमनोज्ञमिति यावत्, कुसुमनेपथ्यं कुसुमैः वसन्तकालोचितपुष्पैः नेपथ्य प्रसाधनम्, अलङ्करणमित्यर्थः, "आकल्प-वेशौ नेपथ्यं प्रतिकर्म प्रसाधनम्" इत्यमरः; गृहीतं कृतमित्यर्थः। "जुवदीवेसलज्जावअत्तिअं कुसुमणेवत्थं गहिदं" इत्यत्र जुवइवेसलज्जापइत्तअं (जुवईवेसलज्जावइदिन्न" इति च) वसंतकुसुमणेवत्थं गहीद" इति पाठान्तरम्। श्लोकेऽस्मिन् राजनि नायकस्य प्रमदवनलक्ष्म्याञ्च नायिकाया व्यवहारसमारोपात् समासोक्तिरलङ्कारः, किञ्च, प्रमदवनलक्ष्म्या भवन्त लोभयितुकामया इव इत्युत्प्रेक्षा, तथा युवतीवेशादपि प्रमदवनलक्ष्म्याः कुसुमनेपथ्यस्य आधिक्यवर्णनात् व्यतिरेकश्च, इत्येतेषामलङ्काराणां सङ्करः।

"विस्मयादवलोकयामि" इत्युक्तं, तत्र विस्मयस्य हेतुमाह, रक्ताशोकेति।—बिम्बम् ओष्ठोपमफलमिव, अधरः ओष्ठ, युवतीनामिति शेषः, "अधरस्तु पुमानोष्ठे हीनेऽन्यूर्ध्वे च वाच्यवत्" इति मेदिनी; तस्मिन् अलक्तकः लाक्षारागः, ओष्ठरागवर्द्धनार्थं लिप्त इति भावः, "लाक्षा राक्षा जतु क्लीवे यावोऽलक्तो द्रुमामय" इत्यमरः; रक्ताशोकलतया अशोकतरुस्य अरुणवर्णपल्लवैरित्यर्थः, विशेषितः भिन्नः, पृथक्कृतः इत्यर्थः, अधरीकृत इति यावत्, "त्रिषु विशेषितं भिन्न व्यवच्छिन्नम्" इति जटाधरः; गुणः अरुणिमा यस्य तादृशः, जात इति शेषः, "रक्ताशोकलता" इत्यत्र "रक्ताशोकरुचा" इति पाठान्तरम्; श्यामावदातारुणम् श्यामं नीलवर्णम्, अवदातं श्वेतवर्णम्, अरुणं रक्तवर्णञ्च,

[ इत्युद्यानशोभा निरूपयतः ]। (ष)

[ प्रविष्टा पर्य्युत्सुका मालविका ]। (स)

माल। अविस्सादहिअअं भट्टारअं अहिलसंती अत्तणोवि

---

"वर्णो वर्णन" इति कर्मधारयः; कुरुवकं झिण्टीपुष्पं, "कुरवकम्" इति पाठान्तरम्; प्रत्याख्यातं निराकृतं, तिरस्कृतमित्यर्थः, विशेषक तिलकं, पत्रभङ्गरचना इत्यर्थः, युवतीनां कपोलादिदेशे इति भावः येन तादृशं, जातमिति शेषः, "तमालपत्र-तिलक-चित्रकाणि विशेषकम्" इत्यमरः; तथा लग्नाः संसक्ताः, मधुपानार्थमुपविष्टा इत्यर्थः, द्विरेफाः भ्रमराः, अञ्जनानि कज्जलानीव येषु तादृशैः, तिलकैः तदाख्यवृक्षविशेषस्य पुष्पैः, तिलपुष्पैर्वा, "तिलको द्रुमरोगाश्वभेदेषु—"इति मेदिनी; तिलकक्रियाऽपि ललाटदेशे तिलकरचनाऽपि, युवतीनामिति भावः, आक्रान्ता अभिभूता, अवधीरिता इत्यर्थः, अत एव माधवी वासन्ती, वसन्तकालिकीत्यर्थः, श्रीः सौन्दर्य्यं, प्रमदवनस्येति शेषः, योषितां नारीणां, सुखप्रसाधनविधौ सुखेन अक्लेशेन, विना प्रयत्नेनैवेति यावत्, प्रसाधनविधौ भूषणसम्पादनक्रियायां, सावज्ञेव सावहेलेव, जातेति शेषः, अयत्नेनैव प्रसाधनकर्मणि योषितः पराजितवतीवेति भावः। रक्ताशोकपल्लवारुण्येन अधरस्थालक्तकरागः अधरीकृतः,कृष्णादिकुरुवककुसुमेन कपोलादिषु विन्यस्त विशेषक तिरस्कृतं, तथा भ्रमराध्युषिततिलकपुष्पेण ललाटशोभितिलकक्रिया च प्रत्याख्याता, अत एव प्रमदवनलक्ष्मीः निजस्वाभाविकप्रसाधनात् योषितां प्रसाधनस्य अपकृष्टत्वात् योषितः अवज्ञां कृतवतीवेति निष्कर्षः। श्लोकेऽस्मिन् उपमेयभूतानां योषितां प्रसाधनविधेरपि उपमानभूतायाः वासन्तश्रियाः प्रसाधनस्य उत्कर्षवर्णनेन व्यतिरेकालङ्कारः, विम्बाधरालक्तक., लग्न-द्विरेफाञ्जनः इत्युभयत्र च लुप्तोपमाद्वयं, तथा चतुर्थचरणे सावज्ञेव इत्यत्र गुणोत्प्रेक्षा, किञ्च, सुखप्रसाधनविधौ सावज्ञेव इति वाक्यार्थं प्रति पादत्रयगतवाक्यार्थानां कारणत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्च, इत्येतेषामलङ्काराणामङ्गाङ्गिभावेनावस्थानात् सङ्करः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ५ ॥

(ष) निरूपयतः विशेषेण पश्यत इत्यर्थः, राज-विदूषकौ इति

दाव लज्जेमि। कुदो विहवो सिणिद्धस्स सहीअणस्स वुत्तंतं आचक्खिदुं ? ण आणे, अप्पडिआरगुरुअं वेदणं कित्तिअं कालं मदणो मं णइस्सदि त्ति। [ कतिचित्पदानि गत्वा ]। कहिं णु पत्थिदम्हि ? [ विचिन्त्य ]। आं, संदिट्ठं देवीए—"मालविए !

---

* अविज्ञातहृदयं भट्टारकमभिलषन्ती आत्मनोऽपि तावल्लज्जे। कुतो विभवः स्निग्धस्य सखीजनस्य वृत्तान्तमाख्यातुम् ? न जाने, अप्रतिकार-गुरुकां वेदनां कियत्कालं मदनो मां नेष्यति इति। कुत्र नु प्रस्थिताऽस्मि ?

---

शेषः। "इत्युद्यानशोभां निरूपयतः" इत्यत्र "नाट्येन उद्यानशोभां निर्वर्णयतः" इति पाठान्तरम्।

( स ) पर्युत्सुका इष्टलाभार्थमत्यर्थमुद्युक्ता, अभीष्टस्य राज्ञो दर्शन-लाभार्थमुत्कण्ठिता इत्यर्थः, "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः। "प्रविष्टा" इत्यत्र "ततः प्रविशति" इति पाठान्तरम्।

( ह ) अविज्ञातहृदयम् अविज्ञातं मयि कीदृशः तस्य मनोभावः इत्यविदितं, हृदयम् अन्तःकरणम्, अन्तःकरणवृत्तिरिति यावत् यस्य तादृशम्। भट्टारकं राजानं, "राजा भट्टारको देवः" इत्यमरः। अभि-लषन्ती कामयमाना। आत्मनोऽपि स्वस्या अपि, निजसमीपेऽपीत्यर्थः। स्निग्धस्य स्नेहयुक्तस्य, मां प्रति स्नेहसम्पन्नस्येत्यर्थः, "स्निग्धं स्नेहयुक्ते चिक्कणेऽपि स्यात्" इति मेदिनी; सखीजनस्य, समीपे इति शेषः, वृत्तान्तं वार्त्तां, राजानं प्रति अहमासक्ता इति व्यापारमित्यर्थः, आख्यातुं कथयितुं, कुतः कस्मात्, केन प्रकारेणेत्यर्थः, विभवः सामर्थ्यं, स्यात् ? इति शेषः, अननुरक्ते अनुरागज्ञापनस्य लज्जाकरत्वादिति भावः। मदनः कियन्तं कालं माम् अप्रतिकारगुरुकाम् अप्रतिकारात् प्रतिकार-सामर्थ्याभावात्, गुरुकां महतीम्, असह्यामिति यावत्, यद्वा—न विद्यते प्रतिकारः प्रतिविधानोपायः इत्यर्थः यस्याः तादृशी अप्रतिकारा अप्रति-विधेया, अत एव गुरुका तां, वेदनां पीड़ां, नेष्यति, प्रापयिष्यति, द्रापयिष्यतीत्यर्थः, तत् न जाने। नु इति प्रश्ने, "नु वितर्कापमानयोः। विकल्पानुनयातीत प्रश्ने हेत्वपदेशयोः" इति मेदिनी। "कतिचित् पदानि

गोदमचावलादो दोलापरिब्भट्टाए सरुजो मह चलणा, ण सक्कुणोमि। तुमं दाव तवणोआसोअस्स दोहलं णिवट्टेहि। जइ सो पंचरत्तब्भंतरे कुसुमं दंसेदि, तदो तुह—[ इत्यर्द्धोक्ते ]। अहिलासपूरइत्तिअं पसादं दावइस्सं"त्ति। ता जाव णिओअ-भूमिं पढमं गदा होमि, दाव अणुपदं मम चलणालंकार-हत्थाए वउलावलिआए आअंतव्वं, ता दाव परिदेविस्सं विस्सद्धं मुहुत्तअं। * (छ) [ इति परिक्रामति ]।

---

आं, सन्दिष्टाऽस्मि देव्या—"मालविके! गौतमचापलाद्दोलापरिभ्रष्टायाः सरुजौ मम चरणौ, न शक्नोमि। त्वं तावत् तपनीयाशोकस्य दोहदं निर्वर्त्तय, यदि स पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति, ततस्तुभ्यमभिलाष-पूरयितृकं प्रसादं दापयिष्यामि" इति। तत् यावन्नियोगभूमिं प्रथमं गता भवामि, तावदनुपदं मम चरणालङ्कारहस्तया वकुलावलिकया आगन्तव्यम्। तत् तावत् परिदेविष्ये विस्रब्धं मुहूर्त्तकम् इति सं०।

---

गचा"इत्यनन्तरं"विस्मृतिमभिनीय"इत्यधिकः पाठः क्वचित्। "विचिन्त्य" इत्यत्र "स्मृतिमभिनीय" इति पाठान्तरम्। "विचिन्त्य स्मृतिमभिनीय" इति कुत्रचित् पाठः। "आम्" इति स्मरणार्थकमव्ययम्, "आं ज्ञान-निश्चयस्मृत्यो." इति मेदिनी। सन्दिष्टाऽस्मि आज्ञप्ताऽस्मि। "आं संदिट्ठम्हि" इत्यत्र "आदिट्ठम्हि" इति पाठान्तरे—आदिष्टाऽस्मि इति सं०। देव्या धारिण्या। गौतमचापल्यात् गौतमस्य विदूषकस्य, चापल्यात् चपलस्वभावत्वात्, धैर्य्याभावत्वादित्यर्थः, अतर्कितभावेन अतिद्रुतं दोला-परिचालनादिति यावत्, दोलापरिभ्रष्टायाः दोलातः भूमौ निपतितायाः, मम चरणौ सरुजौ सवेदनौ, जातौ इति शेषः, न शक्नोमि, पादौ सञ्चालयितुमिति शेषः। दोहदम् अकाले पुष्पोत्पादनार्थं क्रियाविशेषं, पादाघातरूपमिति यावत्, "तरुगुल्मलतादीनामकाले कुशलैः कृतम्। पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रिया॥" इति शब्दार्णवः; यद्वा—दोहद पुष्पप्रसवलक्षणं गर्भं, गर्भलक्षणमिति वा, यद्वा—दोहद पादाघात-प्राप्तिरूपमभिलाषं, "दोहदो गर्भलक्षणे। अभिलाषे तथा गर्भे" इति

विट्। [ दृष्ट्वा ]। ह्वी ह्वी ! एदं क्खु सीहुपाणुव्वेजिअस्स मच्छंडिआ उवणदा। * (क)

---

* आश्चर्य्यम् ! एतत् खलु सीधुपानोद्वेजितस्य मत्स्यण्डिकोपनता इति स०।

---

हैमः। सः तपनीयाशोकः। निर्वर्त्तय सम्पादय। दर्शयति लोकलोचन-गोचरीकरोति, उत्पादयतीत्यर्थः। "पादाघातादशोकं विकसति" इति कविसमयप्रसिद्धेः। अन्तरा मध्ये, कथ्यमानवाक्यमध्ये इत्यर्थः, निःश्वस्य दीर्घनिःश्वासं त्यक्त्वा, "अभिलाषपूरयितृकं प्रसादं दापयिष्यामि" इति राज्ञीवचनेन अभीष्टस्य राज्ञः स्मृतौ आविर्भावादिति भावः। प्रसादम् अनुग्रहं, पारितोषिकमिति यावत्। "अहिलासपूरइतिअं" इत्यत्र "अहिलासपूरइदिअ" "अहिलासपूरइत्तअं" इति च पाठान्तरद्वयम्। दापयिष्यामि, कोषाध्यक्षेणेति शेषः। "दावइस्सं" इत्यत्र "दाइस्सं" इति पाठान्तरं समीचीनं, दास्यामि इति तस्य सं। यावत् यावता कालेन, नियोगभूमिम् आदेशस्थानम्, आदिष्टदेशमित्यर्थः, तपनीयाशोकसमीप-मिति यावत्। नियोगभूमिं कार्य्यस्थानमिति वा। "पढमं"इत्यत्र"पडमं" इति क्वचित् पाठः। तावत् तावता कालेन, तत्कालमध्ये एवेत्यर्थः। अनुपदं पदस्य अनु पश्चात्, पश्चात् पश्चादित्यर्थः। तावत् यावत् वकुला-वलिका नागच्छति तावदित्यर्थः। विश्रब्धं विश्वस्तं, निःशङ्कचित्तमिति यावत्, परिदेविष्ये विलपिष्यामि, शोकं करिष्यामीत्यर्थः, विलापस्य हृदयभारलाघवकरत्वादिति भाव', "विलापः परिदेवनम्" इत्यमरः।

(क) ह्वी ह्वी इति विस्मयसूचकमव्यय, "ह्वी दुःखे हेतावाख्यातो विषादे विस्मयेऽपि च" इति मेदिनी। "ह्वी ह्वी" इत्यत्र "ह्वो ह्वो" तथा "वअस्स" इति च पाठान्तरद्वयम्। सीधुपानोद्वेजितस्य सीधोः आसवस्य, पक्वेक्षुरसकृतमद्यविशेषस्येत्यर्थः, "सीधुरिक्षुरसैः पक्वैः" इति शार्ङ्गधरः, "मैरेयमासव सीधुः" इत्यमरश्च, पानेन सेवनेन, उद्वेजितस्य विह्वलस्य, जनस्येति शेषः। मत्स्यण्डिका फाणितं, "राव्" इति ख्यातः खण्डविशेष इत्यर्थः, "मत्स्यण्डी फाणितं खण्डविकारे" इत्यमरः ; यद्वा—मत्स्यण्डिका

राजा। अये! किमेतत्? (ख)

विदू। एसा णादिपरिक्खिदवेसा उस्सुअवअणा एआइणी मालविआ अदूरे वट्टदि। * (ग)

राजा। [ सहर्षम् ]। कथ, मालविका!! (घ)

---

* एषा नातिपरिष्कृतवेशोत्सुकवदना एकाकिनी मालविका अदूरे वर्तते इति सं०।

---

"इक्षोः रसो यः सम्पक्को घनः किञ्चित् द्रवान्वितः। मन्दं यत् स्यन्दते तस्मात् मत्स्यण्डीति निगद्यते॥" इति भावप्रकाशोक्तलक्षणक. घनीभूत-गुड़विशेषः। उपनता समागता, सीधुपानविक्लवस्य मत्स्यण्डिका यथा मत्ततनाशिनी, तथा अतर्कितभावेन स्वयमुपस्थिता मालविका मदना-तुरस्य तव सन्तापहारिणी भविष्यतीति भावः। अत्र च सीधुपानोद्वेजि-तस्य मत्स्यण्डिका यथा, तथा कामसन्तप्तस्य राज्ञः मालविका इति समाद-प्रस्तुतात् प्रस्तुतस्य समस्य प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः।

(ख) अये! भोः! इति विदूषकसम्बोधनम्। किमेतत्? त्वया यत् "एतत्" इति पदं प्रयुक्तं, तदेतत् किम्? एतत्-शब्देन त्वया किं लक्ष्यते? इति भावः।

(ग) नातीति।—न अतिशयेन परिष्कृतः परिच्छन्नः, वेशः सज्जा यस्याः तादृशी, वसनभूषणादिभिरसंस्कृता स्वाभाविकवेशा, निदेश-पालनार्थमागमनात् अभीष्टाप्राप्तिजनितमनस्तापाच्चेति भावः। उत्सुक-वदना उत्सुकम् उत्कण्ठितम्, उत्कण्ठासूचकमित्यर्थः, वदनं मुखं यस्या-स्तादृशी। अदूरे नातिदूरे। एकाकिनी इति पदेन रहसि तत्सम्भाषणस्य अयमेव प्रकृष्टावसर इति गम्यते। "वट्टदि" इत्यत्र "अहिवट्टदि" इति क्वचित् पाठः, अभिवर्त्तते इति सं०। आभिमुख्येन आगच्छति इति च तस्यार्थः।

(घ) कथमिति हर्ष-सम्भ्रममिश्रितप्रश्नार्थकमव्ययं, "कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे। प्रश्ने सम्भावनायाञ्च" इति मेदिनी; मालविका आगच्छति इत्येतत् सत्यं किम्? इत्यर्थः।

विदू। अथ इ०। * (ङ)

राजा। शक्यमिदानीं जीवितमवलम्बयितुम्—(च)

त्वदुपलभ्य समीपगतां प्रियां
हृदयमुच्छ्वसितं मम विक्लवम्।
तरुवृतां पथिकस्य जलार्थिनः
सरितमारसितादिव सारसात्॥ ६॥

क्व तत्रभवती?

---

* अथ किम् इति स०।

---

(ङ) अथ किमिति स्वीकारार्थकमव्ययम्।

(च) शक्य, मयेति शेषः। अवलम्बयितुं धारयितुं, कामाग्निना दह्यमानः मृतप्रायोऽहमिदानीं मालविकालाभानन्देन जीवनं धारयितुं समर्थो भवामीत्यर्थः।

जीवनावलम्बने समर्थतायां कारणं दर्शयति, त्वदिति।—आरसितात् उच्चैः शब्दायमानात्, सारसात् तदाख्यजलचरपक्षिविशेषात्, सारसस्य उच्चरवमाकर्ण्येत्यर्थः, तरुवृतां वृक्षराजिपरिवेष्टिताम्, अत एव दूरतः अदृश्यामिति भावः, सरितं नदीम्, उपलभ्य विदित्वा, यदा अत्र सारस-रटितं श्रूयते, तदा नूनमेवात्र जलाशयो विद्यते इति निश्चित्य इत्यर्थः, जलार्थिनः पानीयाभिलाषिणः, पिपासोरिति यावत्, पथिकस्य इव, त्वत् त्वत्तः, तव सकाशादित्यर्थः, प्रियां दयितां मालविकां, समीपगताम् अदूरवर्तिनीम्, उपलभ्य विदित्वा, मम विक्लवं विह्वलं, दुःखितमिति यावत्, हृदयं चेतः, उच्छ्वसितम् उत्फुल्लम्, आनन्दाधिक्यात् उद्वलित-मित्यर्थः, जातमिति शेषः। उपमाऽलङ्कारः, तथा चतुर्थपादे 'स' 'र' इति वर्णयोरसकृदेकधा साम्यात् वृत्त्यनुप्रासश्चेत्यनयोः संसृष्टिः। द्रुतविलम्बितं वृत्तं—"द्रुतविलम्बितमाह न-भौ भ-रौ" इति लक्षणात्॥ ६॥

विदू। एसा तरुराइमज्झादो णिक्कंता इदो ज्जेव्व परिवट्टंती दीसदि। * (छ)

राजा। पश्यास्येनां—

विपुलं नितम्बदेशे मध्ये क्षामं समुन्नतं कुचयोः।
अत्यायतं नयनयोर्मम जीवितमेतदायाति ॥ ७ ॥

सखे! पूर्वस्मादवस्थान्तरमुपारूढा तत्रभवती। (ज) तथा हि—

* एषा तरुराजिमध्यान्निष्क्रान्ता इत एव परिवर्त्तमाना दृश्यते इति स०।

(छ) निष्क्रान्ता वहिरागता। इत एव अस्यामेव दिशि। परिवर्त्तमाना परि सर्वतोभावेन वर्त्तमाना अवस्थिता, अस्यां दिशि अभिमुख कृत्वा तिष्ठन्तीत्यर्थः, अस्यां दिशि आगन्तुमभिलषन्ती वर्त्तमाना इति भावः। "परिवट्टंती" इत्यत्र "अभिवट्टती" इति पाठे—अभिवर्त्तमाना इति स०।

मालविकां वर्णयति, विपुलमिति।—नितम्बदेशे श्रोणिभागे, विपुलं विशाल, विशालनितम्बयुक्तमित्यर्थ., "नितम्बदेशे" इत्यत्र "नितम्बविम्बे" इति पाठान्तरं, मध्ये शरीरमध्यदेशे, कटिदेशे इत्यर्थः, क्षामं क्षीणं, मुष्टिग्राह्यकटिविशिष्टमित्यर्थः, कुचयोः स्तनयोः, समुन्नतम् उत्तुङ्गम्, उच्चस्तनशोभितमित्यर्थः, नयनयोः नेत्रयोः, अत्यायतम् अतिविस्तृतम्, आकर्णविस्तृतनयनसमन्वितमित्यर्थः,एतत् मालविकास्वरूपं पुरो दृश्यमानं, मम जीवितं जीवनौषध, कामपीड़ायाः शान्तिकारणमिति यावत्, आयाति आगच्छति, जीवनस्वरूपिणीं मालविकां समालोक्य पुनरुज्जीवितोऽस्मीति भावः। अत्र समासाभावेऽपि "मुख तव कुरङ्गाक्षि! सरोजमिति नान्यथा" इतिवत्, "धर्मस्यात्मा भागधेयं क्षमायाः सारः सृष्टेः जीवितं शारदायाः। आज्ञा साक्षात् ब्रह्मणो वेदमूर्त्तेराकल्पान्तं राजतामेष राजा॥" इतिवत् वा व्यस्तरूपकमलङ्कारः। आर्य्या जातिः ॥ ७ ॥

(ज) उपारूढ़ा अधिगता, प्राप्ता इत्यर्थः। "अवस्थान्तरम्"

शरकाण्डपाण्डुगण्डस्थलेयमाभाति परिमिताभरणा।
माधवपरिणतपत्रा कतिपयकुसुमेव कुन्दलता॥ ८॥

चेटी। एसा वि भट्टं विअ मअणवाहिणा परिमिट्टा भविस्सदि। * (क)

राजा। सौहार्दमेवं पश्यति। (ख)

---

* एषाऽपि भर्तारमिव मदनव्याधिना परिम्लिष्टा भविष्यति इति सं०।

---

इत्यत्र "अतिमनोहरमवस्थान्तरम्" इति अधिकः पाठः क्वचित् दृश्यते।

राजा मालविकायाः अवस्थान्तरं वर्णयति, शरकाण्डेति।—शरस्य तृणविशेषस्य, काण्डवत् दण्ड इव, पाण्डुनी पाण्डुवर्णे, कपोतमुखवर्णे इत्यर्थः, "पाण्डुस्तु पीतभागार्धः केतकीधूलिसन्निभः" इति शब्दार्णवः; गण्डस्थले कपोलदेशौ यस्यास्तादृशी, परिमिताभरणा स्वल्पभूषणा, इयं मालविका, माधवे मधौ, वसन्तसमये इत्यर्थः, "माधवोऽस्त्री मधौ राधे यादवे ना—" इति, "मधु पुष्परसे क्षौद्रमद्ये ना तु मधुद्रुमे। वसन्तदैत्यभिच्चैत्रे—" इति च मेदिनी; यद्वा—माधवे वैशाखे, "वैशाखे माधवो राधः" इत्यमरः; परिणतानि परिपक्वानि, पाण्डुवर्णानीति यावत्, पत्राणि पर्णानि यस्यास्तादृशी, कतिपयकुसुमा स्वल्पपुष्पा, कुन्दलतेव लताख्यगुल्मवृक्षविशेषस्य वल्लीव, आभाति शोभते। शीतावसाने कुन्दलतायाः पत्राणां परिणतत्वं कुसुमानाञ्च स्वल्पत्वं भवति। पाण्डुरकपोलतया परिमिताभरणतया च मालविकायाः कुन्दलतासादृश्यं बोध्यम्, अत उपमालङ्कारः, तथा पूर्वार्द्धे 'इव' इति व्यञ्जकस्य असङ्गताच्चा इत्यनुक्तत्वात्, न च "शरकाण्डपाण्डु" इति लुप्तोपमया सङ्कीर्ण्येति, उपमया च अनयोः संसृष्टिः। आर्या जातिः॥ ८॥

(क) परिमृष्टा स्पृष्टा, आक्रान्ता इत्यर्थः, भविष्यति भवेदित्यर्थः; गण्डदेशस्य पाण्डुत्वादिलक्षणदर्शनादिति भावः। "परिमिट्टा" इत्यत्र "परिमुट्टा" इति पाठान्तरम्।

(ख) सौहार्दं मयि ते स्नेहः, एवं मालविकाया अपि मदनव्याधि-

माल। पअं सो ललिदसुउमारदोहदापेक्खो अगिह्नीद-कुसुमणेवत्थो उक्कंठिदाए मह सोअं अणुकरेदि। जाव से पच्छाअसीअले सिलापट्टए णिमस्सा अत्ताणं विणोदेमि। * (ट)

---

* अयं सः ललितसुकुमारदोहदापेक्षी अगृहीतकुसुमनेपथ्य उत्कण्ठिताया मम शोकमनुकरोति। यावदस्य प्रच्छायशीतले निसग्ना आत्मानं विनोदयामि इति स०।

---

परिष्वक्तं, पश्यति तर्कयतीत्यर्थः, "कामः स्वतां पश्यति" इति कवि-वाक्यानुसारेण यत अहम् एतदर्थं कामार्त्तः, अतः एषाऽपि अवश्यमेव मदर्थं कामार्त्ता भवेत् इति कामिजनसाधारणमनोवृत्तिः ममापि अस्ति, अभिन्नहृदयस्त्वं ममेदृशीं मनोवृत्तिम् अनुसरन् मालविकामपि मदर्थं कामार्त्तां मन्यसे, परन्तु तवैतदनुमानं नाव्यभिचारि, कारणान्तरेणापि तत्सम्भवादिति भावः।

(ट) अयं तपनीयाशोकः, सः यस्मिन् चरणाघातार्थं देव्या अहं प्रेषितः सः, ललितं सुन्दरं, सुकुमारं सुकोमलं, दोहदं गर्भलक्षणं वा गर्भं वा, पुष्पप्रसवार्थं पादाघातमिति यावत्, अन्यत्र—राज्ञा सह मिलनाभि-लाषम्,अपेक्षते अभिलषति यः सः तथोक्तः,न गृहीतं न धृत, कुसुमनेपथ्यं पुष्परूपमाभरणं येन स तादृशः, अन्यत्र—न गृहीतं कुसुमनेपथ्यं पुष्प-निर्मिताभरणं यया सा। मम शोकमनुकरोति ललितसुकुमारराज-सम्मिलनाभिलाषिणीम् अकृतपुष्पसज्जां मामनुकरोतीत्यर्थः, अहं यादृशी शोकार्त्ता, कुसुमाभावेन अयमपि तादृशो दृश्यते इति भावः। "सोअं" इत्यत्र "असोओ" इति पाठान्तरम्, अशोक इति स०। "सोअं अणुकरेदि" इत्यत्र "सोअं अणुकरेदि असोओ" इति क्वचित् पाठः। शिलापट्टके पाषाणखण्डे, प्रस्तरासने इत्यर्थः। निमग्ना अन्तःप्रविष्टा, शिलापट्टान्तराले प्रविश्य उपविष्टा इत्यर्थः। "णिमस्सा" इत्यत्र "णिसस्सा" (निषण्णा इति स०) इति पाठान्तरं युक्तम्। विनोदयामि प्रीणयामि, शीतलीकरोमीति भावः।

विदू। सुदं भवदा, उक्कण्ठिदम्हित्ति अत्तभोदी मंतेदि ?* (ठ)

राजा। नैतावता भवस्तं प्रसन्नतर्कं मन्ये। (ड) कुतः,—

वोढा कुरवकरजसां किसलयपुटभेदशीकरानुगतः।
अनिमित्तोत्कण्ठामपि जनयति मनसो मलयवातः॥ ८॥

* श्रुतं भवता, उत्कण्ठिताऽस्मीत्यत्रभवती मन्त्रयते ? इति स०।

(ठ) उत्कण्ठिता उत्कण्ठा उत्कलिका, प्रियसङ्गलाभार्थं मनोवेदनाविशेष इति यावत्, सा जाताऽस्या इति तादृशी,"रागे त्वलब्धविषये महती वेदना तु या। संशोषणी तु गात्राणां तामुत्कण्ठा विदुर्बुधाः॥" इति। मन्त्रयति गुप्तं भाषते, निर्जनस्थानं प्राप्य स्वयमेव कथयतीति यावत्।

(ड) एतावता एतन्मात्रश्रवणेनेत्यर्थः। प्रसन्नतर्कम् असन्दिग्धानुमानं, निश्चितानुमानमिति यावत्। मालविकाया "उत्कण्ठिताऽस्मि" इति वाक्यमात्रश्रवणेन इयमपि मदर्थं मदनव्याधिपरिक्लिष्टा इति यत् त्वया अनुमितं, तत् न अभ्रान्तं मन्ये इति निष्कर्षः।

कथं मया एवं मन्यते ? इति विवरीतुमाह, वोढेति।—कुरवकरजसां रक्तवर्णझिण्टीपुष्पपरागाणां, वोढा वहनकर्त्ता, एतेन सौगन्ध्यं सूचितं, किसलयानां नवपल्लवानां, पुटानि संश्लेषाः, परस्परसंयोगा इत्यर्थः, तेषां भेदेन पृथक्करणेन, मन्दमन्दवहनेन चालनादिति भावः, एतेन मान्द्यं सूचितं, शीकरैः अम्बुकणैः, पल्लवपुटान्तर्निपतितशिशिरविन्दुभिरिति यावत्, अनुगतः अनुसृतः, मिश्रित इति यावत्, एतेन शैत्यं सूचितं, "शीकरोऽम्बुकणाः स्मृताः" इत्यमरः; यद्वा—किसलयानां पुटं भिनत्तीति किसलयपुटभेदः, (भिदेरण्) स चासौ शीकरैः अम्बुकणैः, नद्यादेः जलविन्दुभिरित्यर्थः, अनुगतश्चेति तथाभूतः, मलयवातः मलयपर्वतात् प्रवहमाणः दक्षिणानिलः, मनसः चेतसः, अनिमित्तोत्कण्ठाम् अहेतुकमपि औत्सुक्यम्, अपिशब्दोऽत्र भिन्नक्रमे; जनयति उत्पादयति, यदि अनिमित्ताऽपि उत्कण्ठा जायते,तदा तव तर्कः प्रसन्न इति मन्तुं नैव शक्नोमीति भावः। अत्र अप्रस्तुतायाः सामान्येनाभिहिताया मानसोत्कण्ठायाः

[ मालविकोपविष्टा ]।

राजा। सखे! इतस्तावदावां लतान्तरितौ भवावः। (ढ)

विदू। इरावदिं विय अदूरे पेक्खामि। * (ण)

राजा। न हि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गजः। (त)

[ इति विलोकयन् स्थितः ]।

माल। हिअअ! णिरवलंबणादो अदिभूमिलंघिणो मणोरहादो विरम। किं मं आआसिअ? † (थ)

---

* इरावतीमिवादूरे प्रेक्षे इति सं०।

† हृदय! निरवलम्बनादतिभूमिलङ्घिनो मनोरथात् विरम। किं मामायास्य? इति सं०।

---

प्रस्तुतायाः विशेषाया मालविकामनसोत्कण्ठायाः प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः, स च अनिमित्तोत्कण्ठां प्रति मलयवातस्य हेतुत्वेनोल्लेखात् पदार्थहेतुककाव्यलिङ्गेन संसृज्यते। आर्य्या जातिः॥ ८॥

(ढ) इतः अस्मात् स्थानात्, उत्याशेति शेषः, लतान्तरितौ लताव्यवहितौ, लतान्तराले अन्येनादृश्यभावेनावस्थितौ, तथात्वे मालविका असङ्कोचं निजाभिप्रायं व्यक्तीकरिष्यति, तेन च आवामपि तच्छ्रोतुं प्रभुव इति भावः।

(ण) प्रेक्षे पश्यामि। "पेक्खामि" इत्यत्र "समत्थेमि" इति पाठे—समर्थये इति सं०। इरावती आगच्छति, अत एव मालविकाप्रसङ्गात् विरम इति विदूषकस्याशयः।

(त) मतङ्गजः हस्ती, कमलिनीं पद्मिनीं, सरोवरस्थितामिति भावः, दृष्ट्वा, "दृष्ट्वा" इत्यत्र "लब्ध्वा" इति पाठान्तरं, ग्राहं जलचरं मकरादिहिंस्रजन्तुविशेषं, न हि नैव, अवेक्षते पश्यति, भयस्थानत्वेन गणयतीत्यर्थः। हस्ती यथा सरसि ग्राहः अस्तीति जानन्नपि कमलिनीलोभात् तत्र अवतरीतुं न पराङ्मुखो भवति, तथा अहमपि इरावतीभयात् मालविकामवलोकयितुं न निवर्त्तिष्ये, अतस्तत्र उपदेशो मया नैव ग्रहणीय इति भावः। "अवेक्षते" इत्यत्र "अपेक्षते" इति पाठान्तरम्।

[ विदूषको राजानं वीचते ]। (द)

राजा। पश्य महत्त्वं स्नेहस्य—(ध)

औत्सुक्यहेतुं विवृणोषि न त्वं
तत्त्वावबोधैकफलो न तर्कः।
तथाऽपि रम्भोरु! करोमि लक्ष्य-
मात्मानमेषां परिदेवितानाम्॥ १०॥

(थ) निरवलम्बनात् निराश्रयात्, निराधारत्वेन विफलादिति भावः। अतिभूमिलङ्घिनः अतिशयिता भूमिः मर्य्यादा अतिभूमिः तां लङ्घयति अतिक्रामतीति तथाभूतात् अतिक्रान्तमर्य्यादात्, सीमारहितादित्यर्थः, निजावस्थाऽयोग्यादिति भावः, यद्वा—अतिभूमिः आधिक्यम्, "अतिभूमिः अतिमर्य्यादायाम् आधिक्ये च" इति वाचस्पत्यं, तां लङ्घयतीति तस्मात् आधिक्यमपि अतिक्रान्तात्, अत्यूर्द्ध्वमारूढ़ादित्यर्थः, मनोरथात् अभिलाषात्, राज्ञा सह सम्मेलनस्पृहात इति यावत्, राजा यदि मयि अनुरक्तोऽभविष्यत्, तदा मे मनोरथः आलम्बनं प्राप्स्यत्, किन्तु तदभावात् मम मनोरथस्य निरवलम्बनत्वं, तथा अवस्थाविपर्य्ययात् राज्ञा मिलनाशा मे प्रांशुलभ्ये फले उद्बाहोर्वामनस्य आशेव असम्भवेव, अत एव मनोरथस्य अतिभूमिलङ्घितत्वम्, एवञ्च ईदृशादनुचितात् मनोरथात् ते विरतिरेव श्रेयसीति निष्कर्षः। आयास्य क्लेशयित्वा, अविरतं तच्चिन्तया मां क्लेशयित्वा कस्ते लाभो भवेत्? न खलु राजा मादृशीनां भाग्यविड़म्बितानां सुलभः, अत एव ततो विरम इति तात्पर्य्यम्।

(द) "एसा वि भवं विअ मअणव्वाहिआ" इत्यादि मया यदुक्तं, तत् सत्यं न वा शृणु इति ज्ञापनमेव विदूषकस्य राजवीक्षणे हेतुर्द्रष्टव्यः।

(ध) "पश्य" इत्यत्र "प्रिये! पश्य" इति क्वचिदधिकः पाठः। स्नेहस्य प्रेम्णः, त्वयि ममेति शेषः, महत्त्वं माहात्म्यं, शक्तिरिति यावत्। "महत्त्वम्" इत्यत्र "वामत्वम्" इति पाठान्तरम्। मालविकां लक्ष्यीकृत्य राज्ञ इयमुक्तिः।

स्नेहस्य महत्त्वम् इति यदुक्तं, तदेव विवृणोति, औत्सुक्यहेतुमिति।—

विदू। संपदं भवदो णिस्संसअं भविस्सदि। एसा अप्पिद-मअणसंदेसा विवित्ते णं बउलावलिआ उवगदा। * (न)

---

* साम्प्रतं भवतः निःसंशयं भविष्यति। एषाऽर्पितमदनसन्देशा विविक्ते एनां वकुलावलिकोपगता इति स०।

---

रम्भोरु! रम्भे कदलीकाण्डे इव घनश्लक्ष्णे, ऊरू यस्याः सा तत्सम्बुद्धौ, हे प्रशस्तोरु! त्वम् औत्सुक्यस्य उत्कण्ठायाः, हेतुं कारणं, न विवृणोषि न कथयसि, न स्पष्टं भाषसे इत्यर्थः, तथा तर्कः अनुमानमपि, न तत्त्वस्य याथार्थ्यस्य, अवबोधः ज्ञानम्, अवधारणमित्यर्थः, एकं मुख्यं, फलं यस्य तादृशः, न, भवतीति शेषः, कदाचित् हेत्वादेर्व्यभिचारात् तर्केणापि तत्त्वनिर्णयो न भवति, सुतरां तेन तव औत्सुक्यहेतुं विदितुं न शक्नोमीत्यर्थः, "तत्त्वावबोधैकफलः" इत्यत्र "तत्त्वावबोधैकरसः" इति पाठान्तरम्; तथाऽपि तर्कस्य तत्त्वावबोधनसामर्थ्याभावेऽपि, आत्मानं स्वं, मामेवेत्यर्थः, एषां त्वत्कृतानामित्यर्थः, परिदेवितानां विलापानां, "विलापः परिदेवनम्" इत्यमरः; लक्ष्यम् उद्देश्यं, करोमि विवेचयामीत्यर्थः, "कामः स्वतां पश्यति" इति कविवाक्यमनुसृत्य मदर्थमेव तवायं विलापः इति निश्चिनोमीति भावः; मया यदिदम् अवधारणं कृतं, तत्र त्वां प्रति मम स्नेहाधिक्यमेव हेतुरिति तात्पर्य्यम्। अत्र औत्सुक्यहेतोः विवरणाभावात् लक्ष्यकरणस्य कारणं विनाऽपि तदुत्पत्तेः विभावनाऽलङ्कारः,—"विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते" इति तल्लक्षणात्, रम्भोरु इत्युपमा च, एतयोः निरपेक्षतया अवस्थानात् संसृष्टिः। उपजाति वृत्तम्॥ १०॥

(न) निःसंशयं सन्देहाभावः, मालविका त्वयि अनुरक्ता न वा एतत् सन्देहनिरसनमित्यर्थः, निर्जनेऽस्मिन् स्थाने मालविका वकुलावलिकया सह विश्रब्धम् आलपिष्यति, तेन स्वमनोभावस्य प्रकाशनादिति भावः। केचित्तु "भवतो भविष्यति सत्यमेव मालविका तव भोग्या भविष्यतीत्यर्थः." इति व्याचक्षते। "णिस्संसअं भविस्सदि" इत्यत्र "संसअं छलिस्सदि" इति पाठान्तरम्। कथं भविष्यति? इत्याशंसायामाह,

राजा। अपि स्मरेदस्मदभ्यर्थनाम् ?। (प)

विदू। किं दाणिं एसा दासीए दुहिदा दाव गुरुअं संदेसं विसुमरेदि ?। * (फ)

[ प्रविश्य परिव्राजिकयाऽनुज्ञाता बकुलावलिका ]।

बकुला। अवि सुहं सहीए ? † (ब)

मालo। अम्मो ! बउलावलिआ उवट्ठिदा !! साअदं दे ? उवविस। ‡ (भ)

---

* किमिदानीमेषा दास्या दुहिता तावत् गुरुकं सन्देशं विस्मरति ? इति सं०।

† अपि सुखं सख्या ? इति सं०।

‡ अहो ! बकुलावलिकोपस्थिता !! स्वागतं ते ? उपविश इति सं०।

---

एषेति।—अर्पितः निवेशितः, मयेति शेषः, मालविकां विज्ञापयितुमिति भावः, मदनसन्देशः कामवार्त्ता, मालविकानिमित्तं भवतः कामजनितावस्थाविषयिणी वार्त्ता इत्यर्थः यस्यां तादृशी। विविक्ते विजने, "विविक्तौ पूतविजनौ" इत्यमरः। क्वचित् "च" इति पाठो नास्ति। "उवगदा" इत्यत्र "उवट्ठिदा" इति पाठान्तरम्।

(प) अपि प्रश्ने। अस्मदभ्यर्थनां मम प्रार्थनां, मालविकायै मम अभिप्रायविज्ञापनार्थं प्रार्थनामित्यर्थः, स्मरेत् ? बकुलावलिकेति शेषः, बकुलावलिका मम प्रार्थनां स्मृत्वा मालविकायै निवेदयिष्यति किम् ? इति निष्कर्षः।

(फ) गुरुकं महान्तं, विशेषप्रयोजनीयमिति यावत्। "दाव" इत्यत्र "तुह" ( तव इति सं० ) इति पाठान्तरम्। विस्मरति इति भूतसामीप्ये वर्त्तमानप्रयोगः, विस्मृता किम् ? इत्यर्थः। क्वचित् "विसुमरेदि" इत्यनन्तरम् "अहं दाव ण विसुमरेमि" इत्यधिकः पाठः। अहं तावन्न विस्मरामि इति तस्य सं०।

(ब) अपि प्रश्ने। सुखम् आनन्दं, कुशलमिति यावत्।

(भ) स्वागतं सुखेनागमनम् ? सुखेनागताऽसि इत्यर्थः ; यद्वा—स्वागतम् ? कुशलम् ? "स्वागतं कुशलप्रश्ने" इति हारावली।

बकुला। [प्रविश्य]। हला! तुमं दाणिं जोग्गदाए णिउत्ता। एक्कं दे चलणं उवणेहि, जाव सालत्तअं सणेउरं करेमि। *(म)

माल। [स्वगतम्]। हिअअ! अलं सुहिदाए। उवट्ठिदो अअं विहवो, कहं दाणिं अत्ताणं मोचेअ? अहवा एदं एव्व मे मिच्चुमंडणं भविस्सदि। † (य)

* हला! त्वमिदानीं योग्यतया नियुक्ता। एकं ते चरणमुपनय यावत् सालक्तकं सनूपुरं करोमि इति सं०।

† हृदय! अलं सुखितया। उपस्थितोऽयं विभवः, कथमिदानीमात्मानं मुञ्चेयम्? अथवैतदेव मे मृत्युमण्डनं भविष्यति इति सं०।

(म) योग्यतया उपयुक्ततया, तपनीयाशोकस्य दोहदसम्पादने समर्थतया इत्यर्थः। नियुक्ता आदिष्टा इत्यर्थः, देव्या इति शेषः। "एक्कं" इत्यत्र "ता एक्कं" इत्यधिकः पाठः क्वचित् (तत् एकम् इति सं०)। एकं येन चरणेन अशोकवृक्षस्य आघातरूपं दोहदं सम्पादयिष्यसि तं चरणमित्यर्थः। उपनय मत्समीपमानय, प्रसारयेति यावत्। सालक्तकं लाचारसाङ्कितम्।

(य) अलं सुखितया सुखं सञ्जातमस्या इति सुखिता तया सुखानुभवेनेत्यर्थः, अलं निष्प्रयोजनम्, एतच्चरणाभरणधारणजनितसुखानुभवेन न किमपि प्रयोजनमस्तीत्यर्थः, राजसमागमे निराशाया भाग्यविडम्बिताया मे इदमाभरणं न सुखाय भविष्यतीति भावः। अयं पुरोवर्त्ती, विभवः सम्पत्, आभरणरूपमैश्वर्यम् इत्यर्थः। "उवट्ठिदो" इत्यस्य प्राक् "किन्तु" इति पदमध्याहर्त्तव्यम्; तेन च, अलं सुखितया, किन्तु अयं विभव उपस्थितः इत्यन्वयः कार्य्यः। लाचारागादीनां कान्तसम्भोगस्मारकत्वात् मम च तत्सम्भोगस्य अतिदुर्लभत्वात् उद्दीपकोऽयं विभवः मां सुखयितुं नार्हिष्यति, प्रत्युत केवलं क्लेशाय एव भविष्यतीति निष्कर्षः। किन्तु अयं विभवः उपस्थितः उपस्थापितः इत्यर्थः, देव्या प्रेरित इति यावत्, अन्तर्भूतणिजन्तोऽयं प्रयोगः। कथमिदानीमात्मानं मुञ्चेयम्? वकुलावलिकाहस्तात् केनोपायेन स्वं मुक्तं कुर्य्याम्? यतो देव्या आदेशेन मामियं बला-

वकुला। किं विआरेसि? उस्सुआ क्खु इमस्स तवणीआ-सोअस्स कुसुमोग्गमे देवी। * (र)

राजा। कथम्, अशोकदोहदनिमित्तोऽयमारम्भः। (ल)

विदू। किं क्खु ण आणासि, अकारणादो देवी इमं अंते-उरणेवत्थेण जोजइस्सदि त्ति?। † (व)

---

* किं विचारयसि? उत्सुका खल्वस्य तपनीयाशोकस्य कुसुमोद्गमे देवी इति सं०।

† किं खलु न जानासि, अकारणात् देवी इमामन्तःपुरनेपथ्येन योजयिष्यतीति? इति सं०।

---

दलङ्कर्त्तुमर्हति, सुतरां मम अस्वीकृतावपि नेयं निरस्ता भविष्यतीति भावः। अथवा पक्षान्तरे, गत्यन्तराभावादिदमाभरणं धारयामि चेत् तदा इत्यर्थः। मृत्युमण्डनं मरणकालिकालङ्करणम्, एतेनालङ्करणस्य उद्दीपकतया वियोगव्यथयैव मे मृत्युर्भविष्यतीति व्यज्यते इति भावः।

(र) मालविकां तूष्णीमास्थितां दृष्ट्वा वकुलावलिका पृच्छति, किं विचारयसि? तूष्णीमास्थाय किं विवेचयसि? उत्सुका आग्रहान्विता। "कुसुमोग्गमे" इत्यत्र "मुउलुग्गमे" इति पाठे—मुकुलोद्गमे इति सं०।

(ल) कथमिति प्रश्नार्थकं सम्भावनार्थकं वा अव्ययं, "कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे। प्रश्ने सम्भावनायाञ्च" इति मेदिनी। अयमारम्भः एष उद्‌योगः, अलङ्करणादिषु प्रवृत्तिरित्यर्थः, अयमलङ्करण-व्यापारः किम् अशोकदोहदनिमित्तम्? यद्वा—अयमारम्भः अशोक-दोहदार्थमेवेति सम्भावयामीति निष्कर्षः।

(व) अन्तःपुरनेपथ्येन अन्तःपुराणाम् अन्तःपुरिकाणां कामिनीनां, नेपथ्येन अलङ्कारेण, अन्तःपुरस्थमहिलानां प्रसाधनोपयोगिभूषणेनेत्यर्थः, "नेपथ्यं स्यादलङ्कारे रङ्गभूम्यां नपुंसकम्" इति मेदिनी; एतत् किं त्वं मन्यसे यत्, देवी अकारणादेव इमाम् अन्तःपुरनेपथ्येन योजयिष्यति? इति काकुः, उद्देश्यं विना नैव इमाम् अन्तःपुरनेपथ्येन योजयिष्यतीत्यर्थः। "जोजइस्सदि" इत्यत्र "ण जोजइस्सदि" इति पाठान्तरं साधु सुगमञ्च।

माल। हला! मरिसेहि दाणिं [इति पादमुपहरति]। * (श)

वकुला। अइ! सरीरंसि मे।† (ष) [नाट्येन चरणसत्कारमारभते]।

राजा।—

चरणान्तनिवेशितां प्रियायाः
सरसां पश्य वयस्य! रागलेखाम्।
प्रथमामिव पल्लवप्रसूतिं
हरदग्धस्य मनोभवद्रुमस्य ॥ ११ ॥

* हला! मर्षयेदानीम् इति सं०।

† अयि! शरीरमसि मे इति सं०।

"किं त्ति" इत्यत्र "किं णु क्खु जाणासि तुमं, मह कारणादो इम अन्ते-उरणेवत्थेण जोजइस्सदि त्ति?" इति पाठान्तरं समीचीनं कालोपयोगि च। किं नु खलु जानासि त्वं, मम कारणात् देवी इमामन्तःपुर-नेपथ्येन योजयिष्यति इति? इति सं०।

(श) मर्षय क्षमस्व। इदानीम् अस्मिन् समये, पादप्रसाधनकाले तवोत्सङ्गे मम चरणस्थापनापराधं क्षमस्व इत्यर्थः। "दाणिं" इत्यत्र "दाव णं" (तावदेनम् इति सं) इति पाठान्तरम्। उपहरति समीपं नयति, वकुलावलिकायाः अङ्के स्थापयतीत्यर्थः, प्रसारयतीत्यर्थो वा।

(ष) शरीरमसि मे मम देहस्वरूपाऽसि, त्वमहमभिन्ना एव, अत एव निजकरेण निजचरणप्रसाधनवत् तव चरणप्रसाधनेऽपि कोऽपि न दोषः, सुतरां तव अपराधोऽपि नास्ति, क्षमाप्रार्थनया अलमिति भावः। चरणसत्कारं पादयोः प्रमार्जन-रञ्जन-भूषणविन्यासादिना सौन्दर्य-सम्पादनमित्यर्थः।

मालविकायाः प्रसाधनं दृष्ट्वा राजा तां वर्णयति, चरणान्तेति।— वयस्य! हे सखे! प्रियायाः मालविकायाः, चरणान्ते पदप्रान्ते, निवेशितां विन्यस्तां, सरसाम् आर्द्रां, सद्यो विन्यासात् समुज्ज्वलामिति यावत्, अत एव कामोद्दीपिकामिति भावः, रागलेखाम् अलक्तकस्य रक्तरेखां, हरदग्धस्य शिवस्य तृतीयनेत्राग्निना भस्मीभूतस्य, मनोभवद्रुमस्य

विदू। चलणाणुरूवो तत्तभोदीए अहिआरो उवक्खित्तो।
* (ख)

राजा। सम्यगाह भवान्—

नवकिसलयरागेणार्द्रपादेन बाला
स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन।
अकुसुमितमशोकं दोहदापेक्षया वा
प्रणमितशिरसं वा कान्तमार्द्रापराधम्॥ १२॥

---

* चरणानुरूपस्तत्रभवत्या अधिकारः उपक्षिप्तः इति सं०।

---

मनोभवः काम एव, द्रुमः वृक्षः तस्य कामरूपवृक्षस्य, प्रथमाम् आद्यां, नवीनामिति यावत्, पल्लवप्रसूतिं किशलयोद्गममिव, "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् नवोद्गतं किसलयमिव इत्यर्थः, पश्य अवलोकय। रूपकसङ्कीर्णा वाच्या द्रव्योत्प्रेक्षाऽलङ्कारः। मालभारिणी वृत्तं —"विषमे स-स जा यदा गुरू चेत् स-भ-रा येन तु मालभारिणीयम्" इति लक्षणात्॥ ११॥

(ख) चरणानुरूपः पादयोरुपयुक्तः। अधिकारः नियोग', अशोकस्य दोहदसम्पादनरूपं कार्य्यमित्यर्थ, उपक्षिप्तः प्रदत्त, समर्पित इत्यर्थः, देव्या इति शेषः, सुकुमाराऽऽरक्तचरणाघातेन मनोहराऽऽरक्तकुसुमोत्पादनार्थं नियोग उचित एवेति भावः।

विदूषकवाक्यस्य निगूढार्थं समर्थयितुमाह, नवेति।—बाला कुमारी, मालविकेति शेषः, नवस्य अभिनवोद्भिन्नस्य, किसलयस्य पल्लवस्य, राग इव रागः अरुणिमा यस्य तादृशेन, स्फुरिता स्फूर्त्तिं गता, प्रदीप्ता इति यावत्, नखाना नखराणां, रुक् कान्तिर्यत्र तादृशेन, अनेन पुरतो दृश्यमानेन, आर्द्रपादेन अलक्तकरससिक्तचरणेन, "आर्द्रपादेन" इत्यत्र "अग्रपादेन" इति पाठान्तरं, दोहदापेक्षया कुसुमप्रसवार्थं प्रक्रियाविशेषानुरोधेनेति भावः, अकुसुमितम् अपुष्पितम्, असञ्जातकुसुममित्यर्थः, अशोकं वा अशोकञ्च, तथा आर्द्रापराधं सद्यः कृतापराधम्, अत एव प्रणमितशिरसम् अवनतमूर्द्धानं, प्रणयापराधक्षालनार्थं प्रणयिनीपदप्रान्ते इति भावः,

विदू। पारइस्ससि तत्तभोदीए अवरद्धुं ? । * (ह)
राजा। मूर्ध्ना प्रतिगृहीतं वचः सिद्धिदर्शिनो ब्राह्मणस्य ।(क)

* पारयिष्यसि तत्रभवत्यामपराद्धुम् ? इति सं०।

कान्त वा दयितस्य, वा-शब्दोऽत्र समुच्चयार्थकः, द्वौ एतौ उभौ एव, हन्तुं ताडयितुम्, अर्हति योग्या भवति, ईदृशसुकोमलारक्तचरणः एतत्कार्य्यद्वयस्यैव उपयुक्त इति निष्कर्षः। अत्र नवकिसलयरागेण इति लुप्तोपमा, तथा शिरसः अवनमनं प्रति आर्द्रापराधत्वस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं, किञ्च, प्रस्तुतस्य अशोकस्य अप्रस्तुतस्य कान्तस्य च एकहननक्रियया अन्वयात् दीपकालङ्कारोऽपि, "अप्रस्तुत-प्रस्तुतयोर्दीपकन्तु निगद्यते" इति दर्पणोक्तेः, इत्येतेषामेकाश्रयानुप्रवेशात् सङ्करः। अन्यच, प्रतिकूलोऽपि पादाघातः अशोकस्य पुष्पोद्गमफलकत्वात् कान्तस्य च कान्ताङ्गस्पर्शसुखफलकत्वात् अनुकूलावन्नीति अनुकूलालङ्कारोऽपि ध्वन्यते इति अलङ्कारध्वनिः,"अनुकूल प्रातिकूल्यमनुकूलानुबन्धि चेत्" इति लक्षणात्। तथा हिंसार्थकस्य हनधातोः निरुपपदस्य ताड़नार्थे प्रयोगादवाचकत्वदोषः। मालिनी वृत्तम् ॥ १२ ॥

(ह) तत्रभवत्यां माननीयाया मालविकायाः समीपे, अपराद्धुम् अपराधं कर्त्तुं, पारयिष्यसि ? शक्ष्यसि किम् ? अप्रियाचरणेन तस्यां सापराधो भवितुं नैव शक्ष्यसि त्वमित्यर्थः, तदप्रियाचरणं भवता नैव सम्भाव्यते इति भावः। यद्वा—तत्रभवत्यामपराद्धुं पारयिष्यसि शक्ष्यसि, अचिरमेव भवान् मालविकां प्राप्स्यति, ततश्च तत्समीपे प्रणयापराधमपि कर्त्तुम् अवसरं लप्स्यते इति भावः। "पारइस्ससि तत्तभोदीए अवरद्धुं" इत्यत्र "पहरिस्सदि तत्तभोदी तुमं अवरद्ध" इति पाठान्तरे—प्रहरिष्यति तत्रभवती त्वामपराद्धम् इति सं०।

(क) प्रतिगृहीतं स्वीकृतं, धृतमिति यावत्। सिद्धिदर्शिनः सिद्धिं साफल्यं, भार्य्यारूपेण मालविकायाः प्राप्तिरूपाभीष्टपूर्त्तिमित्यर्थः, द्रष्टुं शंसितुम्, अवश्यमेव मनोरथस्ते सफलीभविष्यतीति भविष्यद्वाणीं कर्त्तुमित्यर्थः शीलं यस्य तादृशस्य ; "सत्याशिषो ब्राह्मणाः" इति स्मरणात् तवाशीर्वादेन अवश्यमेवाहं मालविकां लप्स्ये इति भावः।

[ ततः प्रविशति युक्तमदा इरावती चेटी च ]। (ख)

इरा। हंजे णिउणिए। सुणामि बहुसो, मदो किल इत्थिआ-अणस्स विसेसमण्डणं त्ति, अवि सच्चो अअं लोअवादो ? * (ग)

निपु। पढमं लोअवादो एव्व, संपदं सच्चो संवुत्तो। †(घ)

---

* हञ्जे ! निपुणिके ! शृणोमि बहुशः, मदः किल स्त्रीजनस्य विशेषमण्डनमिति, अपि सत्य एषः लोकवादः ? इति स०।

† प्रथमं लोकवाद एव, साम्प्रतं सत्यः संवृत्तः इति स०।

---

(ख) युक्तमदा युक्तः प्राप्तः, सञ्जात इत्यर्थः, मदः मत्तता यस्या-स्तादृशी, यद्वा—युक्तः उचितः, किञ्चिन्मात्रमिति यावत्, न प्रबल इति भावः, मदः मत्तता यस्यास्तादृशी ईषन्मदाविष्टा, न तु उन्मदा इत्यर्थः, किञ्चित् पीतमद्या इति यावत्। मद्यपानस्य दोषावहत्वेऽपि क्षत्रिय-वैश्ययोः गौड्यादिमद्यपाने दोषाभाव उक्तः वृद्धमनुना—"कामतोऽपि हि राजन्यो वैश्यो वाऽपि समाहितः। मद्यं पीत्वाऽसुरासंज्ञं न किञ्चिद्दोष-मर्हति॥" इति।

(ग) बहुशः बहुवारान्। मदः मत्तता, गौडी-माध्वीत्यादिमद्य-पानजनित. किञ्चिन्मदावेश इति भावः। विशेषमण्डनं स्वर्णादिनिर्मि-ताभरणादपि अन्यविधमुत्कृष्टभूषणम्, अत्र मदशब्देन ईषन्मत्ततारूप-प्रथममदो बोद्धव्यः, तस्यैव मण्डनभूतत्वात्, द्वितीय-तृतीयादिमदस्य प्रलापादिजनकत्वेन बीभत्सत्वात्, तदुक्तम् आयुर्वेदे—"बुद्धिस्मृति-प्रीतिकरः सुखश्च पानान्ननिद्रारतिवर्द्धनश्च। सपाठगीतस्वरवर्द्धनश्च प्रोक्तोऽतिरम्यः प्रथमो मदो हि॥" इत्यादि। लोकवादः लोकानामुक्तिः, जनश्रुतिरिति यावत्। "अअं" इत्यत्र "एसो" (एष) इति पाठान्तरम्।

(घ) प्रथम लोकवाद आसीत् इत्युक्त्वा "न ह्यमूला जनश्रुतिः" इति स्मरणात् अस्य समूलत्वं प्रतिपादितम्, ईदृशः लोकवादः आसीदिति सत्यं, किन्तु केनापि तत् न प्रत्यक्षीकृतं, साम्प्रतन्तु मदेन तवानुपमसौन्दर्य्यवर्द्धनात् स लोकवादः सत्य एव इति प्रतिपन्नो भवतीति निष्कर्षः। "संपदं" इत्यत्र "अज्ज" ( अद्य इति स० ) इति पाठान्तरम्॥

रा। अलं मइ सिणेहेण, कहेहि कुदो दाणिं अवगमि-दव्वं दोलाघरं पढ़मागदो भट्टा ण वेत्ति। * (ङ)

निपु। भट्टिणीए अखंडिदादो पणआदो। † (च)

रा। अलं सेवाए, मज्झत्थदं परिगहिअ भणाहि। ‡ (छ)

निपु। णं वसंतोस्सवुवाअणलोलुवेण अज्जगोदमेण कहिअं। तुवरदु भट्टिणी। § (ज)

---

* अलं मयि स्नेहेन ; कथय कुत इदानीमवगन्तव्यं दोलागृहं प्रथम-मागतो भर्त्ता न वेति ? इति स०।

† भट्टिन्याः अखण्डितात् प्रणयात् इति स०।

‡ अलं सेवया, मध्यस्थतां परिगृह्य भण इति स०।

§ ननु वसन्तोत्सवोपायनलोलुपेनार्य्यगौतमेन कथितम्। त्वरतां भट्टिनी इति स०।

---

(ङ) स्नेहेन प्रणयेन स्नेहाधिक्यात् 'मम मनःपीड़ा न भवतु' इति मम मनोरञ्जकवचनेनेति भावः। कुतः कस्मात्, जनादिति शेषः। प्रथमं मम आगमनात् पूर्वमेवेत्यर्थः। "अलं मइ सिणेहेण" इत्यत्र "संकित्तणसंसिणा अलं सिणेहेण" इति पाठे—सङ्कीर्त्तनशंसिना अलं स्नेहेन इति स०। "अवगमिदव्वं" इत्यत्र "ओगमिदव्वो" इति पाठान्तरम्।

(च) भट्टिन्याः भट्टिनी राज्ञः अकृताभिषेका पत्नी तस्याः, "देवी कृताभिषिकायामितरासु च भट्टिनी" इत्यमरः। अखण्डितात् परिपूर्णात्, प्रणयात् स्नेहात्, दोलागृहं प्रथममागतो भर्त्ता इति शेषः, अत्यर्थ-मनुरक्तायास्तवानुरोधो भर्त्ता अलङ्घनीय एव, अतः स प्रथममेवागत इति मन्ये इति भावः।

(छ) सेवया चित्तानुवर्त्तनेन, भृत्यजनोचितेन प्रभोः सन्तोषजनक-वाक्येनेत्यर्थः। मध्यस्थतां निरपेक्षतां, पक्षपातशून्यतामित्यर्थः।

(ज) वसन्तेति।—वसन्तोत्सवे वसन्तकालाविर्भावजनिते आनन्द-जनकानुष्ठाने, यत् उपायनम् उपहारः, पिष्टक-मोदकादिभोज्यद्रव्यलाभ

इरा। [ अवस्थासदृशं परिक्रम्य ]। हंजे! मदेण गिलाअमाणं अत्ताणं अज्जउत्तस्स दंसणे हिअअं तुवरावेदि, चलणा उण णं ओसलंति। * (झ)

निपु। णं संपत्तम्ह दोलाघरअं। † (ञ)

इरा। णिउणिए! अज्जउत्तो एत्थ ण दीसदि। ‡ (ट)

* हञ्जे! मदेन ग्लायमानमात्मानमार्य्यपुत्रस्य दर्शने हृदयं त्वरयति, चरणौ पुनः न प्रसरतः इति सं०।

† ननु सम्प्राप्ते स्वो दोलागृहकम् इति सं०।

‡ निपुणिके! आर्य्यपुत्त्रः अत्र न दृश्यते इति सं०।

इत्यर्थः, तत्र लौलुपेन लुब्धेन। कथितम् अभिहितं, भर्त्ता प्रथममेव दोलागृहे गमिष्यतीति शेषः। भर्त्ता दोलागृहे यास्यति न वा इति सन्दिह्य मया "वसन्तोत्सवे तुभ्यं प्रभूतखाद्यादिकं दास्यामि" इति लोभे प्रदर्शिते विदूषकेण कथितं यत् भर्त्तैव प्रथमं तत्र गमिष्यतीति निष्कर्षः। त्वरतां, दोलागृहं गन्तुमिति शेषः।

(झ) अवस्थासदृशं मत्तावस्थाया अनुरूपं, वाक्यजड़ता गात्रटलनादिरूपेणेति भावः। हृदयं चेतः, ( कर्त्तृ ) मदेन मद्यपानजनितमत्ततोद्रेकेन, ग्लायमानं खिद्यमानम्, अवशीक्रियमाणमिति यावत्, "गिलाअमाणं" इत्यत्र "किलामिअमाणं" इति पाठे—क्लाम्यमानम् इति सं०। आत्मानं शरीरम्, "आत्मा पुंसि स्वभावे च शरीरब्रह्मणोरपि" इति मेदिनी; त्वरयति त्वरां करोति। पुनः किन्तु। प्रसरतः प्रचलतः, मदेनावशीकृतत्वादिति भावः, अत एव सत्वरं गन्तुमसमर्थाऽस्मि इति निष्कर्षः। "ओसलंति"" इत्यत्र "ओलगंति" "पसरंति" इति च पाठान्तरे। अवलगतः प्रसरतः इति च तयोः सं०। अवलगतः संलग्नौ सन्तौ निश्चेष्टौ जातौ इत्यर्थः।

(ञ) सम्प्राप्ते स्वः समागते भवाव, आवामिति शेषः। "संपत्तम्ह" इत्यत्र "पत्तम्ह" इति पाठे—प्राप्ते स्वः इति सं०।

(ट) अत्र दोलागृहे।

निपु। ण भट्टिणी आलोएदु। परिहासणिमित्तं कहिंपि गूढ़ेण भट्टिणा होदव्व। अम्हेवि इमं पिअंगुलदापरिक्खित्तं असोअसिलापट्टअं पविसामो। * (ठ)

इरा। तहा। † (ड)

निपु। [विलोक्य।] आलोअदु भट्टिणी चूदंकुरं विचिणंतीणं अम्हाणं पिपीलिआहिं दंसिद। ‡ (ढ)

---

* ननु भट्टिनी अवलोकयतु। परिहासनिमित्तं कुत्रापि गूढ़ेन भर्त्रा भवितव्यम्। आवामपीदं प्रियङ्गुलतापरिक्षिप्तमशोकशिलापट्टकं प्रविशावः इति स०।

† तथा इति स०।

‡ आलोकतां भट्टिनी, चूताङ्कुरं विचिन्वत्योरावयोः पिपीलिकाभिः दंष्टम् इति स०।

---

(ठ) "आलोएदु" इत्यत्र "ओलोएदु" इति पाठान्तरम्। गूढ़ेन गुप्तेन, अदृश्यतया अवस्थितेनेत्यर्थ.। "गूढ़ेण" इत्यत्र "अदिट्ठेण" इति पाठे—अदृष्टेन इति स०। प्रियङ्गुलतापरिक्षिप्तं श्यामालतापरिवेष्टितम्। अशोकशिलापट्टकम् अशोकवृक्षमूले स्थापितं प्रस्तरासनम्। प्रविशावः, अशोकशिलापट्टान्तराले इति भावः, यद्वा—प्रियङ्गुलतापरिवेष्टितत्वेन निकुञ्जवत् प्रतीयमानत्वात् तदभ्यन्तरं प्रविशाव इत्यर्थः।

(ड) तथा, अस्तु इति शेष.।

(ढ) "आलोअदु" इत्यत्र "ओलोएदु" इति पाठान्तरम्। चूताङ्कुरम् आम्रमुकुलम्। विचिन्वत्यो. सङ्कलयन्त्योः। दष्टं दशनं कृतं, दन्शधातोर्भावे क्तः। चूताङ्कुरोच्चयनकाले तद्वृक्षस्थैः पिङ्गलवर्णपिपीलिकाविशेषैः उभेता यथा दश्यते तथा राजानमन्विष्यन्त्योरावयो. पिपीलिकातुल्येन क्षुद्रशत्रुणा केनापि अनिष्टमाचरितुमुद्युज्यते इति निपुणिकावाक्यस्य तात्पर्य्यम्। निपुणिकया मालविकामवलोक्य भाविसापत्न्यसम्भावनया एवमुक्तमिति बोद्धव्यम्।

इरा। किं विअ एदं ?। * (थ)

निपु। एसा असोअपादवच्छाआए मालविआए बउला-वलिआ चलणालंकारं णिवत्तेदि। † (त)

इरा। [ शङ्कां रूपयित्वा ]। अभूमी इअं मालविआए !! कहं तुअ तक्केसि ? ‡ (द)

निपु। तक्केमि, दोलापरिब्भंसिदरुजचलणाए देवीए असोअदोहलाधिआरे मालविआ णिउत्तेत्ति ; अण्णहा कहं देवी सअं धारिदं एदं णेउरजुअलं परिअणस्स अब्भणुजाणि-स्सदि ? § (ध)

* किमिवैतत् ? इति सं०।

† एषाऽशोकपादपच्छायायां मालविकाया बकुलावलिका चरणालङ्कारं निर्वर्त्तयति इति सं०।

‡ अभूमिरियं मालविकायाः !! कथमेव तर्कयसि ? इति सं०।

§ तर्कयामि, दोलापरिभ्रष्ट-रुजचरणया देव्या अशोकदोह-दाधिकारे मालविका नियुक्तेति। अन्यथा कथं देवी स्वयं धारितमेतत् नूपुरयुगलं परिजनस्याभ्यनुज्ञास्यति ? इति सं०।

(थ) किमिवैतत् ? एतत् इदं तव वाक्यं, किमिव ? कथमिव ? किमुद्दिश्य त्वया एतदुक्तमित्यर्थः। "किंविअ एदं ?" इत्यत्र "कहं विअ ?" इति पाठे—कथमिव ? इति सं०।

(त) निर्वर्त्तयति सम्पादयति। अस्मिन् समये यतोऽत्र मालविका समागता, प्रसाध्यते च बकुलावलिकया, ततो मन्ये, एतदागमनस्य कोऽपि गूढाभिप्रायोऽस्ति, स च राजविषयक एव, तेन च आवयोरनिष्ट-सम्भावना विद्यते इति भावः।

(द) अभूमिः अस्थानम्, अत्र मालविकायाः आगमनाधिकारो नास्ति, राजपत्नीनामेवात्र आगमनाधिकारादिति भावः। अत्र एतस्मिन् स्थाने,कथं तर्कयसि ? मालविका आगता इति केन हेतुना मन्यसे ? इत्यर्थः।

(ध) तर्कयामि अनुमिनोमि। अशोकदोहदाधिकारे अशोकदोहदस्य

इरा। महदी मे संभावणा। * (ध)

निपु। किं ण अखेसीअदि भट्टा? †

इरा। हंजे! मे चलणा अग्गदो ण पवट्टंति, मदो मं विआरेदि। आसंकिदस्स दाव अंतं गमिस्सं। [मालविका निष्क्रान्तम्]। ठाणे क्खु कादरं मे हिअअं। ‡ (न)

* महती मे सम्भावना इति स०।

† किं नान्विष्यति भर्त्ता? इति स०।

‡ सखि! मम चरणावग्रतो न प्रवर्त्तेते। मदो मां विकारयति। आशङ्कितस्य तावदन्तं गमिष्यामि। स्थाने खलु कातरं मे हृदयम् इति स०।

दोहदनिष्पादनकर्मणि। देव्या धारिण्या। अन्यथा देवीकर्तृका-नियोगे। स्वयम् आत्मना, धारितं परिगृहीतं, देव्या निजाङ्गे व्यवहृत-मित्यर्थः। परिजनस्य परिचारिकायाः मालविकाया इत्यर्थः। अभ्यनु-ज्ञास्यति अनुमोदिष्यते, धारयितुमनुमतिं दास्यतीत्यर्थः, अनुमतिं विना देव्याः निजव्यवहार्य्येण नूपुरयुगलेन परिचारिकायाः आत्मप्रसाधनस्य स्पर्द्धातिशयद्योतकत्वात् इति भावः।

(ध) महती उत्कटकोटिका, प्रबला इति यावत्, मे मम, सम्भावना संशयात्मकं ज्ञानमित्यर्थः, अनुमानमिति यावत्, त्वया यदनुमितम्, अहमपि तत् सम्भवत्वेन मन्ये इति समुदितार्थः। "मे" इत्यत्र "क्खु से" इति पाठे—खलु अस्याः इति स०।

(न) अग्रतः पुरतः, सम्मुखभागे इत्यर्थः। प्रवर्त्तेते प्रचलतः। "अग्गदो" इत्यत्र "अस्सदो" इति पाठे—अन्यतः इति स०। चरणाप्रवर्त्तने स्वयमेव कारणं प्रदर्शयति, मद इति।—विकारयति विह्वलयति, अवशीकरोती-त्यर्थः। ननु तथा चेत् इदानीं प्रत्यागच्छतु? इत्याशङ्कायामाह, आशङ्कित-स्येति।—आशङ्कितस्य सन्दिग्धस्य, मालविकां दृष्ट्वा भर्त्ता अनुरागसूचकं वचनं प्रयुनक्ति न वा इति वितर्कितविषयस्येत्यर्थः, तावत् साकल्येन, निःशेषेणेत्यर्थः, "यावत्तावच्च साकल्ये एवार्थेऽपि समुच्चये" इत्यमरः;

बकुला। [चरणं दर्शयति।] किंवि रोअदि दे राअरेहाविण्णासो ? * (ब)

माल०। अत्तणो चलणंत्ति लज्जेमि णं पसंसिदुं। केण सिप्पसाहणकलाए एव्वं अभिणीदासि ? † (भ)

---

* किमपि रोचते ते रागरेखाविन्यासः ? इति सं०

† आत्मनश्चरणमिति लज्जे एनं प्रशंसितुम्। केन शिल्पसाधनकलायामेवमभिनीताऽसि ? इति सं०

---

अन्तं शेषम्, अवसानमित्यर्थः, निश्चयमिति वा, सत्यासत्यनिर्धारणमिति यावत्. गमिष्यामि करिष्यामीत्यर्थः। यद्वा—अन्तं, ज्ञात्वा इति शेषः, गमिष्यामि इत. अपसरिष्यामि, "अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः। अवयवेऽपि" इति हैम ; संशयोच्छेदमकृत्वा अस्मात् नैव गमिष्यामीति निष्कर्षः। निरूप्य निपुणं दृष्ट्वा। "निरूप्य" इत्यत्र "निर्वर्ण्य" इति पाठान्तरम्। मे हृदयं यत् कातरम् अधीरं, मालविकां दृष्ट्वा शङ्काकुलमिति यावत्, तत् स्थाने युक्तं, प्रसाधितां मालविकामवलोक्य राज्ञः सुग्धताया अवश्यम्भावित्वादिति भावः, "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः।

(ब) दर्शयति, मालविकायै इति शेष। 'चरणं दर्शयति" इत्यत्र "मालविकायै चरणं दर्शयन्ती" इति पाठान्तरम्। अपि प्रश्ने। रागाय चरणरञ्जनाय, रेखाविन्यासः रेखारचना, यद्वा—रागेण रक्तेन अलक्तकद्रवेण. रेखाविन्यासः। "किंवि" इत्यत्र "अवि" इति पाठान्तरम्।

(भ) "अत्तणो" इत्यत्र "हला ! अत्तणो" इत्यधिक. पाठ क्वचित्। एनं चरणम्। केन, जनेनेति शेष। शिल्पसाधनकलायां प्रसाधनशिल्पसम्पादनरूपकलाविद्यायाम, अभिनीताऽसि ? अतिसंस्कृताऽसि ? सुष्ठु शिक्षिताऽसीत्यर्थः, "युक्तोऽतिसंस्कृते मर्षिण्यभिनीत." इत्यमर.। "सिप्पसाहणकलाए एव्वं अभिणीदासि ?" इत्यत्र "पसाहणकलाए अभिविणीदासि ?" इति पाठे—प्रसाधनकलायामभिविनीताऽसि ? इति सं०।

बकुला। एत्थ क्खु भट्टिणो सिस्समिह। * (व)

विदू। तुवरेहि दाणिं गुरुदक्खिणाए। † (भ)

माल। दिट्ठिआ ण गव्विदासि। ‡ (म)

बकुला। उवदेसाणुरूवे चलणे लंभिअ दाणिं गव्विदा भविस्सं। [राग विलोक्यात्मगतम्]। हंत। सिद्धो मे दप्पो। [प्रकाशम्]। सहि! एक्कस्स दे चलणस्स अवसिदो राअणिक्खेवो, केवलं सुहमारुदो लंभइदव्वो; अहवा पवादं ज्जेव्व एदं ठाणं। § (य)

---

* अत्र खलु भर्त्तुः शिष्याऽस्मि इति सं०।

† त्वरयस्वेदानीं गुरुदक्षिणायै इति सं०।

‡ दिष्ट्या न गर्विताऽसि इति सं०।

§ उपदेशानुरूपे चरणे लब्ध्वा इदानीं गर्विता भविष्यामि। हन्त! सिद्धो मे दर्पः। सखि! एकस्य ते चरणस्यावसितो रागनिक्षेपः, केवलं सुखमारुतो लम्भयितव्यः; अथवा प्रवातमेवैतत् स्थानम् इति सं०।

---

(व) अत्र शिल्पकलाशिक्षायाम्। भर्त्तुः महाराजस्य।

(भ) गुरुदक्षिणायै गुरुदक्षिणां दातुं, त्वरयस्व त्वरान्वितां कुरु, बकुलावलिका यदि तव कलाशिष्या, तदा गुरुदक्षिणास्वरूपां मालविकां तुभ्यं दातुं तां त्वरान्वितां कुरु इत्यर्थः। केचित्तु "तुवरेहि" इत्यस्य त्वरस्व इति संस्कृतं पठित्वा बकुलावलिकामुद्दिश्य विदूषकस्योक्तिरियमिति व्याचक्षते, यत्तु-तेन "तुवरेहि" इत्यस्य त्वरयस्व इति संस्कृतमसत् इति उक्तं, तदपि न युक्तिसहं, एकविधस्यैव प्राकृतपाठस्य विभिन्नप्रकारानुवाद-दर्शनात्, यथा दोहद इति संस्कृतशब्दस्य क्वचित् दोहल, क्वचित् दोहद इति प्राकृतो दृश्यते। "दाणिं" इत्यत्र "दाव णं" इति पाठान्तरे—तावदेनाम् इति संस्कृतम्।

(म) दिष्ट्या इति हर्षसूचकमव्ययम्। प्रसाधनशिल्पे एवं निपुणाऽपि त्वं यत् तेन न अहङ्कृताऽसि, तत्तु अतीव आनन्दयति मामिति निष्कर्षः।

(य) उपदेशानुरूपे शिक्षासदृशे, मदुपदेष्टा यादृशः रञ्जनयोगः

राजा। सखे! पश्य पश्य—(२)

आर्द्रालक्तकमस्याश्चरणं मुखमारुतेन शोषयतः।

प्रतिपन्नः प्रथमतरः सम्प्रति सेवावकाशो मे ॥ १३ ॥

---

मत्त्वमुपदिष्टः तदुपयुक्त इत्यर्थः, चरणौ पदयुगलं, लब्ध्वा प्राप्य, इदानीम् अद्य, गर्विता साहङ्कारा, भविष्यामि अस्मीत्यर्थः, वर्त्तमानसामीप्ये भविष्यदुपचारः, यादृशी प्रसाधनकला गुरोर्मया शिक्षिता, तव चरण-प्रसाधनावसरं लब्ध्वा मम सा शिक्षा सफला जाता, अत एवाद्यैव गर्वमनु-भवामि, नेतः पूर्वं कदाचिदिति भावः। "उवदेसा···दाणिं" इत्यत्र "उवदेसाणुरूवा चलणा लंभिअ अज्ज दाव" इति पाठान्तरम्। सिद्धः सफलो जातः, दर्पः गर्वः, अहं रञ्जनकर्मणि निपुणा इति दर्पो मे अद्यैव सार्थको जात इत्यर्थः। "दप्पो" इत्यत्र "इत्थं" इति पाठे—दूत्यम् इति सं०,दूतीकार्य्यमिति तस्यार्थः। रागनिक्षेपः अलक्तकरसविन्यासः, अलक्तकेन रञ्जनमित्यर्थः, अवसितः समाप्तः। मुखमारुतः मुखवायुः, फुत्कार इत्यर्थः, लम्भयितव्यः प्रापयितव्यः, दातव्य इत्यर्थः, आर्द्रताशोषणार्थमिति भावः। प्रवातं प्रकृष्टो वातो वायुर्यत्र तादृशं, वायुनैव शोषं यास्यति, मुखमारुत-दानस्य आवश्यकता नास्तीति भावः।

(२) "पश्य पश्य" इत्यत्र "पश्य" इति सकृदुक्तिः क्वचित्।

किमित्याशंसायामाह, आर्द्रेति।—आर्द्रं स्तिमितम्, अशुष्कमित्यर्थः, अलक्तकं लाक्षारसो यत्र तादृशम्, अस्याः मालविकायाः, चरणं पादं, मुखमारुतेन फुत्काररूपमुखवायुना, शोषयतः शुष्कतां प्रापयतः, शोषयितुमभिलषत इति भावः, "शोषयतः" इत्यत्र "वीजयितुम्" इति पाठान्तरं सुगमार्थकम्; मे मम, सेवावकाशः शुश्रूषाऽवसरः, सम्प्रति इदानीं, प्रथमतरः प्रथम एव, स्वार्थिकस्तरप्; प्रतिपन्नः प्राप्तः, स्वीकर्त्तुमुचित इत्यर्थः, आसीदिति शेषः, या सेवा वकुलावलिकया क्रियते, सा ममैव कर्त्तव्या आसीत्, किन्तु भाग्यदोषात् तदवसरो मया न लब्ध इति भावः। अत्र सेवावकाशो मे प्रतिपन्न इति वचनभङ्ग्या अवश्यमेव मालविका मया परिणेतव्या इति गम्यार्थस्य अभिधीयमान-

विदू। कुदो दे अणुसओ ? एदं भवदा चिरं क्कमेण अणुभविदव्वं । * (ख)

वकुला। सहि। अलत्थं सदपत्तं विअ सोहदि दे चलणं। सव्वहा भट्टिणो अंकपरिवट्टिणी होहि। † (ग)

[ इरावती निपुणिकामवेक्षते ] । (घ)

राजा। ममैयमाशीः। (ङ)

---

* कुतस्तेऽनुशयः ? एतत् भवता चिरं क्रमेणानुभवितव्यम् इति सं० ।

† सखि ! अलक्तं शतपत्रमिव शोभते ते चरणम् । सर्वथा भर्तुरङ्कपरिवर्त्तिनी भव इति सं० ।

---

त्वात् पर्य्यायोक्तालङ्कारः; "पर्य्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते" इति तल्लक्षणात् । आर्य्या जातिः ॥ १२ ॥

(ख) अनुशयः अनुतापः । एतत् सुखमाकृतेन मालविकायाश्चरणासेवनम् । चिरं यावज्जीवमित्यर्थः । अचिरमेव मालविकां लप्स्यते भवानिति भावः ।

(ग) अलक्तं शतपत्रं रक्तवर्णं कमलं, "सहस्रपत्रं कमलं शतपत्रं कुशेशयम्" इत्यमरः । भर्तुः पत्युः, राज्ञो वा, अङ्कपरिवर्त्तिनी क्रोडावस्थायिनी भव, तव लक्षणदर्शनेन एतत् सम्भावयामि यत् त्वमवश्यमेव राजपत्नी राजमाता च भविष्यसीति "पद्मेन भूपतेः पत्नी जनयेत् भूपतिं सुतम्" इति सामुद्रकादिति भावः । विदूषकवाक्यानुसारेण मालविकायै राज्ञः अनुरागं निवेदयितुं वकुलावलिकया वाक्यमिदं प्रयुक्तमिति मन्तव्यम् ।

(घ) भर्तुरङ्कपरिवर्त्तिनी भव इति वकुलावलिकाया वचनमाकर्ण्य "श्रुतं त्वया वकुलावलिकायाः सस्पर्द्धवचनम्" इति ज्ञापनार्थम् इरावत्या निपुणिकावेक्षणमिति मन्तव्यम् ।

(ङ) इयं वकुलावलिकोक्तिः, मम आशीः आशीर्वचनं, मदभीष्टानुकूलत्वादिति भावः ।

माल। हला। मा अविणीअं मंतेहि। * (ङ)

वकुला। मंतिदव्वं ज्जेव्व मए मंतिदं। † (च)

माल। पिआ क्खु अहं तव। ‡ (क)

बकुला। ण केवलं मम। § (ख)

माल। कस्स वा अण्णस्स ? ¶ (ग)

बकुला। गुणेसु अहिणिवेसिणो भट्टिणोवि। ** (घ)

---

* हला ! मा अविनीतं मन्त्रयस्व इति सं०।

† मन्त्रयितव्यमेव मया मन्त्रितम् इति सं०।

‡ प्रिया खल्वहं तव इति सं०।

§ न केवलं मम इति सं०।

¶ कस्य वा अन्यस्य ? इति सं०।

** गुणेष्वभिनिवेशिनो भर्त्तुरपि इति सं०।

---

(ङ) अविनीतं विनयशून्यं, शिष्टविगर्हितमित्यर्थः, अयुक्तमिति भावः, मा मन्त्रयस्व न कथय, ईदृशे वाक्ये केनापि श्रुते अनर्थः सम्भविष्यतीति भावः। "अविणीअं" इत्यत्र "अवअणीअं" इति पाठे— अवचनीयम् इति सं०।

(च) मन्त्रयितव्यमेव अवश्यं कथयितव्यम्; यत् सत्यं तदेव मया कथितम्, अत्र दोषो भवति चेत् भवतु इति भावः। विदूषकवाक्यमनुसृत्यैव वकुलावलिकया एतदपि प्रयुक्तमिति बोद्धव्यम्।

(क) त्वं मयि अत्यर्थं स्नेहशालिनी, तत एव मत्सम्बन्धे एवं कथयसि, वस्तुतस्तु अवस्थावैगुण्यात् परिचारिकारूपेणावस्थिताया मे नृपतेः अङ्कवर्त्तित्वमत्यन्तासम्भवमेव, अत एवेदृशी उक्तिः पुनर्नैव करणीया इति भावः।

(ख) न केवलं मम, त्वं प्रियेति शेषः, अपि तु अन्यस्य कस्यचिदपि त्वं प्रियेति भावः।

(ग) अन्यस्य कस्य वा, प्रियाऽहम् ? इति शेषः।

(घ) गुणेषु कलाविद्यासौन्दर्य्यादिषु, अभिनिवेशिनः आग्रहान्वितस्य,

माल। अलिअं मंतेसि। एद ज्जेव्व मइ णत्थि। * (ङ)

बकुला। सच्चं तुइ णत्थि। भट्टिणो किसेसु सुंदरपाण्डुरेसु दीसइ अंगेसु। † (च)

निपु। पढमं गणिदं बिअ हदासाए उत्तरं। ‡ (छ)

* अलीकं मन्त्रयसि। एतदेव मयि नास्ति इति सं०।

† सत्यं त्वयि नास्ति। भर्तुः कृशेषु सुन्दरपाण्डुरेषु दृश्यतेऽङ्गेषु इति सं०।

‡ प्रथमं गणितमिव हताशाया उत्तरम् इति सं०।

आदरवतः इत्यर्थः, गुणपक्षपातिनः इति यावत्। महाराजोऽपि गुणपक्षपातित्वात् त्वयि एकान्तानुरक्त इति निष्कर्षः।

(ङ) अलीकं मिथ्या। एतदेव गुणवत्त्वमेवेत्यर्थः। मम कोऽपि गुण एव नास्ति, तत् कथं गुणपक्षपातिनो राज्ञः प्रियत्वं मम सम्भवति? इति भावः।

(च) सत्यं त्वयि नास्तीति काकूक्तिः, त्वयि गुणो नास्तीति सत्यं किम्? इत्यर्थः। कृशेषु क्षीणेषु, त्वद्विरहेणेति भावः, सुन्दरं मनोहरञ्च, तत् पाण्डुरञ्च सपीतशुक्लञ्चेति तादृशेषु, त्वद्विरहपीड़ाजन्यनिद्राभावादिना रक्तहीनतया पाण्डुवर्णेषु इत्यर्थः, "पाण्डुरो रक्तपीतस्तु पाण्डुरः शुक्लपीतकः" इति शाब्दिकनरसिंहः; "सुंदरपांडुरेसु" इत्यत्र "वरपांडुरेसु" इति पाठान्तरम्। दृश्यते, तव गुण इति शेषः। निर्गुणा चेत् त्वं कस्माच्चिन्तया राजा स्मरदशामापन्नः कृशः पाण्डुश्च जातः? तव गुणेनैव अनुरक्तो राजा विरहेण ईदृशदशां प्राप्त इति भावः। यद्वा—त्वयि गुणो नास्ति इति यदुक्तं, तत् सत्यं, यतः तल्लक्षणं राज्ञः अङ्गेषु एव दृश्यते इति।

(छ) हताशायाः पिशुनायाः,खलाया, इत्यर्थः, दुष्टाशयाया वकुलावलिकाया इति यावत्, "हताशो निर्दये चाशारहिते पिशुनेऽपि च" इति मेदिनी; उत्तरं प्रतिवचन, "सच्चं तुइ णत्थि" इत्यादि प्रत्युत्तरवाक्यमित्यर्थः; प्रथमम् आद्यं, गणितमिव गणकानां गणनमिव, भविष्यद्वाणीमिवेति यावत्, प्रतीयते इति शेषः, भर्त्तुरङ्गेषु कृशता-पाण्डुतादर्शनेन

बकुला। अणुराओ अणुराएण परिक्खिदव्वोत्ति सुअणवअणं पमाणं करेहि। * (ज)

माल। किं अत्तणो छंदेण मंतेसि ? † (झ)

बकुला। ण हि ण हि। भट्टिणो क्खु एदाणि पणअमिदुआणि अक्खराणि विप्पेरिदाणि। ‡ (ञ)

---

* अनुरागोऽनुरागेण परीक्षितव्य इति सुजनवचनं प्रमाणं कुरु इति सं०।

† किमात्मनः छन्देन मन्त्रयसे ? इति सं०।

‡ न हि न हि। भर्तुः खल्वेतानि प्रणयमृदुकान्यक्षराणि विप्रेरितानि इति सं०।

---

तदुत्तरवाक्यस्य गणकानां सविध्यद्वाणीव याथार्थ्येन प्रमाणितत्वादिति भावः। प्रभातसमये चित्तस्य प्रसन्नतया अवस्थानात् तदा ज्यौतिषिकैः प्रथममेव या गणना क्रियते, सा प्रायशः अभ्रान्ता एव भवति, परन्तु परवर्त्तिगणनाकाले श्रमेण अवसादोपस्थितेः मनसोऽपि अवसन्नत्वात् तदा या गणना क्रियते सा प्रायशः भ्रान्ता एव भवति इति प्रतिपादनार्थं प्रथममिति विशेषणं प्रयुक्तम्। सासूयविस्मयोक्तिरियम्।

(ज) अनुरागः कञ्चित् प्रति कस्यचिदासक्तिः, अनुरागेण तमासक्तं प्रति आसक्तिप्रदर्शनेन, परीक्षितव्यः ज्ञातव्यः, अहं यं प्रति अनुरक्तः सोऽपि अवश्यमेव मां प्रति अनुरागवान् इति नियमस्य प्रायशो दर्शनात् इति भावः। "परिक्खिदव्वो" इत्यत्र "बच्छेट्टव्वो" इति पाठे—प्रष्टव्यः इति सं०। इति एतत्, सुजनवचनं शिष्टवाक्यं, प्रमाणं कुरु प्रमाणत्वेन गृहाण, विश्वसिहि इति यावत्; राजानं प्रति तव आत्मनः अनुरागं स्मृत्वा आत्मानं प्रति राज्ञोऽपि अनुरागः त्वया विश्वसितव्यः, एवञ्च त्वय्येव स अनुरागी, त्वमपि तदनुरागिणी इत्यहं मन्ये इति भावः।

(झ) छन्देन अभिप्रायेण, "छन्दोऽभिप्राय आशयः" इत्यमरः; स्वेच्छया किं यत्तत् भाषसे त्वम्!! नाहं राजनि अनुरक्ता, न वा राजा मां प्रतीति भावः।

मालवि। हला ! देवीं चिंतिअ ण मे हिअअं विस्ससदि।* (ट)

बकुला। मुद्धे ! भमरसबाधो अत्थि त्ति बसंतावदारसंभूदो किं ण णवचूदप्पसवो ओदंसणिज्जो ? † (ठ)

---

* हला ! देवीं चिन्तयित्वा न मे हृदयं विश्वसिति इति सं०।

† मुग्धे ! भ्रमरसम्बाधोऽस्तीति किं न वसन्तावतारसम्भूतः नवचूतप्रसवोऽवतंसनीयः ? इति सं०।

---

(ञ) न हि न हि नैव नैव, आत्मनश्छन्देन मन्त्रयामीति शेषः ; अवधारणे द्विरुक्तिः। एतानि प्रणयमृदुकानि प्रणयेन त्वां प्रत्यनुरागेण, मृदुकानि पेशलानि, सुकुमाराणीत्यर्थः, अक्षराणि वर्णानि, वर्णसमुदायात्मकवचनानीति यावत्, विप्रेरितानि विप्रेण ब्राह्मणेन विदूषकेण, ईरितानि कथितानि, विदूषकमुखेन भर्त्रा एव एतानि वाक्यानि तुभ्यं विज्ञापयितुं कथितानि, ततश्च अस्य सत्यतायां त्वया सन्देहो नैव कर्त्तव्य इति भावः। एतानि इत्यनेन "तव सौन्दर्य्यादिना अहमतीव मुग्धोऽस्मि, त्वमपि मयि अनुकूला भव" इत्येवंरूपाणि कानिचित् वाक्यानि विदूषकगौतममुखेन श्रुतानि मालविकायाः कर्णे श्रावितानि बकुलावलिकया, न तु तानि कविना स्पष्टं निबद्धानि, तथात्वेनैव चमत्काराधिक्यसम्भवादिति बोद्धव्यम्। "विप्पेरिदाणि" इत्यत्र "वत्तंतरिदाणि" इति पाठे—वक्त्रान्तरितानि इति सं०।

(ट) देवीं चिन्तयित्वा देव्या धारिण्या मां प्रति आचरणं स्मृत्वा। न मे हृदयं विश्वसिति अनुरक्तोऽपि राजा मामात्मप्रणयिनीं कर्त्तुं शक्ष्यति इत्यत्र मे विश्वासो न जायते इत्यर्थः। एतेन राजनि आत्मदाने स्वस्या आपत्तिर्नास्ति, प्रत्युत सम्मतिरेवास्तीति सूच्यते।

(ठ) मुग्धे ! मूढे ! सरले ! इत्यर्थः, संसारज्ञानविहीने ! इति यावत्, "मुग्धस्तु सुन्दरे मूढे" इति मेदिनी। भ्रमरसम्बाधः भ्रमरसङ्कटः, चूतप्रसवे भ्रमर उपविष्टः, स आक्रमिष्यति इति प्रतिबन्धकः इत्यर्थः। वसन्तेति।— वसन्तस्य वसन्त-ऋतोः, अवतारेण आविर्भावेण, सम्भूतः समुद्गतः, नवचूतप्रसवः अभिनवतया कोमलाम्रमुकुलः। न अवतंसनीयः ? न कर्णपूरी-

माल। तुमं जाव दुज्जादे गच्छंतस्स सहाइणी होहि।* (ड)

वकुला। विमद्दसुरहो वउलावलिआ क्खु अहं।† (ढ)

---

* त्वं यावत् दुर्जाते गच्छतः सहायिनी भव इति सं०।

† विमर्द्दसुरभिः वकुलावलिका खल्वहम् इति सं०।

---

करणीयः? शेखरीकरणीयः? इति वा, भूषणतया कर्णयोः शिरसि वा न धारणीयः? इत्यर्थः, अपि तु अवश्यमेव अवतंसनीय इत्यर्थः;— "अवतंसो न स्त्रियां स्यात् कर्णपूरे च शेखरे" इति मेदिनी; भ्रमरबाधासत्त्वेऽपि लोका यथा चूतमुकुलमवतंसीकुर्वन्ति, तथा देव्याः प्रतिकूलतासत्त्वेऽपि भर्त्ता त्वामवश्यमेव उपभुञ्जिष्यति, प्रतिबन्धकसत्त्वेऽपि लोकानामभीष्टविषये अदम्यप्रवृत्तिदर्शनादिति भावः। "भमर ·· ओदंसयिज्जो?" इत्यत्र "भमरसंपादो भविस्सदित्ति वसंतावदारसव्वस्सं किं ण चूदप्पसवो ओदंसिदव्वो?" इति पाठे—भ्रमरसम्पातो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूतप्रसवः अवतंसितव्यः? इति सं०।

(ड) दुर्जाते व्यसने, विपदि इत्यर्थः, "दुर्जातं व्यसने क्लीबेऽसम्यग्जातेऽन्यलिङ्गकम्" इति मेदिनी; गच्छतः पततः इत्यर्थः, दुर्जाते गच्छतः विपदापन्नस्येत्यर्थः, सहायिनी साहाय्यकारिणी, भव, ये केचित् जना विपन्ना भवन्ति, त्वं तेषां विपन्मुक्तौ साहाय्य करोषि, अत एव ममापि अस्यां विपदि कर्त्तव्यमुपदिश्य साहाय्यं कुरु इति भावः। "दुज्जादे" इत्यस्य "दुर्यांते" इत्यनुवादे क्वते—दुः दुःखेन यातं गमनं यस्मिन् तादृशे दुर्गमे, दुष्प्राप्ये इत्यर्थः, गच्छतः हस्तं प्रसारयत इत्यर्थः, दुर्लभं वस्तु लब्धुमभिलषत इति यावत्, मल्लक्षणजनस्येति शेषः, सहायिनी भव इत्यर्थः, केचित्तु, दुर्याते दुश्चेष्टिते गच्छतो जनस्य दुर्वृत्तस्येत्यर्थः, सहायिनी सहकारिणी त्वं भव, न मम इत्यर्थः, इति व्याचक्षते। अस्य व्याख्यानस्य अयं भावः,—यो दुर्वृत्तः स तवोपदेशं गृह्णीयात्, नाहं तवोपदेशं गृह्णामीति। "तुमं ··होहि" इत्यत्र "तुमं दाव दुज्जादे अच्चंतं सहाआ होहि" इति पाठे—त्वं तावत् दुर्जाते अत्यन्तं सहाया भव इति सं०।

(ढ) विमर्द्दे विशेषपीड़नेऽपि, विपदादिभिरत्यर्थं पीड़ितायां

राजा। साधु वकुलावलिके। साधु—

भावज्ञानानन्तरं प्रस्तुतेन

प्रत्याख्याने दत्तयुक्तोत्तरेण।

वाक्येनेयं स्थापिता स्वे निदेशे

स्थाने प्राणाः कामिनो दूत्यधीनाः॥ १४॥

सत्यामपीत्यथ., सुरभि. धीरा, धैर्य्यशालिनीत्यर्थः, "सुरभिः शल्लकी सुगन्धि-कान्तयोस्त्रिषु।·विख्याते सचिवे धीरे चैत्रेऽपि च पुमानयम्॥" इति मेदिनी; वकुलावलिका खल्वहं वकुलावलिका-नाम्नी अहं राजान्तःपुरे धीरत्वेन प्रसिद्धा इत्यर्थ., अन्यत्र—विमर्द्देन पेषणेन, सुरभिः अतीव सुगन्धिः, वकुलावलिका वकुलपुष्पराजिः, वकुलमालिकेति यावत्, वकुलमालिका प्रकृत्या सुरभिरपि यथा उपभोगजनितविमर्द्देन मनोहरगन्धं विकीरति, तथा स्वभावधीराऽपि अहं विपत्काले उपस्थिते समधिकधैर्य्यमवलम्ब्य तद्विपत्प्रतीकारार्थमुपायमुद्भावयितुं शक्नोमि, अत एव मदुपदेशं गृहाण, तेन च ते श्रेय एव भविष्यतीति भावः। यद्वा—विगतः मर्द. मर्द्दनं पीड़नं यस्यास्तथाभूता, तथाऽपि सुरभिः सुगन्धि, वकुलावलिका वकुलपुष्पराजिः, वकुलपुष्पस्वरूपिणीत्यर्थः, विगतः मर्दः मर्द्दनं, पुरुषसम्भोगः यस्यास्तथाभूता, वकुलावलिका अहं सम्पूर्णविशुद्धाऽहमिति भाव, वकुलावली यथा मर्द्दनमन्तरेणापि स्वतःसिद्धसुगन्धेन जनमनांसि प्रीणयति, तथा अहमपि प्रार्थनामन्तरेणापि स्वत एव सदुपदेशदानेन कार्य्यसम्पादनेन च विपन्नान् आश्वासयामि, अतः अलमनुनयेन, कार्य्यं ते साधयामि इति तात्पर्य्यम्। केचित्तु, वकुलावल्या यथा मर्द्दनाभावेऽपि स्वतःसिद्धसुगन्धित्वं, तथा अकृतपुरुषसंसर्गाया ममापि विशुद्धितारूपसुगन्धित्व, दुश्चरितस्य कदाऽपि नाहं सहायिनी, त्वच्चरितस्यादुष्टत्वात् न तत्र सहायभवने कोऽपि मे दोषः इत्याशयः इति व्याचक्षते।

वकुलावलिकाया उक्तौ साधुत्वं प्रकटयति, भावेति।—भावस्य अभिप्रायस्य, मालविकाऽपि मय्यनुरागिणीत्येवंरूपायाः मालविकाया मनोवृत्तेरित्यर्थः, "भावोऽभिप्रायवस्तुनोः" इति हैमः, ज्ञानानन्तर बोधात्

दरा। हंजे ! पेक्ख, कारिदं ज्जेव्व वउलावलिआए एदस्सिं पदं मालविआए। * (च)

---

* हञ्जे ! प्रेचस्व, कारितमेव वकुलावलिकयैतस्मिन् पदं मालविकाया इति सं०।

---

परं, प्रस्तुतेन कृतप्रस्तावेन, समारब्धेनेत्यर्थः, भावमविज्ञाय प्रस्तावे उत्थापिते मालविका चेत् कुपिता सती देव्यै सर्वं विज्ञापयेत् तदा अनर्थं स्यात्, सुतरां भावज्ञानानन्तरं प्रस्तावात् सुचतुरा दूतीयमिति व्यज्यते इति भावः, तथा प्रत्याख्याने "हला ! मा अविणीत्रं मंतेहि" इत्यादि वाक्येन मालविकया निराकरणे कृते सति, दत्तं प्रयुक्तं, कृतमित्यर्थः, युक्तं समुचितम्, उत्तरं प्रतिवचनं, "मंतिदव्वमेव मंतिदं" इत्यादिरूपं प्रत्युत्तरमित्यर्थ. येन तादृशेन, वाक्येन वचनेन, इयं मालविका, स्वे स्वकीये, निदेशे आज्ञायां, निजादेशपालने इत्यर्थः, "तुमं जाव" इत्यादिवाक्येन मत्प्रार्थनापूरणाय स्वीकृतिज्ञापनरूपे इति यावत्, स्थापिता स्वीकारिता, स्वमतानुवर्त्तिनीकृता इत्यर्थः, त्वयेति शेषः, अत एव कामिनः अनङ्गपीड़ितस्य, जनस्येति शेषः, "कामिनाम्" इति पाठान्तरं, प्राणाः जीवनानि, दूत्यधीनाः दूतीनामायत्ताः, इति यत् तत् स्थाने युक्तं, कामिनामिच्छायाः पूर्त्तौ जीवनरक्षणम् अपूर्त्तौ च मरणमिति हेतोः तेषां जीवनस्य दूत्यधीनत्वमिति भावः। मम प्राणाः त्वयैव रक्षिताः, अत एव कामिजीवनं दूती एव रक्षितुं नाशयितुं वा शक्नोतीति लोकैर्यदुच्यते तत् युक्तमेवेति निष्कर्षः। अत कामिनः प्राणाः दूत्यधीनाः इति अप्रस्तुतात् सामान्यात् मत्प्राणा वकुलावलिकाधीना इति विशेषस्य प्रस्तुतस्य गम्यमानत्वात् अप्रस्तुतप्रशंसाऽलङ्कारः, तथा चतुर्थपादस्थवाक्यं प्रति पूर्वपादत्रयस्थवाक्यानां हेतुत्वेनोल्लेखात् काव्यलिङ्गञ्च इत्यनयोरङ्गाङ्गिभावेन सङ्करः। शालिनी वृत्त—"मात्तौ गौ चेच्छालिनी वेदलोकैः." इति तल्लक्षणात् ॥ १४ ॥

(च) वकुलावलिकया एव एतस्मिन् स्वनिदेशपालनरूपे कार्य्ये, मालविकायाः पदं व्यवसितम्, उद्यम इत्यर्थः, "पदं व्यवसितित्राण-

निपु। भट्टिणि! णिव्विआरस्स अहिआरस्स उइदोवदेसो * (त)

इरा। ठाणे क्खु संकिदं मे हिअअं। गिह्णीदत्था अणंतरं चिंतइस्सं। † (थ)

बकुला। एसो वि दे संवुत्तपरिकम्मो चलणो, जाव णं वि सणेउरं करेमि। [नाट्येन नूपुरयुगलमामुच्य]। हला! उट्ठेहि, अणुचिट्ठ देवीए असोअस्स विआसइत्तिअ णिओअं। ‡ (द)

[उभे उत्तिष्ठत]।

---

* भट्टिनि! निर्विकारस्याधिकारस्योचितोपदेशः इति सं०।

† स्थाने खलु शङ्कितं मे हृदयम्। गृहीतार्थाऽनन्तरं चिन्तयिष्यामि इति सं०।

‡ एषोऽपि ते संवृत्तपरिकर्मा चरणः, यावत् एनम् अपि सनूपुरं

---

स्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः; कारितं सम्पादितमित्यर्थः, वकुलावलिकयैव प्रचोदिता मालविका राजानं प्रति अनुरागिणी जाता, अत क उपाय अस्माभिरवलम्बनीयः? इति भावः।

(त) निर्विकारस्य विकारशून्यस्य, अबाधस्य इति यावत्, अधिकारस्य नियोगस्य, विदूषकेण महाराजस्य दूतीपदे इति भावः, उचितः योग्यः, उपदेशः यत्प्रयोजनसिद्ध्यर्थं विदूषकेण इयं नियुक्ता, तत्साधनाय यथाकर्त्तव्यं ज्ञातवतीत्यर्थः। "णिव्विआरस्स" इति पाठः पुस्तकान्तरे नास्ति।

(थ) मे हृदयं यत् शङ्कितं तर्कितम्, आशङ्कितमित्यर्थः, तत् स्थाने युक्तं, राजा मालविकायां, मालविका च राजनि अनुरक्ता इति यः संशयः मम चित्ते समुदितः, तत् सत्यमित्यर्थः, "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः। ननु यद्येतत् त्वया सत्यत्वेन परिज्ञातं, तदा एतन्निवारणाय कोऽप्युपायश्चिन्त्यताम्? इत्याशंसायामाह, गृहीतेति।—गृहीतः परिज्ञातः, अर्थः वस्तु, व्यापार इति यावत् यया तथाभूता सम्यक्परिज्ञातव्यापारा सती, अनन्तरम् अतःपरकर्त्तव्यमित्यर्थः, चिन्तयिष्यामि आलोचयिष्यामीत्यर्थः।

(द) एषोऽपि अयमपि, द्वितीयोऽपीत्यर्थः। "एसो वि" इत्यत्र "एसो

इरा। सुदो देवीए णिओओत्ति। भोदु, दाणिम। * (ध)

बकुला। एसो उवारूढरागो उवभोगक्खमो पुरदो दे चिट्ठदि। † (न)

---

करोमि। हला! उत्तिष्ठ, अनुतिष्ठ देव्या अशोकस्य विकासयितकं नियोगम् इति स०।

* श्रुतो देव्या नियोग इति। भवतु, इदानीम् इति स०।

† एष उपारूढरागः उपभोगक्षमः पुरतस्ते तिष्ठति इति स०।

---

दुदीओ वि" इति पाठे—एषो द्वितीयोऽपि इति स०। संवृत्तपरिकर्मा संवृत्त सम्पन्नं, परिकर्म अङ्गसंस्कारः, शोधन रञ्जनादिना शोभाविधान-मित्यर्थः यस्य तादृशः, "परिकर्माङ्गसंस्कारः" इत्यमरः। "संवुत्त" इत्यत्र "णिव्वुत्त" इति पाठे—निर्वृत्त इति स०। एनं संवृत्तपरिकर्माणं द्वितीयं चरणमित्यर्थः, अपिशब्दात् प्राक्कृतपरिकर्माण प्रथम चरणमपीत्यर्थः। "ण वि" इत्यत्र "ण उभे वि" इत्यधिकः पाठः क्वचित् दृश्यते। नाट्येन अभिनयेन। आमुच्य पिनह्य, परिधाप्य इत्यर्थः, "आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्" इत्यमरः। अनुतिष्ठ सम्पादय। विकास-यितकं पुष्पोद्गमकारकम्। नियोगम् आदेशम्। अशोकवृक्षे पादप्रहारं कुरु इति समुदितार्थः।

(ध) श्रुतो देव्या नियोगः देव्या आदेशेनैव इमे अलागते इति श्रुतमित्यर्थः। भवतु यत् भवतु इत्यर्थः, इदानीम् अधुना, अतःपरम् अस्य व्यापारस्य परिणतिः कीदृशी भवेत्, तत् पश्यामीति वाक्यशेषो मन्तव्यः।

(न) उपारूढः सञ्जातः, रागः रक्तिमा, अनुरागश्च यस्य तादृशः। उपभोगे सम्भोगे, प्रसाधनादिषु व्यवहारे इत्यर्थः, क्षमः योग्यः, अन्यत्र— उपभोगे सुरतसम्भोगे,क्षमः समर्थः, एषः परिदृश्यमानः अशोक इति भावः, राजा इति च व्यज्यते। "चिट्ठदि" इत्यत्र "वट्टदि" इति पाठे—वर्त्तते इति स०। अत्र द्व्यर्थवचनविन्यासात् राजरूपप्रधानार्थान्तरापेक्षित्वाच्च

माल। [सहर्षम्]। किं भट्टा ?। * (प)

बकुला। [सस्मितम्]। ण दाव भट्टा, असोअसाहावलंबी गुच्छओ ; ओदंसेहि दाव णं। † (फ)

[मालविका विषाद नाटयति]। (ब)

विदू। किं सुदं भवदा ?। ‡ (भ)

राजा। सखे ! पर्य्याप्तमेतावता कामिनाम्—(म)

* किं भर्त्ता ? इति सं०।

† न तावद्भर्त्ता ; अशोकशाखावलम्बी गुच्छकः ; अवतंसय तावदेनम् इति सं०।

‡ किं श्रुतं भवता ? इति सं०।

इदमन्यतरपताकास्थानं, यदुक्तं दर्पणे—"द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः। प्रधानार्थान्तरापेक्षी पताकास्थानकं परम् ॥" इति।

(प) उपारूढरागः उपभोगक्षम इति शब्दयोः स्वाभीष्टे राजनि अपि सम्भवात्,प्राक् राजविषयकप्रसङ्गाच्च तस्यैव पुरत. अवस्थिति सम्भाव्य मालविकाया अयं प्रश्नः। एतेन राजसमागमार्थं मालविकाया अतीव औत्सुक्यं सूच्यते।

(फ) गुच्छकः स्तवकः, नवपल्लवगुच्छ इत्यर्थः। गुच्छकस्यापि तादृश-त्वात् स एव पुरतस्तिष्ठति इत्यभिसन्धाय मया"एसो" इत्यादि वाक्यमभि-हितं, न भर्त्तारमभिसन्धायेति वकुलावलिकावाक्यस्य तात्पर्य्यम्। "स्यात् गुच्छः स्तवके स्तम्बे हारभेद-कलापयोः" इति मेदिनी। "गुच्छओ" इत्यत्र "पल्लवगुच्छओ" इति पाठान्तरम्। भवतु, तत्र तादृशवाक्यस्य किं तात्पर्य्यम् ? इत्याह, अवतंसयेति।—अवतंसय कर्णभूषणं शिरोभूषणं वा कुरु। एनं गुच्छकम्।

(ब) राजसमागमाशाया भङ्गात् विषाद इति बोद्धव्यम्।

(भ) किं श्रुतं भवता ? मालविका वकुलावलिकयोः प्रश्नोत्तरवाक्य-मिति शेषः। एतेन मालविका त्वदर्थंमतीवौत्सुक्यवतीति सूच्यते।

(म) एतावता एतत्परिमितवाक्येनैवेत्यर्थः, अभीष्टतमाया अपि

अनातुरोत्कण्ठितयोः प्रसिध्यता
समागमेनापि रतिर्न मां प्रति ।
परस्परप्राप्तिनिराशयोर्वरं
शरीरनाशोऽपि समानुरागयोः ॥ १५ ॥

समागमौत्सुक्यसूचकवाक्यश्रवणेनैवेति यावत्, कामिनां मद्विधानामनङ्ग-पीड़ितानां, पर्य्याप्तं प्रकामम्, इष्टमित्यर्थः, अभिलषितमिति यावत्, परिपूर्णमिति शेषः, "कामं प्रकामं पर्य्याप्तं निकामेष्टं यथेप्सितम्" इत्यमरः ।

कथं पर्य्याप्तम्? इत्याह, अनातुरेति ।—अनातुरः स्वस्थः, समागमार्थमनुत्सुकतया कामेनापीड़ित इत्यर्थः, एक इति शेषः, उत्कण्ठितः समागमार्थमुत्सुकः, कामपीड़ित इत्यर्थः, अपर इति शेषः, तयोः, सम्पूर्ण-विपरीतप्रकृतिकयोः नायक-नायिकयोरिति भावः, प्रसिध्यता कथञ्चित् निष्पद्यमानेनापि, समागमेन सम्मेलनेन, मां प्रति मत्पक्षे इत्यर्थः, ममेति यावत्, रतिः रागः, अनुराग इत्यर्थः, न, जायते इति शेषः, तथा-विधयोः समागमो मम न प्रीतिकर इति निष्कर्षः, "रतिः स्त्री स्मरदारेषु रागे सुरत-गुह्ययोः" इति मेदिनी । तर्हि कुत्र तव रतिः? इत्याह,—समानुरागयोः तुल्यानुरक्तयोः, अन्योऽन्यमभिलषतोरिति यावत्, नायक-नायिकयोरिति शेषः, परस्परप्राप्तिनिराशयोः अन्योऽन्यमिलनाशा-विरहितयोः सतोः, विघ्नविशेषेणेति भावः, शरीरनाशोऽपि देहविध्वंसो-ऽपि, मृत्युरपीत्यर्थः, नैराश्यादिति भावः, वरं श्रेष्ठः, मनाक्प्रियो वा, "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवं मनाक् प्रिये" इत्यमरः; परस्परानुरक्तयोः नायिका-नायकयोः समागम एव सुखकरः, न तु तयोरेकस्य समागमे निरुत्सुकस्य अपरस्य समुत्सुकस्य, एतयोः कथञ्चित् सञ्जातमपि मिलनं केवलं दुःखाय एव भवति, तच्च मह्यं न रोचते, परन्तु परस्परं समानु-रागयोः केनचित् कारणेन समागमप्रतिबन्धके सञ्जाते नैराश्यात् यदि तयोः मृत्युरपि घटेत, तदपि मम प्रीतिकरमिति निष्कर्षः । मालविकाऽपि मत्समागमार्थमुत्कण्ठिता, एतत्-श्रवणेनैव ममाभिलषितं सम्पूर्णं जातम्, इदानीं केनचित् प्रतिबन्धकेन तया सह मिलना-

मालविका। [ रचितपल्लवावतंसा सलीलमशोकाय पादं प्रहिणोति ] । (य)

राजा। वयस्य !—

आदाय कर्णकिसलयमस्मादियमत्र चरणमर्पयति ।

उभयो सदृशविनिमयादात्मानं वञ्चितं मन्ये ॥ १६ ॥

---

भावात् यदि मे मृत्युरपि भवेत्, तदपि अहं बहु मन्ये, न पुनरस्याः अनुरागशून्यं समागममपि इति भाव.। अत्र अप्रस्तुतात् सामान्यात् समानुरागयो· शरीरनाशस्य वरत्वात् प्रस्तुतस्य विशेषस्य राज्ञोऽपि तथात्वप्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः, स च अर्थापत्तिसङ्कीर्णः, किञ्च, रत्यभावं प्रति अनातुरत्वोत्कण्ठितत्वयोः हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गञ्च पूर्वाभ्यां सङ्कीर्यते। वंशस्थं वृत्तम् ॥ १५ ॥

( य ) रचितेति।—रचितः कृतः, पल्लवेन अभिनवाशोककिसलयेन, पल्लव एव इति वा, अवतंस. कर्णाभरणं यया सा। सलील ·सविलासम्। प्रहिणोति चालयति, स्थापयतीत्यर्थः।

आदायेति।—इयं मालविका, अस्मात् अशोकवृक्षात्, कर्णकिसलयं कर्णाभरणार्थं नवीनारक्तपल्लवम्, आदाय गृहीत्वा, अत्र अशोकवृक्षे, चरणं पादम्, अर्पयति स्थापयति, उभयो. मालविकाऽशोकवृक्षयोः, कर्णाभरणादान-चरणार्पणयोर्वा, सदृशविनिमयात् तुल्यरूपपरिवर्त्तनात्, आदानार्पणरूपादिति भावः, आत्मानं स्व, वञ्चितं विप्रलब्धम्, अकृतार्थमिति यावत्, मन्ये वितर्कयामि, अशोककिसलयस्य मालविकायाः सालक्तकचरणस्य च द्वयोरेवारक्तवर्णत्वात् सादृश्यम्, एवञ्च मालविकया अशोकस्य किसलयग्रहणं तद्विनिमयेन तस्मै चरणार्पणञ्च सदृशविनिमय, मम तु तच्चरणेन विनिमयार्हस्य द्रव्यविशेषस्याभावात् नास्ति तच्चरणाघातप्राप्तिसम्भावना, अत एव आदान-प्रदानरूपयोरुभयोरेव भावयोरभावात् आत्मानमशोकेन वञ्चितं मन्ये, यतः अशोकः निज-किसलयं दत्त्वा तदनुरूपस्य चरणस्य आघातं प्राप्य आत्मानं कृतार्थं मन्यते, मम तु तदभावादकृतार्थत्वमिति अतीव खेदजनकमेतदिति निष्कर्षः। अत्र समेन समविनिमयात् परिवृत्तिरलङ्कारः, "परिवृत्ति-र्विनिमयः समन्यूनाधिकैर्भवेत्" इति तल्लक्षणात्। आर्या जाति. ॥१६॥

माल०। वामो क्खु एसो असोओ, जो व्वंजअं पमाणीकदुअ कुसुमुग्गमं ण दंसेदि, अवि णाम अम्हाणं संभावणा सफला हवे ?। * (र)

वकुला०। हला! णत्थि दे दोसो, अअं ज्जेव्व णिग्गुणो असोओ जइ कुसुमुग्गमसंथरो हवे, जो दे चलणसक्कारं लंभिदो।† (ल)

राजा।—

अनेन तनुमध्यया मुखरनूपुराराविणा
नवाम्बुरुहकोमलेन चरणेन सम्भावितः।
अशोक! यदि सद्य एव मुकुलैर्न सम्पत्स्यसे
मुधा वहसि दोहदं ललितकामिसाधारणम्॥ १७॥

---

* वामः खलु एष अशोकः, यो व्यञ्जकं प्रमाणीकृत्य कुसुमोद्गमं न दर्शयति। अपि नामावयोः सम्भावना सफला भवेत् ? इति सं०।

† हला! नास्ति ते दोष, अयमेव निर्गुणोऽशोको यदि कुसुमोद्गम-मन्थरो भवेत्, यस्ते चरणसत्कारं लम्भित इति सं०।

---

(र) वाम प्रतिकूल, अस्मान् प्रति विरूप इत्यर्थं। व्यञ्जकं प्रकाशकं, पुष्पविकाशहेतुमिति यावत्। प्रमाणीकृत्य स्वीकृत्य, पुष्पोद्गम-हेतुभूत योषित्पादाघातं लब्ध्वाऽपीत्यर्थः। अपि प्रश्ने, नाम सम्भावना-याम्। सम्भावना उद्यमः।

(ल) निर्गुणः गुणहीनः, कर्त्तव्यविमुख इति यावत्। कुसुमो-द्गमे पुष्पविकाशने, मन्थरः जड़ः, दीर्घसूत्रीत्यर्थः। चरणसत्कारं पादा-घातप्राप्तिरूपं सम्मानं, लम्भितः प्रापितः, देव्या इति शेषः। यस्ते चरण-सत्कारं लम्भितः, स यदि कुसुमोद्गममन्थरो भवेत्, तदा अयमशोक एव निर्गुणः, अत ते दोषो नास्तीति अन्वयः। मूढोऽयं रमणीकुलभूषणायाः तव चरणस्पर्शमाहात्म्यं न जानातीति भावः। "कुसुमुग्गममंथरो" इत्यत्र "कुसुमोब्भेदमंथरो" तथा "लंभिदो" इत्यत्र "लंभिअ" इति पाठान्तरं, कुसुमोद्भेदमन्थरः, लब्धा इति च तयोः सं०।

राजा अशोकम् आक्षिपति, अनेनेति।—हे अशोक! तनुमध्यया

सखे ! वचनावकाशपूर्वकं प्रवेष्टुमिच्छामि । (व)

पीनकटिदेशया, मुष्टिग्राह्यकटिदेशया इत्यर्थः, क्षीणोदर्य्या इति वा, मालविकयेति शेषः, मुखरेण शब्दायमानेन, नूपुरेण मञ्जीरेण, आराविणा शब्दयुक्तेन, नूपुरध्वनिना मधुरं शब्दं कुर्वता इत्यर्थः, नवाम्बुरुहवत् अचिरोद्भिन्नकमलवत्, कोमलेन मृदुना, सुकुमारेणेत्यर्थः, अनेन पुरतो दृश्यमानेन, चरणेन पादेन, सम्भावितः सम्मानितः, त्वमिति शेषः, त्वदङ्गे चरणस्थापनादिति भावः, एतेन चरणाघातस्य न पीड़ाकरत्वं, प्रत्युत कमलाघातवत् सुखकरत्वमिति व्यज्यते, यदि सद्य एव तत्क्षणमेव, पादाघातप्राप्त्यनन्तरमेवेत्यर्थः, मुकुलैः कुड्मलैः, न सम्पत्स्यसे न योक्ष्यसे, मुकुलसमन्वितो न भविष्यसीत्यर्थः, तदा ललितकामिसाधारणं ललितम् ईप्सितं, "ललितं लिषु । ललिते चेप्सितेऽपि स्यात् हावभेदे च न द्वयो." इति मेदिनी; तथा कामिसाधारणं सर्वकामुकजनतुल्यमित्यर्थः, ललितञ्च तत् कामिसाधारणञ्चेति कर्मधारयः; दोहदं पुष्पोद्गमार्थं योषित्पादाघातप्राप्तिरूपमभिलाषविशेषमित्यर्थः, सुधा वृथैव, "सुधा" इत्यत्र "वृथा" इति पाठान्तरं, वहसि धारयसि, कामिनो यथा दयितापादाघातं ललितं वहन्ति, तद्वत् त्वमपि वहसि, किन्तु ते यथा पादाघातं प्राप्यैव कदम्बकेशरवत् पुलकिताः सन्तः सर्वमेव दयिताभिलाषं पूरयन्ति, तद्वत् त्वमपि सद्य एव मुकुलितो भूत्वा मालविकाभिलाषं पूरय इति समुदितार्थः। उचितदोहदलाभात् सद्य एव ते मुकुलप्रसवः उचित इति निष्कर्षः। श्लोकेऽस्मिन् अवमाननाहेतोः पादाघातात् सम्मानरूपविरुद्धकार्य्योल्लेखात् विषमालङ्कारः, स च नवाम्बुरुहकोमलेन तथा ललितकामिसाधारणमिति लुप्तोपमाद्वयेन सङ्कीर्णः। पृथ्वी वृत्तं—"ज-सौ ज स य ला वसुग्रहयतिश्च पृथ्वी गुरुः" इति तल्लक्षणात् ॥ १७ ॥

(व) वचनावकाशपूर्वकम् अनयोः कथोपकथनप्रसङ्गेन कालोचितं किमपि वक्तुमवसरं लब्ध्वा इत्यर्थः। "वचनावकाशपूर्वकम्" इत्यत्र "वचनानुसरणपूर्वकम्" इति पाठान्तरम् ।

विदू। एहि, णं परिहासइस्सं। * (अ)

[उभौ प्रविश्य कुरुतः]।

निपु। भट्टिणि! भट्टिणि। भट्टा एत्थ पविसदि। † (ब)

इरा। एदं मम पढमं चिंतिदं हिअएण। ‡ (स)

विदू। [उपेत्य]। होदि! जुत्तं णाम अत्तभोदि पिअवअस्से असोओ वामपाएण ताडइदुं?। § (ह)

उभे। [सवम्भ्रमम्]। अम्मो! भट्टा!! जेदु जेदु भट्टा। ¶

---

* एहि, एनां परिहासयिष्यामि इति सं०।

† भट्टिनि! भट्टिनि! भर्त्ताऽत्र प्रविशति इति सं०।

‡ एतन्मम प्रथमं चिन्तितं हृदयेन इति सं०।

§ भवति! युक्तं नामात्रभवति प्रियवयस्ये अशोको वामपादेन ताड़यितुम्?। इति सं०।

¶ अहो! भर्त्ता!! जयति जयति भर्त्ता इति सं०।

---

(अ) एनां मालविकां, परिहासयिष्यामि परिहासं कारयिष्यामि, त्वयेति (प्रयोज्यकर्त्ता) शेषः, अलं वचनावकाशप्रतीक्षयेति भावः। "परिहासइस्स" इत्यत्र "परित्तासइस्स" इति पाठे—परित्रासयिष्यामि इति सं०।

(ब) भट्टिनि! भट्टिनि! इति विस्मये द्विरुक्तिः।

(स) एतत् मालविकासमीपे गमनादिकमित्यर्थः। "एदं" इत्यत्र "एव्वं" इति पाठे—एवम् इति सं०।

(ह) उपेत्य गत्वा, मालविकासमीपमिति शेषः। भवति! सति! साधुशीले इत्यर्थः! मान्ये! इति यावत्, इति मालविकायाः सम्बोधनम्। "भवत् युष्मत्-सतोस्त्रिषु" इति मेदिनी। अत्रभवति पूज्ये, प्रियवयस्ये प्रियसखे, राजनि अत्र उपस्थिते इति शेषः, अशोकः तदाख्यः अयं वृक्षः, वामपादेन ताड़यितुं प्रहर्त्तुं, युक्तं नाम? उचितं सम्भवेत्? उचितं किम्? इति प्रश्नः, नैव युक्तमित्यर्थः, "नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च। सम्भाव्य-कुत्सा-प्राकाश्य विकल्पेऽपि च दृश्यते॥"

विदू। वउलावलिए! गिह्णीदत्थाए तुए अत्तभोदी ईरिसं अविणअं करंती कीस ण णिवारिदा?। * (क)

[ मालविका भय रूपयति ]। (ख)

निपु। भट्टिणि! पेक्ख, किं पउत्तं अज्जगोदमेण। † (ग)

इरा। कहं क्खु बम्हबंधू अण्णहा जीविस्सदि?। ‡ (घ)

---

* वकुलावलिके! गृहीतार्थया त्वया अत्रभवती ईदृशमविनयं कुर्वती कस्मात् न निवारिता? इति स०।

† भट्टिनि! प्रेचस्व, किं प्रवृत्तमार्य्यगौतमेन इति स०।

‡ कथं खलु ब्रह्मबन्धुरन्यथा जीविष्यति? इति स०।

---

इति मेदिनी। मम प्रियवयस्य एव त्वया वामपादेन ताड़यितुं योग्यः, तमनादृत्य अशोके ताड़नमनुचितमिति भावः। एतेन एकान्तानुरक्तस्य महाराजस्य अभीष्टं पूरय इति व्यज्यते। "पिअवअस्से ताड़इदुं" इत्यत्र "पिअवअस्से अअं असोओ, णं बामपादेण ताड़िदुं" इति पाठान्तरम्।

(क) गृहीतः विदितः, अर्थः कर्त्तव्याकर्त्तव्यरूपं वस्तु इत्यर्थः यया तथाभूतया, कर्त्तव्याकर्त्तव्यबोधसम्पन्नयेत्यर्थः, गृहीतः स्वीकृतः, अर्थः अभिधेयः, मन्मुखेन राज्ञो वक्तव्यः यया तथाभूतया इति च। ईदृशम् अशोके पादप्रहाररूपम्, अविनयम् औद्धत्यं, शिष्टविगर्हितमाचारमित्यर्थः, वृक्षाणामपि सुखदुःखज्ञानस्य सत्त्वात्, निर्दोषे च पादाघातस्य अनुचितत्वादिति भावः। अथ च राज्ञः अभिप्रायं ज्ञात्वाऽपि कथं राजानं विहाय अशोकताड़नप्रवृत्ता मालविका न निवारिता? एतत्ते नोचितमित्यपि व्यज्यते।

(ख) रूपयति राज्ञः समक्षम् अविनयमाचरितवतीति श्रुत्वा अभिनयेन भीतिभावं प्रदर्शयतीत्यर्थः।

(ग) किं प्रवृत्तं किं समारब्धं, किं कर्त्तुमुद्यतम् इत्यर्थः।

(घ) ब्रह्मबन्धुः ब्राह्मणाधमः, "ब्रह्मबन्धुरधिक्षेपे निर्द्देशे च द्विजन्मनाम्" इति मेदिनी; अन्यथा अन्यप्रकारेण, ईदृशकार्य्यमकृत्वा

बकुला। अज्ज! एसा देवीए णिओअं अणुचिट्ठदि, एदस्सिं अदिक्कमे परवदी इअ। पसीददु भट्टा। * (ङ)

[ इति आत्मना सहैनां प्रणिपातयति ]। (च)

राजा। यद्येवम्, अनपराद्धाऽसि। उत्तिष्ठ भद्रे!। (छ)

[ हस्तेन गृहीत्वोत्थापयति ]।

विदू। जुज्जदि, देवी एत्थ माणइदव्वा। † (ज)

---

* आर्य्य! एषा देव्या नियोगमनुतिष्ठति; एतस्मिन्नतिक्रमे परवतीयम्। प्रसीदतु भर्त्ता इति सं०।

† युज्यते, देव्यत्र मानयितव्या इति सं०।

---

इत्यर्थः, कथं जीविष्यति? केन प्रकारेण जीवितं धारयिष्यति? विविधविधानेन राज्ञः सन्तोषसाधनमेव अस्य जीविकानिर्वाहोपायः, तदकरणे केनोपायेन अयं जीविष्यतीति भावः। "जीविस्सदि" इत्यत्र "होदि" ( भवति इति सं० ) इति पाठान्तरम्।

( ङ ) नियोगम् आदेशम्। एतस्मिन् एतया अनन्तरमेव अनुष्ठिते अस्मिन्, अतिक्रमे मर्य्यादालङ्घने, अशोकतरौ चरणाघातरूपाशिष्टाचरणजापराधविषये इत्यर्थः, परवती पराधीना, देव्यधीना इयं स्वेच्छया नेममविनयमाचरितवती, अतो नापराधिनीति भावः।

( च ) आत्मना शरीरेण, स्वदेहेन इत्यर्थः, "आत्मा पुंसि स्वभावे च शरीर-ब्रह्मणोरपि इति मेदिनी" प्रणिपातयति प्रणामं कारयति, एनां मालविकाम्। स्वयं प्रणमति, मालविकाञ्च प्रणामयतीत्यर्थः।

( छ ) यद्येवं देव्या आदेशेन अशोकवृक्षे पादाघातं कृतवती चेत्। अनपराद्धा निरपराधा। भद्रे! सुचरिते! "अनपराद्धा" इत्यत्र "अनपराधा" इति पाठान्तरम्। मालविकामुद्दिश्य उक्तिरियम्। "गृहीत्वा उत्थापयति" इत्यत्र "गृहीत्वा एनामुत्थापयति" इत्यधिकः पाठः क्वचित्।

(ज) युज्यते युक्तं भवति, तव वचनं सङ्गतं भवतीत्यर्थः। अत्र अशोके पादाघातविषये, देवी मानयितव्या स्वीकर्त्तव्या, देव्या आदेशस्य

राजा । [ विहस्य ] ।—

किसलयमृदोर्विलासिनि कठिने निहितस्य पादपस्कन्धे ।
चरणस्य न ते बाधा सम्प्रति वामोरु ! वामस्य ? ॥ १८ ॥

[ मालविका लज्जां नाटयति ] ।

इरा । अहो ! णवणीदकप्पहिअओ अज्जउत्तो !! । * (भ)

---

* अहो ! नवनीतकल्पहृदय आर्य्यपुत्रः !! इति सं० ।

---

सम्मानमस्माभिः अवश्यमेव रचणीयम्, अतश्चास्मिन् विषये इयं निरपराधा इति भाव. ।

किसलयेति ।—विलासिनि ! हे विलासवति ! "यानस्थानासनादीनां मुखनेत्रादिकर्मणाम् । विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना ॥"इत्यादिलक्षणकसलीलगत्यादिविशेषशालिनि ! इत्यर्थः, वामोरु ! हे सुन्दरोरुद्वयसम्पन्ने ! कठिने कठोरे, पादपस्कन्धे वृक्षप्रकाण्डे, "अस्त्री प्रकाण्डः स्कन्धः स्यात् मूलाच्छाखावधिस्तरोः" इत्यमरः ; निहितस्य स्थापितस्य, प्रहाराय सन्निविष्टस्येत्यर्थः,किसलयमृदो' नवपल्लववत् सुकुमारस्य, ते तव, वामस्य दक्षिणेतरस्य, चरणस्य पादस्य, सम्प्रति इदानीं, बाधा पीड़ा, न ? इति काकुः, विद्यते इति शेषः, कोमलचरणे काऽपि व्यथा इदानीमपि नास्ति इति मन्ये इत्यर्थ । श्लोकेऽस्मिन् किसलयमृदोरिति लुप्तोपमा, तथा किसलयमृदोश्चरणस्य बाधां प्रति कठिनपादपस्कन्धे आघातस्य हेतुत्वात् काव्यलिङ्गञ्च इत्यनयोः सङ्करः ; किञ्च वामोरु वामस्य इत्यत्र वाम वाम इति व्यञ्जनयोः सकृत् साम्यात् छेकानुप्रासश्च इति । आर्य्या जातिः ॥१८॥

(भ) अहो इति विस्मयार्थकम उपहासार्थकं वा अव्ययम् । नवनीतेति ।—नवनीतं नवोद्धृतघृतम्, अदत्ताग्निसन्तापं "ननी" "माखन" इति च नाम्ना ख्यातमित्यर्थः, "घृतमाज्यं हविः सर्पि· नवनीतं नवोद्धृतम्" इत्यमरः ; तत्कल्पं तत्सदृशं, हृदयं यस्य तादृशः, अशोकपादपे पादाघातेन मालविकाया. सुकोमलचरणे वेदनाऽनुमानेन स्वयमपि वेदनामनुभूयकरुणाविगलितचित्तत्वादिति भाव. । ईर्ष्यया सोल्लुण्ठनोक्तिरियम् ।

माल। वउलावलिए! एहि, अणुचिट्ठिदं अत्तणो णिओअं देवीए णिवेदेम्ह। * (ञ)

वकुला। विण्णवेहि भट्टारं, विसज्जेहि त्ति। † (ट)

राजा। भद्रे! यास्यसि; मम तावदुत्पन्नावसरमर्थित्वं श्रूयताम्। (ठ)

वकुला। अवहिदा सुणाहि। आणवेदु भट्टा। ‡ (ड)

राजा —

श्रुतपुष्पमयमपि जनो बध्नाति न तादृशं चिरात् प्रभृति।
स्पर्शास्तेन पूरय दोहदमस्याप्यनन्यरुचेः॥ १९॥

---

* वकुलावलिके! एहि, अनुष्ठितमात्मनो नियोग देव्यै निवेदयावः इति सं०।

† विज्ञापय भर्त्तारं, विसृजेति इति सं०।

‡ अवहिता शृणु। आज्ञापयतु भर्त्ता इति सं०।

---

(ञ) अनुष्ठित निष्पादितम्। नियोगम् आदेशम्, अशोकवृक्षस्य दोहदप्रदानरूपमित्यर्थः।

(ट) विज्ञापय निवेदय। विसृज त्यज, मामिति शेषः, मां गन्तुमनुमतिं ददातु इति राजानं ब्रूहि इति निष्कर्षः, प्रभोरनुमतिं विना गमनस्य अयुक्तत्वादिति भावः।

(ठ) उत्पन्नेति।—उत्पन्नः उपस्थित इत्यर्थः, अवसरः अवकाशः यस्य तादृशम्, अर्थित्वं याचकत्वं, प्रार्थनेत्यर्थः, एतावन्तं कालमीदृशावकाशाप्राप्त्या मम प्रार्थनां विज्ञापयितुं न समर्थो जातः, अद्य तु तमवकाश लब्धवान्, अतः शृणु इति निष्कर्षः।

(ड) अवहिता अप्रमत्ता, मन.संयोगपूर्वकमित्यर्थः। "शृणु" इति मालविकासुक्ता "आज्ञापय भर्त्ता" इति राजान प्रति उक्तमिति बोद्धव्यम्।

राजा निजप्रार्थनां विज्ञापयति, श्रुतपुष्पमिति।—अयं मल्लक्षणः जनोऽपि, न केवलमशोकः, अहमपीत्यपिशब्दार्थः, चिरात् प्रभृति बहुकालं.यावत्, तव प्रथमदर्शनादारभ्येत्यर्थः, श्रियते निगद्यते मनो-

राजा। [सहर्षोत्सुक्य]। पूरेहि पूरेहि। असोओ कुसुमं ण दंसेदि, अअं क्खु उण उत्तंभिदो ज्जेव्व। * (ढ)

* पूरय पूरय। अशोकः कुसुमं न दर्शयति, अयं खलु पुनरुत्तम्भित एव इति स०।

इनेनेति हृतं धैर्य्यमित्यर्थः, तदेव पुष्पं कुसुमं धैर्य्यरूपकुसुमं, तादृशं पूर्ववत्, न बध्नाति आवद्धुं धारयितुं वा न शक्नोति, अद्य पूर्ववत् धैर्य्यं धारयितुं न शक्नोऽस्मीत्यर्थः, यद्वा—हृतं गृहीतं, सञ्जातमिति यावत्, पुष्पं विकाशः, तव स्पर्शाभिलाषप्रकाश इति यावत् येन यद्ध वः तादृशं, चित्तमिति शेषः, "पुष्पं विकाशकुसुमस्त्रीरजःसु नपुंसकम्" इति मेदिनी; यद्वा—हृतं पुष्पं तव पुष्पकोमलस्पर्शसुखाभिलाषः येन यस्य वा तादृशं, चित्तमिति शेषः, "हृतपुष्पम्" इत्यत्र "हृतिपुष्पम्" इति पाठान्तर सुगमं समीचीनञ्च; तादृशं न बध्नाति प्रतिरोद्धुं न शक्नोति, अत एव स्पर्शामृतेन पीयूषवत् आनन्ददायकेन वा कोमलेन वा सञ्जीवनेन वा तव स्पर्शेन, अनन्यरुचेः नास्ति अन्यस्यां स्त्रियां रुचिः अभिलाषः यस्य तादृशस्य, त्वदेकासक्तचित्तस्येत्यर्थः, अस्य मल्लक्षणजनस्य, ममेत्यर्थः, दोहदम् अभिलाषं, "दोहदो गर्भलक्षणे अभिलाषे तथा गर्भे" इति हेमः; पूरय सफलय इत्यर्थः; अशोकस्य पुष्पोद्गमार्थं तव चरणार्पणरूपदोहदप्रदानमिव ममापि धैर्य्यकुसुमसञ्जननार्थं तव अङ्गस्पर्शाभिलाषरूपं दोहदं देहीति समुदितार्थः। अत्र हृते पुष्पत्वारोपः स्पर्शे च अमृतत्वारोपः शाब्दः, नृपप्रतिरूपजने अशोकवृक्षत्वारोपश्च आर्थं इति एकदेशविवर्त्तिरूपकं, तथा च दर्पणकार,—"यत्र कस्यचिदार्थत्वमेकदेशविवर्त्ति तत्" इति; किञ्च, उत्तरार्द्धं प्रति पूर्वार्द्धवाक्यस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्च इत्यनयोरङ्गाङ्गिभावेनावस्थानात् सङ्करः; तेन च इदानीमेव तवाङ्गस्पर्शनाय अनुमतिं दत्त्वा मम धैर्य्यसम्पादनं कुरु इति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः॥ आर्य्या जाति ॥ १८॥

(ढ) उपसृत्य मालविकासमीपं गत्वा। पूरय पूरय सफलय

[ सर्वे इरावतीं दृष्ट्वा सम्भ्रान्ताः ]। (थ)

राजा। [ अपवार्य ]। वयस्य ! का प्रतिपत्तिरत्र ?। (त)

विदू। किं अस्स, जंघावलं ज्जेव्व। * (थ)

इरा। साहु वउलावलिए! साहु तुए उवक्कंतं, [दाणिं करेहि सफलप्पत्थणं अज्जउत्तं। † (द)

* किमन्यत्, जङ्घाबलमेव इति स०।

† साधु वकुलावलिके! साधु त्वया उपक्रान्तम्, इदानीं कुरु सफलप्रार्थनमार्य्यपुत्रम् इति स०।

सफलय, राज्ञो दोहदमिति शेषः। पूरय इति कोपि विवक्तिः। दर्शयति प्रकाशयति इत्यर्थः। अयं राजा। उत्तम्भित एव उन्मुख एवेत्यर्थः, फलदानायेति शेषः। "अअं क्खु उआ उत्तंभिदो ज्जेव्व" इत्यत्र "अअं उण पुप्फदि फलइ ज्जेव्व" "अअं क्खु उण ण पुप्फइ फलइ ज्जेव्व" इति पाठान्तरद्वयम्, अयं पुनः पुष्पति फलत्येव, तथा, अयं खलु पुनः न पुष्पति, फलत्येव इति च तयोः स०। न पुष्पति न पुष्पं विकाशयति, किन्तु फलत्येव फलं ददात्येव, दोहदलाभात् अशोकः पुष्पमात्रं विकाशयति, राजा तु दोहदलाभात् पुष्पविकाशं विनाऽपि सद्य एव फलं ददाति, अतः राज्ञः दोहदमचिरमेव पूरय पूरय इति सपत्नीसुलभद्वेषात् साक्रोश-सोल्लुण्ठनोक्तिरिति।

(थ) सर्वे राजादयः वकुलावलिकापर्य्यन्ताः तत्रोपस्थिताः सर्वे जनाः। सम्भ्रान्ताः प्राप्तसाध्वसाः, भीता इत्यर्थः, "सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि" इति मेदिनी।

(त) का प्रतिपत्तिः? का युक्तिः? किं कर्त्तुमुचितम्? इत्यर्थः। यद्वा—का प्रतिपत्तिः? कः प्रबोधः? कया वाचा इरावतीं प्रबोधयामि? इत्यर्थः। "प्रतिपत्तिः प्रबोधे च पदप्राप्तौ च योषिति" इति मेदिनी।

(थ) जङ्घाबलमेव, अत्र प्रतिपत्तिरिति शेषः, जङ्घयोः चरणयोरिति यावत्, बलं सामर्थ्यं, जङ्घाबलमाश्रित्य अस्मात् पलायनमेव अत्र प्रतिपत्तिः, अन्यत् किमपि नास्तीत्यर्थः। क्वचित् "जङ्घावलं ज्जेव्व सरणं" इति पाठे—जङ्घाबलमेव शरणम् इति स०।

उभे। पसीददु भट्टिणी। काओ वअं भट्टिणो पणअपरिग्गहस्स। * (ध) [ इति निष्क्रान्ते ]।

इरा। अविस्ससणीआ पुरिसा, अत्तणो वंचणवअणं पमाणीकरिअ अहिक्खित्ताए पिअहरिणीए हिअअसल्लं किदं। एव्वं ण विण्णादं मए, वाहजणगीदिगिहीदचित्ताए अविसंकिदाए हरिणीए विअ विणासोत्ति। † (न)

---

* प्रसीदतु भट्टिनी। के आवां भर्त्तुः प्रणयपरिग्रहस्य इति स०।

† अविश्वसनीयाः पुरुषाः, आत्मनो वञ्चनवचनं प्रमाणीकृत्याधिक्षिप्तायाः प्रियहरिण्याः हृदयशल्यं कृतम्। एवं न विज्ञातं मया, व्याधजनगीतिगृहीतचित्ताया अविशङ्किताया हरिण्या इव विनाश इति इति स०।

---

(द) साधु शोभनम्। उपक्रान्तम् आरब्धं, लोकुक्तनीतिरियम्, अतीव निन्दनीयं कार्य्यं त्वया प्रारब्धमित्यर्थः। सफलप्रार्थनं सफला फलवती, मालविकया सह सम्मेलनसङ्घटनादिति भावः, प्रार्थना याञ्चा यस्य तथोक्तम्। "सफलमत्थणं" इत्यत्र "सफलब्भत्थणं" इति पाठे— सफलाभ्यर्थनम् इति स०।

(ध) भर्त्तुः स्वामिनः, राज्ञ इत्यर्थः, प्रणयपरिग्रहस्य प्रेमभाजनपरिजनस्य, प्रणयपात्रीभवनस्येत्यर्थः, यद्वा—प्रणयस्य याञ्चायाः, परिग्रहस्य स्वीकारस्य, भर्त्तुः प्रार्थनापूरणाय अङ्गीकारकरणस्येत्यर्थः, "प्रणयः प्रश्रये प्रेम्णि याच्ञा-विश्रम्भयोरपि" इति "परिग्रहः परिजने पत्न्यां स्वीकार-मूलयोः" इत्युभयत्रापि मेदिनी; आवां के? केऽपि न इत्यर्थः, भर्त्तुः प्रणयलाभे तत्प्रार्थनापूरणे वा आवयोः योग्यतैव नास्ति, अधिकारोऽपि नास्तीति निष्कर्षः।

(न) अविश्वसनीयाः विश्वासायोग्याः। आत्मनः स्वस्य, पुरुषस्येत्यर्थः, वञ्चनवचनं प्रतारणाकरं वाक्यं, मिथ्यावाक्यमिति यावत्, प्रमाणीकृत्य प्रमाणत्वेन उपस्थाप्य, सयत्नेन विश्वासमुत्पाद्य इत्यर्थः, अधिक्षिप्तायाः र्गर्हितायाः, प्रेरितायाः इत्यर्थः, विहारार्थमुपवने इति भावः, यद्वा—

विदू। [जनान्तिकम्]। भो! पडिवज्जेहि किंपि उत्तरं। किं ण भणइ "उदकांदमूले विवन्हिए विमहिदेण कुंभीलेण संधिच्छेदो सिक्खिदव्वो"त्ति वत्तव्वं होइ। * (प)

* भोः! प्रतिपद्यस्व किमप्युत्तरम्। किं न भणति "उदकान्तमूले विपथिके विमथितेन कुम्भीलेन सन्धिच्छेदः शिक्षितव्य."इति वक्तव्यं भवति इति स०।

अभिचिप्तायाः भर्त्सितायाः, अवज्ञाताया इत्यर्थः, "अभिचिप्तः प्रणिहिते कुत्सिते भर्त्सिते त्रिषु" इति मेदिनी; प्रियगर्हिण्याः हृदयशल्यं कृतं हृदये शल्यमिव निखातं, शल्याख्यास्त्रविशेषेण हृन्मर्मव्यधनमिव ममापि हृदयं स्त्र्यन्तरासक्तिरूपशल्येन विद्धमित्यर्थः, भर्तुः परकीयासक्तेः स्त्रीणां मर्माघातवेदनातोऽपि दुःसहत्वादिति भावः। एवं प्रतारणापूर्वकमानीय हृदये शल्यवेधनमिव विश्वासघातकतारूपं प्रत्यक्षमेव दृश्यमानं दुष्टाचरणमित्यर्थः, मया न विज्ञातं पूर्वं न ज्ञातुं शक्यमित्यर्थः, व्याधजनगीतिगृहीतचित्तायाः व्याधजनस्य लुब्धकस्य, गीत्या सङ्गीतेन, गृहीतम् आकृष्टं, चित्तं यस्यास्तथाभूतायाः, अत एव अविशङ्कितायाः भीतिशून्यायाः, कृतविश्वासाया इति यावत्, हरिण्या इव विनाशः मरणं, मृत्युयातनातोऽपि दुःसहं सापत्न्यसम्भावनमिति यावत्, गृहिण्या ममेति शेषः, अत एव पुरुषा अविश्वसनीया इति योजनीयं, व्याधो यथा सङ्गीतरवेण मृगान् आकृष्य गीतश्रवणे एकान्तासक्तान् कृतविश्वासान् तान् अतर्कितरूपेण विनाशयति, तथा पुरुषोऽपि त्वं "प्रिये! अहं प्रमदवनं यामि, त्वमपि तत्रागच्छ, तत्रावां यथासुखं क्रीडिष्याव:" इत्यापातमधुरेण वाक्येन विश्वस्तां मां वञ्चयित्वा अत्रानीय भाविसपत्नीप्रदर्शनरूपेण शल्येन मरणयातनातोऽपि दुःसहवेदनां दास्यसि, एतत्तु अहं प्राक् न ज्ञातवतीति निष्कर्षः। "वाहजणगीदिगिहीदचित्ताए" इत्यत्र "वाहजणगिहीदचित्ताए" इति पाठान्तरम्; तथा "अहिक्खित्ताए" इत्यारभ्य "विणासोत्ति" इत्यन्तपाठस्थले "अक्खित्ताए वाहजणगीदगहीदचित्ताए हरिणीए विअ एद ण विणाद" इति मात्रपाठः क्वचित् दृश्यते, तत्र "अक्खित्ताए"इत्यस्य आक्षिप्ताया इति संस्कृतं, समानमन्यत्।

राजा। सुन्दरि। न मे मालविकया कश्चिदर्थः। मया त्वं चिरयसीति यथाकथञ्चिदात्मा विनोदितः। (फ)

(प) किमपि यत् किञ्चित्, सङ्गतमसङ्गतं वा इत्यर्थः। प्रतिपद्यस्व देहि, "प्रतिपादनन्तु दाने च प्रतिपत्तौ प्रबोधने" इति मेदिनी; यद्वा— प्रतिपद्यस्व अङ्गीकुरु, विज्ञापय इति वा, देहि इत्यर्थः, "प्रतिपन्नोऽन्य-लिङ्गः स्यात् विज्ञातेऽङ्गीकृतेऽपि च" इति मेदिनी। विपथिके पथिक-वर्जिते, अत्यन्तनिर्जने इति यावत्, उदकान्तमूले जलप्रान्तदेशे, जला-शयप्रान्ते इत्यर्थः, तटाधोवर्त्तिजलमध्ये इति यावत्, आत्मगोपनार्थमव-स्थितेनेति भावः, गृहस्थेन रक्षिपुरुषैर्वा अनुसृताश्चौराः निर्जनजलाशय-समीपमागत्य जले अवतार्य्य च मस्तकोपरि पात्रान्तरं परित्यक्तस्थालि-कादिकं निवेश्य आत्मानं सङ्गोप्य अवतिष्ठन्ते इति लोके प्रसिद्धम्; विमर्थितेन केनचित् प्रकारेण तस्य तत्रावस्थितिं विज्ञाय गृहस्थेन रक्षिभिर्वा धृत्वा प्रहृतेन इत्यर्थः, कुम्भीलेन चौरेण, कस्यचित् गृहे सन्धिं छेत्तुं प्रवृत्तेन गृहस्थस्य ताड़नया पलाय्य उदकान्तमूले समागतेन चेति भावः, "कुम्भीलः ग्राहमीने च चौर-श्लोकार्थचौरयोः" इति मेदिनी; सन्धिच्छेदः सुरङ्गाखननं, शिक्षितव्यः अभ्यसनीयः, इति वक्तव्यं वाच्यं, भवति, न मया अपहर्त्तुं सन्धिच्छेदः कृतः, किन्तु सन्धिच्छेदमभ्यसितुमिति वदतीत्यर्थः, किं न भणति? एतत् वाक्यं कथं न वदति? एवमेव भणतु इत्यर्थः। नाहं मालविकायाम् अनुरक्तः अत्रागतोऽस्मि, किन्तु तवागमन-विलम्बात् समययापनार्थं, त्वां किं किमनुरागव्यञ्जकं वचनं वक्ष्यामि तदभ्यासार्थञ्च एतस्यां किञ्चिदनुरागं प्रदर्शितवानिति विदूषकपरि-हासोक्तेस्तात्पर्य्यम्। "भोः! .. होइ" इत्यत्र "पड़िज्जोएहि दाणिं किंपि। कम्मग्गहीदेण वि कुंभीलएण "संधिच्छेदे सिक्खिदम्हि" त्ति वत्तव्वं होदि" इति पाठे—प्रतियोजय इदानीं किमपि। कर्म्मगृहीतेनापि कुम्भीलकेन "सन्धिच्छेदे शिक्षितोऽस्मि" इति वक्तव्यं भवति इति स०।

(फ) अर्थः प्रयोजनम्। चिरयसि विलम्बं करोषि। यथाकथञ्चित् येन केनापि प्रकारेण। आत्मा मनः, "आत्मा पुंसि स्वभावे च प्रयत्न-मनसोरपि" इति मेदिनी। विनोदितः सन्तोषितः, तव आगमन-

इरा। अविस्ससणीओसि। ण मए बिण्णादं ईरिसं विणोद-वुत्तंतं अज्जउत्तेण उबलद्धं त्ति। अण्णहा दुक्खव्वावारिणी एव्वं ण करेमि। * (ब)

विदू। मा दाव तत्तभोदो दक्खिणस्स उवरोहं करेहि, समीवट्ठिदेण देवीए परिचारि-इत्थिआजणेण संकहावि जइ वारी-अदि, एत्थ तुमं ज्जेब्ब पमाणं। † (भ)

---

* अविश्वसनीयोऽसि। न मया विज्ञातमीदृशो विनोदवृत्तान्तः आर्य्यपुत्रेणोपलब्धः इति। अन्यथा दुःखव्यापारिण्येवं न करोमि इति सं०।

† मा तावत्तत्रभवतो दाक्षिण्यस्योपरोधं कुरु, समीपस्थेन देव्याः परिचारि-स्त्रीजनेन सङ्कथाऽपि यदि वार्य्यते, अत्र त्वमेव प्रमाणम् इति सं०।

---

वितर्कजनितोत्कण्ठानिवारणार्थमेव मया एवं कृतं, न तु मालविकाया-मनुरागात् इति निष्कर्षः।

(ब) अविस्ससणीओसि" इत्यत्र "विस्ससणीओसि" इति पाठा-न्तरम्। ईदृशः मालविकारूपः, विनोदवृत्तान्तः सन्तोषप्रदप्रक्रिया, उत्कण्ठादूरीकरणोपाय इति यावत्, "वृत्तान्तः प्रक्रियायां स्यात् कार्त्स्न्य-वार्त्ताप्रभेदयो" इति मेदिनी; उपलब्धः प्राप्तः। "विणोदवुत्तंत" इत्यत्र "विणोदवत्थुअं" इति पाठे—विनोदवस्तुकम् इति सं०। अन्यथा विज्ञातश्चेत् तदा। दुःखव्यापारिणी दुःखः दुःखप्रदः, व्यापारः कार्य्यः अस्त्यस्याः इति दुःखव्यापारिणी अत्रागमनरूपदुःखजनककार्य्यकारिणी, एवम् अत्रागमनं, न करोमि, अत्रागमनस्य केवलं दुःखपर्य्यवसानत्वादिति भावः। यद्वा—दुःखव्यापारिणी आर्य्यपुत्रस्य दुःखदायककार्य्यकारिणी अहम् एवं तव आत्मविनोदने ईदृशं विघ्नोत्पादनं न करोमि नाकार्ष-मित्यर्थः, भूतसामीप्ये वर्त्तमानप्रयोगः। "अण्णहा दुक्खव्वावारिणी एव्वं ण करेमि" इत्यत्र "अण्णहा दुक्खभाइणीए एव्व ण करीअदि" इति पाठे—अन्यथा दुःखभागिन्या एवं न क्रियते इति सं०।

इरा। णं संकहा णाम होदु, किंत्ति अत्ताणं आआसइस्सं।
(म) * [ इति रुष्टा प्रस्थिता ] ।

* ननु सङ्कथा नाम भवतु, किमित्यात्मानमायासयिष्यामि इति सं० ।

(भ) तत्रभवतः माननीयस्य राज्ञः, दाक्षिण्यस्य दक्षिणनायकत्वस्य, सर्वासु भार्य्यासु समदर्शित्वरूपस्य इत्यर्थः, "आसु त्वनेकमहिलासु समरागो दक्षिणः कथितः" इति दर्पणोक्तलक्षणात् । उपरोधं विघ्नं, मा . कुरु न उत्पादय । समीपदृष्टेन निजसन्निधाने अवलोकितेन, सहसा समीपे प्रत्यक्षीकृतेन इत्यर्थः, देव्याः धारिण्याः,परिचारिस्त्रीजनेन परिजनभूतया मालविकया, सङ्कथा संलापः, अन्योऽन्यालापः इत्यर्थः, "अन्योऽन्योक्तिः संलापसङ्कथे" इति हेमचन्द्रः ; अपि-शब्देन हास्यपरिहासादिकं दूरे अस्तु, निर्दोषमालापनमपीति व्यज्यते, वार्य्यते निवार्य्यते, निषिध्यते इत्यर्थः । "उवरोहं वारीअदि" इत्यत्र "उवरोहं भणिदुं, समावत्तिदिट्ठेण देवीए परिअणेण संकहा अवराहेण संभावीअदु" इति पाठान्तरे—उपरोधं भणितुं,समापत्तिदृष्टेन देव्याः परिजनेन सङ्कथा अपराधेन सम्भाव्यते इति सं० । अत्र अस्मिन् वारणविषये, त्वमेव प्रमाणं प्रमात्री, प्रमाणकर्त्री इत्यर्थः, कर्त्तव्याकर्त्तव्यनिर्णायिका इति यावत, "प्रमाणं हेतुमर्य्यादाशास्त्रेयत्ताप्रमातृषु" इत्यमरः ; देव्याः काचित् परिचारिका यदि कदाचित् दैवयोगात् समीपे दृष्टा भवति, तदा तया सह देवीविषयिणी काचित् सङ्कथा दोषावहा भवितुमर्हति न वा, अत्राहं त्वामेव विचारिकां मत्वा पृच्छामि, त्वमेव तथ्यं वद इति भावः । यद्वा—यदि कदाचित् तव कयाचित् परिचारिकया समीपदृष्टया सह राजा त्वद्विषयिणीं काञ्चित् सङ्कथां करोति, देवी च तत् ज्ञात्वा रुष्टा तत्र यदि प्रतिबन्धमाचरेत् तदा तव यथा मनोभावो भवितुमर्हति, एवं देव्याः परिचारिकया सह तद्विषयिण्यां सङ्कथायां त्वया विघ्नोत्पादने कृते देव्या अपि कीदृशो मनोभावो भवितुमर्हति तत् स्वयमेव विवेचय इति भावः । मालविकया सह राज्ञः अस्मिन् आलापे कोऽपि सन्देहावसरो नास्ति, अतस्त्वया न निवारणीय इति तात्पर्य्यम् ।

(म) -ननु इति आमन्त्रणे, नाम इति कोपे, कुत्सायां वा, "नाम

राजा। [अनुसरन्]। प्रसीदतु भवती। (य)

[इरावती रसनासन्दानितचरणा प्रस्खलेव]। (र)

राजा। सुन्दरि! न शोभते प्रणयिजने निरपेक्षता। (ल)

इरा। सठ! अविस्ससणीओसि। * (व)

राजा।—

शठ इति मयि तावदस्तु ते
परिचयवत्यवधीरणा प्रिये!।
चरणपतितया न चण्डि! तां
विसृजसि मेखलयाऽपि याचिता॥ २०॥

* शठ! अविश्वसनीयोऽसि इति स०।

---

कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च। सम्भाव्यकुत्साप्राकाम्यविकल्पेऽपि च दृश्यते॥" इति मेदिनी। किमिति कथम्। आवासयिष्यामि क्लेशयिष्यामि, अत्र स्थित्वा इति शेषः, ममेदानीं प्रस्थानमेवोचितं, युष्माकं सङ्गथा चलतु इति निष्कर्षः।

(य) अनुसरन् गन्तुं प्रवृत्ताया इरावत्याः पश्चात् पश्चात् गच्छन्।

(र) रसनेति।—रसनया काञ्चीदाम्ना, रोषवशात् कटीदेशात् स्रस्तया इति भावः, सन्दानितौ संयतौ, आवद्धौ इत्यर्थः, चरणौ यस्याः ताद्दशी; एतेनास्याः अतीव कोपनस्वभावत्वं प्रकटितम्। "रसना-सन्दानितचरणा" इत्यत्र "रसनासन्धारितचरणा" इति पाठान्तरम्।

(ल) निरपेक्षता औदासीन्यं, न शोभते न युज्यते, अनुरक्तं माम् उपेक्ष्य त्वया न गन्तव्यमिति भावः।

(व) शठ! "शठोऽयमेकत्र वद्धभावो यः। दर्शितवहिरनुरागो विप्रियमन्यत्र गूढ़माचरति॥" इत्युक्तलक्षणक्रधूर्त्तं! यतस्त्वं शठः, अतस्ते अनुरोधो न रक्षणीय इति भावः।

शठ इति।—हे प्रिये! परिचयवति परिचयोऽनेनास्ति इति परिचय-वान् तस्मिन्, अतिशायने मतुप्; अत्यर्थं परिचिते, मयि मल्लक्षणे जने,

रत्ता। इअं वि हदासा तुमं ज्जेव्व अणुसरदि।* (अ)

[रसनामादाय राजानं ताडयितुमिच्छति]। (ब)

* इयमपि हताशा त्वामेवानुसरति इति सं०।

परिचयवति इत्यनेन कौट्टक्स्वभावोऽहमिति अन्यर्थं ज्ञातवत्या त्वया मालविकया सह सलापे कोऽपि दोषो नाशङ्कनीयः इति व्यज्यते; शठः धूर्त्तनायकः, इति, मत्वेति शेषः, ते तव, अवधीरणा अवज्ञा, तिरस्कारः इति यावत्, तावत् अस्तु भवतु, मां शठं मत्वा त्वं तिरस्कुरु, न तत्र मया किञ्चित् वक्तव्यमिति भावः; किन्तु हे चण्डि! अत्यन्तकोपने! "चण्ड-स्त्वत्यन्तकोपन." इत्यमरः; "चण्डी कात्यायनीदेव्यां हिंस्रकोपन-योषितो." इति मेदिनी च; चरणपतितया पादयोः सक्तया, अनुनयार्थं पादसमीपे दण्डवत् कृतप्रणामया च, मेखलया काञ्चीदाम्ना, कयाचित् सख्या च इति ध्वन्यते, याचिताऽपि प्रार्थिताऽपि, क्रोधपरिहारार्थं पादयोः पतित्वा कृतानुनयाऽपीति यावत्, ताम् अवधीरणां, न विसृजसि न परित्यजसि? इति काकुः, चरणपतितानां सखीनां याच्ञा कोपत्यागस्य उचितत्वात्, कोपत्यागे तु अवधीरणाया अपि त्यागो युक्तः, किन्तु तत् त्वं न करोषीति अयुक्तमेतदिति भावः। अत्र वचन-भङ्ग्या क्रोधं त्यज, मा याहि इत्यस्य गम्यमानत्वात् पर्य्यायोक्तालङ्कारः, किञ्च, अवधीरणात्यागार्थं पादपतनपूर्वकयाञ्चारूपे कारणे सत्यपि अवधीरणात्यागरूपतत्फलाभावात् विशेषोक्तिश्च, तथा अचेतनायाः मेखलाया याञ्चाऽसम्भवेऽपि तत्सम्भवोक्त्या अतिशयोक्तिश्च इत्येषा-मङ्गाङ्गिभावेनावस्थानात् सङ्करः। "पर्य्यायोक्तं यदा भङ्ग्या गम्यमेवाभि-धीयते" "सति हेतौ फलाभावो विशेषोक्तिर्निगद्यते" इति तयोर्लक्ष-णात्। अपरवक्त्रं वृत्तम्—"अयुजि न-न-र-ला गुरुः समे तदपरवक्त्र-मिदं न-जौ ज-रौ" इति लक्षणात्॥ २०॥

(अ) हताशा निर्दया, मम विप्रलम्भनं दृष्ट्वाऽपि तदगणयित्वा गमनविघ्नोत्पादनात् निष्ठुरेत्यर्थः, "हताशो निर्दये चाशारहिते पिशुनेऽपि च" इति मेदिनी। अनुसरति अनुगच्छति, त्वत्सदृशं व्यवहरतीत्यर्थः।

(ब) रसनां काञ्चीम्। ताडयितुं प्रहर्त्तुम्।

राजा। वयस्य। एषा इरावती—

वाष्पासारा हेमकाञ्चीगुणेन

श्रोणीविम्बादप्युपेक्षाच्युतेन।

चण्डी चण्डं हन्तुमभ्युद्यता मां

विद्युद्दाम्ना मेघराजीव विन्ध्यम्॥ २१॥

इरा। किं एव्वं भूओवि मं अवधीरिअं करेहि?। * (स)

राजा। [ सरसन इरामवलम्बयति ]।

* किमेव भूयोऽपि मामवधीरितां करोषि? इति स०।

वाष्पासारेति।—वाष्पाणि अश्रूणि इव, आसाराः धारासम्पाता यस्यास्तादृशी, अश्रुधारावत् जलधारावर्षिणी, "वाष्पमूष्माऽश्रु" इत्यमरः; मेघराजी जलदमाला, विद्युद्दाम्ना तड़िन्मालया, विन्ध्यं तदाख्य पर्वतमिव, वाष्पासारा वाष्पाणाम् अश्रूणाम्, आसारः धारया सम्पातो यस्याः सा तादृशी, "धारासम्पात आसारः" इत्यमरः; चण्डी अत्यन्तकोपना, एषा इयम् इरावती इति वयस्यकर्तृपदेनान्वयः, श्रोणीविम्बात् नितम्बमण्डलात्, उपेक्षया अनादरेण, रक्षणार्थं प्रयत्नाभावेनेति यावत्, च्युतेन स्खलितेन, पादयोः पतितेनेत्यर्थः, हेमकाञ्चीगुणेन स्वर्णमेखलादाम्ना, मामपि चण्डं तीव्रं यथा तथा, भीषणभावेनेत्यर्थः, हन्तुं प्रहर्तुम्, अभ्युद्यता उद्युक्ता। अपि-शब्दोऽत्र शङ्कायाम्, "अपि सम्भावनाप्रश्नशङ्कागर्हासमुच्चये" इति मेदिनी। श्लोकेऽस्मिन् उपमाऽलङ्कारः, तथा "चण्डी चण्डम्" इति व्यञ्जनानामनेकधा सकृत् साम्यात् छेकानुप्रासश्चेत्यनयोः संसृष्टिः। शालिनी वृत्तं "मात्तौ गौ चेत् शालिनी वेदलोकैः" इति तल्लक्षणात्॥ २१॥

(स) एवम् अनेन प्रकारेण, अहं त्वां हन्तुमुद्यता इत्येवं दोषारोपेणेत्यर्थः, भूयोऽपि पुनरपि, अवधीरिताम् अवज्ञातां, लोकसमीपे इति भावः, करोषि? प्राक् प्रियगर्हिणीं मामुपेक्ष्य स्वान्तरेण सह संलापं कृत्वा वारमेकं अवज्ञां कृतवान्, पुनरपि निर्दोषायां मयि एवं मिथ्यादोषं समारोप्य लोकसमीपे कथमवज्ञातां करोषि? इति समुदितार्थः।

अपराधिनि मयि दण्डं संहरसि समुद्यतं कुटिलकेशि ! ।
वर्द्धयसि विलसितं त्वं दासजनायात्र कुप्यसि च ॥ २२ ॥

नूनमिदानीमनुज्ञातम्। (छ) [ इति पादयोः पतति ]।

इरा। ण क्खु इमे मालविआए चलणा, जे दे विसेसेण दोहलं पूरयिस्संति। * (क) [ इति निष्क्रान्ता सचेटी ]।

---

* न खल्विमौ मालविकायाश्चरणौ, यौ ते विशेषेण दोहदं पूरयिष्यतः इति सं०।

---

"किं करेहि?" इत्यत्र "किं मं एव्व भूओवि अवरद्धं करेसि?" इति पाठे—किं मामेव भूयोऽपि अपराद्धां करोषि? इति सं०।

अपराधिनीति।—कुटिलकेशि! हे कुञ्चितकुन्तले! त्वम् अपराधिनि कृतापराधे, मयि मल्लक्षणे जने, समुद्यतं समुत्तोलितं, दातुं प्रवृत्तमिति यावत्, "समुद्यतम्" इत्यत्र "किमुद्यतम्" इति पाठान्तरम्; दण्डं रसना-प्रहाररूपां शास्तिमित्यर्थः, यद्वा—रसनारूपं लगुडं, संहरसि निय च्छसि, स्थगयसि इत्यर्थः, अत एव अत्र अस्मिन् विषये, पादपतनादिना तवानुनय-विषये इत्यर्थः, यद्वा—अत्र अस्मिन् दण्डसंहरणकरणे, विलसितं विलासं, मम चेष्टितविशेषमिति यावत्, प्रणयमिति भावः, वर्द्धयसि ददासीत्यर्थः, यद्वा—विलसितं मयि अपाङ्गविलोकनादिरूपं हावविशेषमित्यर्थः, वर्द्धयसि करोषि इत्यर्थं, "अत्र" इत्यत्र "अद्य" इति पाठान्तरम्; अथच दासजनाय सेवकाय मह्यं, कुप्यसि च क्रुध्यसि च, चमत्कारोऽयं तव युगपत् विविधभाव इति भावः। श्लोकेऽस्मिन् संहरसि वर्द्धयसि कुप्यसि इत्यनेकक्रियाणां त्वमित्येकेन कर्त्तृकारकेणान्वयात् दीपकालङ्कारः, किञ्च, एतासां क्रियाणां यौगपद्यात् समुच्चयालङ्कारश्च इत्यनयोः सङ्करः, "समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके। खले कपोतिकान्यायात् तत्करः स्यात् परोऽपि चेत्॥ गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये॥" इति लक्षणात्। आर्य्या जातिः॥ २२॥

(छ) नूनं निश्चितम्। अनुज्ञातम् अनुमतम्, अपराधक्षालनार्थ-मनुनयकरणमिति शेषः, ताड़नाय समुद्यतदण्डसंहारादिति भावः। "इदानीम्" इत्यत्र "इदम्" इति पाठान्तरम्।

विदू। उट्ठेहि, अकिदप्पसादोसि। * (ख)

राजा। (सत्यामेवावस्थायामनुत्थाय) तत् कथं गतैव प्रिया ?।

विदू। वअस्स। देव्वेहिं इमस्स अविणअस्स अवसारइदा। अहं सिग्घं अवक्कमाम, जाव अंगारओ रासिं विअ अणुवक्कं पडिगमणं ण करेदि। † (ग)

* उत्तिष्ठ, अकृतप्रसादोऽसि इति सं०।

† वयस्य! दैवैः अस्य अविनयस्य अपसारिता। अहं शीघ्रम् अपक्रमामि, यावत् अङ्गारकः राशिमिव अनुवक्रं प्रतिगमनं न करोति इति सं०।

(क) दोहदम् अभिलाषम्। "विसेसेण दोहलं" इत्यत्र "हरिसदोहलं" इति पाठे—हर्षदोहदम् इति सं०।

(ख) अकृतप्रसादः अप्राप्तानुग्रहः, इरावती त्वां प्रति प्रसादमकृत्वैव प्रस्थिता इत्यर्थः। "अकिद" इत्यत्र "किद" इति पाठान्तरम्।

(ग) दैवैः तव शुभादृष्टैः,अस्य अविनयस्य मूर्त्तिमदविनयरूपिण्या अस्या इरावत्या इत्यर्थः, अपसारिता अपवाहिता, "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् अपसरणं जातमित्यर्थः, तव शुभादृष्टराशिभिरेव अतिकोपनस्वभावा दुर्विनीता इयमिरावती इतः प्रस्थिता इति समुदितार्थः। नो चेत् अत्रावस्थाय अन्यविधं कमपि दारुणमनर्थमापादयेत्, सुतरामितस्तस्या अपसरणं शुभमेव, नात्र किमपि ते दुःखकारणं भवितुमर्हतीति भावः। "अहं"इत्यत्र"ता वअं" इति पाठे—तत् वयमिति सं०। अपक्रमामि निर्गच्छामि, पलाये इत्यर्थः। अङ्गारकः मङ्गलग्रहः, राशिं मेषादीनामेकतमं राशिमिव, अनुवक्रं वक्रभावमनुसृत्य, वक्रगत्या इत्यर्थः, प्रतिगमनं प्रतिकूलगमनं, सङ्क्रमणमिति यावत्, प्रत्यागमनञ्च, यावत् न करोति; पापग्रहो मङ्गलो यथा वक्रगमनेन स्वभोग्यं राशिं सङ्क्रम्य जनस्य अनिष्टं जनयति, तथा असन्तुष्टा प्रतिकूला च इयमिरावती यावत् अत्र प्रत्यावृत्य अस्माकं किमपि अनिष्टान्तरं नाचरति, तावदितो वयं पलायामहे इति निष्कर्षः। "देव्वेहिं अवक्कमाम" इत्यत्र "दिट्ठिआ इमस्स अविणअस्स अप्पसण्णा गदा

राजा। अहो। मदनस्य वैषम्यम्—(घ)

मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनां सेवाम्।
एवं प्रणयवती सा न हि शक्यमुपेक्षितुं कुपिता॥ २३॥

---

एषा, ता अम्हे सिग्घं अवक्कमाम" इति पाठे—दिष्ट्या अनेन अविनयेन अप्रसन्ना गता एषा, तत् वयं शीघ्रम् अपक्रमामः इति स०।

(घ) अहो! आश्चर्य्यं, मदनस्य वैषम्यं वैपरीत्यं, विपरीतकारित्वमित्यर्थः, मालविकायामनुरक्तस्यापि मे इरावतीप्रसादनार्थं येयं चेष्टा एतदेव मदनस्य आश्चर्य्यं वैषम्यमिति भावः।

मदनस्य वैषम्यमेव प्रकटयति, मन्ये इति।—प्रियया इरावत्या, हृतम् आकृष्टं, मनः चित्तं यस्य तादृशः, अहमिति शेषः, तस्याः इरावत्याः प्रणिपातलङ्घनां प्रणिपातं चरणपतनं, लङ्घयति अतिक्रामति या तादृशीं (कर्त्तरि ल्यु.) चरणपतनादपि अधिका कामपि इत्यर्थः, सेवां परिचर्य्यां, प्रसन्नतासम्पादनार्थं क्रियाविशेषमित्यर्थः, कर्त्तव्यामिति शेषः, मन्ये विवेचयामि, चरणपतनमात्रेणैव सा प्रसादयितुं नैव शक्या, तस्मादप्यधिका काऽपि सेवा कर्त्तव्या इति मन्ये इति निष्कर्षः। कथ तथा मन्ये? इत्याह, एवमिति।—सा इरावती, कुपिता रुष्टा, अपीति शेषः, प्रणयवती प्रेमपरायणा, मयि अत्यर्थम् अनुरागवतीत्यर्थः, अत एव एवमनेन प्रकारेण, केवलप्रणिपातरूपसेवयैव इत्यर्थः, उपेक्षितुम् अनादर्त्तुं, तस्याः प्रसन्नतासम्पादनं प्रति औदासीन्य प्रदर्शयितुमित्यर्थः, न हि नैव, शक्यं, मयेति शेषः। क्वचित् "एवं प्रणयवती सा न हि शक्यमुपेक्षितुं कुपिता" इत्यत्र"एवं हि प्रणयवती सा शक्यमुपेक्षितुं कुपिता"इति पाठान्तरं दृश्यते। श्लोकेऽस्मिन् कुपिताऽपि प्रणयवतीति विरोधः,प्रणयिनि अभिमानाधिक्यात् कोपः सम्भाव्यते इति तत्परिहारात् विरोधाभासोऽलङ्कार', किञ्च, कोपसत्त्वेऽपि उपेक्षणाशक्यं प्रति प्रणयवत्ताया हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्च, इत्यनयोरङ्गाङ्गिभावेनावस्थानात् सङ्करः। आर्य्या जातिः॥ २३॥

तदेहि, कुपितां देवीं प्रसादयावः। (ङ)

[इति निष्क्रान्ताः सर्वे]। (च)

इति तृतीयोऽङ्कः।

## चतुर्थोऽङ्कः।

[ततः प्रविशति पर्य्युत्सुको राजा प्रतीहारी च]। (क)

राजा। [आत्मगतम्]।

तामाश्रित्य श्रुतिपथगतामाशया बद्धमूलः
सम्प्राप्तायां नयनविषयं रूढरागप्रवालः।
हस्तस्पर्शैः कुसुमित इव व्यक्तरोमोद्गमत्वात्
कुर्य्यात् कान्तं मनसिजतरुर्मां रसज्ञं फलस्य॥ १॥

(ङ) "तदेहि, कुपितां देवीं प्रसादयाव" इति पाठः पुस्तकान्तरे नास्ति।

(च) "इति निष्क्रान्ताः सर्वे" इत्यत्र "इति निष्क्रान्तः सह वयस्येन" इति पाठान्तरम्।

(क) पर्य्युत्सुकः मालविकारूपेष्टलाभार्थम् उद्युक्तः, उत्कण्ठित इति यावत्, "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः।

तामिति।—श्रुतिपथगतां कर्णगोचरीभूतां, चित्रशालायां कुमार्य्या वसुलक्ष्म्या आवितामित्यर्थः, तां मालविकाम्, आश्रित्य अवलम्ब्य, आशया तृष्णया, तया सह समागमाकाङ्क्षया इत्यर्थः, "आशा तृष्णाऽपि चायता" इत्यमरः; "आशया" इत्यत्र "आख्यया" इति पाठान्तरम्; बद्धमूलः बद्ध सञ्जातं, मूलं वीज यस्य तथाभूतः सञ्जाताङ्कुरः, ततो नयनविषयं नेत्रगोचरं, सम्प्राप्तायाम् आगतायां, नयनपथवर्त्तिन्यां सत्यामित्यर्थः, रूढः समुद्भूतः, रागः अनुरागरूपः, प्रबालः अभिनवपल्लवः यस्य तादृशः, "प्रबालो विद्रुमे वीणादण्डेऽभिनवपल्लवे" इति विश्वः; तथा हस्तस्पर्शैः पाणिभ्यां स्पर्शनैः, अपराधक्षमापणार्थं पादपतनकाले हस्ताभ्यां धृत्वा उत्थापनसमये इति

[प्रकाशम]। सखे! गौतम!

भतौ। जेदु जेदु भट्टा। असण्णिहिदो गोदमो। * (ख)

राजा। [आत्मगतम्]। आः! मालविकावृत्तान्तज्ञानाय मया प्रेषितः। (ग)

विदू। [प्रविश्य] जेदु जेदु भवं। † (घ)

राजा। जयसेने! जानीहि तावत्, क्वासौ देवी धारिणी सरुजचरणत्वात् विनोद्यते इति। (ङ)

* जयतु जयतु भर्त्ता। असन्निहितो गौतमः इति सं०।

† जयतु जयतु भवान् इति सं०।

भावः, व्यक्तरोमोद्गमत्वात् सुस्पष्टं यथा तथा सञ्जातपुलकत्वात्, कुसुमित इव पुष्पित इव,"कुसुमित" इत्यत्र"मुकुलित"इति पाठान्तरम्; मनसिज-तरुः कन्दर्पपादपः, मां फलस्य मालविकारूपस्य, कान्तं धवं, पतिमित्यर्थः, "कान्ता नार्य्यां प्रियङ्गौ स्त्री शोभने त्रिषु ना धवे"इति मेदिनी; रसज्ञं शृङ्गाररसाभिज्ञम्, अन्यत्र—कान्तं मनोज्ञम्, उत्तममित्यर्थः, रसज्ञं मधुरादिरसाभिज्ञं, कुर्य्यात् विदध्यादित्यर्थः, मालविकायाः सम्भोग-सुखाभिज्ञं कुर्य्यादिति निष्कर्षः। कुर्य्यादिति प्रार्थनायां लिङ्। श्लोके-ऽस्मिन् आशादिषु मूलत्वाद्यारोपात् साङ्गं रूपकमलङ्कारः, तथा कुसुमित इवेति वाच्योत्प्रेक्षा, कान्तं रसज्ञमिति श्लेषश्च इत्येतेषामङ्गाङ्गिभावसङ्करः। मन्दाक्रान्ता वृत्तम् ॥ १ ॥

(ख) असन्निहितः अनुपस्थितः।

(ग) आः इति स्मरणार्थकमव्ययम्; "आः स्मरणेऽपाकरणे कोप-सन्तापयोरपि" इति मेदिनी। प्रेषितः, गौतम इति शेषः।

(घ) "जेदु जेदु" इत्यत्र "वड्ढदु" इति पाठान्तरम्।

(ङ) जयसेने! इति प्रतिहार्य्याः आमन्त्रणम्। जानीहि वार्त्तां गृहाणेत्यर्थः। सरुजचरणत्वात् सव्यथपादत्वात्, दोलातः परिभ्रंशनेन पादयोराघातप्राप्त्या व्यथाऽभिभूतचरणत्वात् इत्यर्थः, क्व कुत्र, विनोद्यते अफुल्लीक्रियते, व्यथादूरीकरणार्थं सेव्यते इति यावत्, परिजनैरिति शेषः।

प्रती। ज देवो आणवेदि। * [इति निष्क्रान्ता]।

राजा। गौतम! को वृत्तान्तस्तत्रभवत्यास्ते सख्याः? (च)

विदू। यो विडालग्गिहीदाए परहुदिआए। † (छ)

राजा। [सविषादम्]। कथमिव?

विदू। सा क्खु तवस्सिणी ताए पिंगलक्खीए सारभंड-गेहमुहे परिक्खित्ता। ‡ (ज)

* यद्देव आज्ञापयति इति स०।

† यो विड़ालगृहीताया परभृतिकायाः इति स०।

‡ सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्डगेहमुखे परिक्षिप्ता इति स०।

(च) वृत्तान्तः वार्त्ता। ते सख्याः मालविकायाः।

(छ) विड़ालगृहीतायाः मार्जारेण धृतायाः, परभृतिकायाः कोकिलायाः, "वनप्रियः परभृतः कोकिलः पिक इत्यपि" इत्यमरः; यः वृत्तान्तः, मालविकायाः स एव वृत्तान्तः इति शेषः, विड़ालाक्रान्ता कोकिला यथा आत्ममोचने असमर्था जीवनाशा परित्यज्य निश्चेष्टा वर्त्तते, तथा मालविकाऽपीति निष्कर्षः।

(ज) तपस्विनी अनुकम्प्या, विपन्नत्वात् दयार्हा इत्यर्थः, "तपस्वी तापसे चानुकम्प्येऽ त्रिषु" इति मेदिनी। तया भवत्परिचितया, पिङ्गलाक्ष्या तन्नाम्न्या देव्याः परिचारिकया, यद्वा—पिङ्गलाक्ष्या क्रोधारक्तलोचनया, देव्या इति शेषः, सारभाण्डगेहमुखे साराणां धनानां, भाण्ड पात्रम्, आधार इत्यर्थः, पेटिकादिरिति यावत्, यद्वा—सारं वरं, श्रेष्ठमित्यर्थः, यत् भाण्ड मूलधनं, रत्नादिरित्यर्थः, यद्वा—भाण्डं भूषा, भूषणमित्यर्थः, हीरकादिघटितालङ्कार इति यावत्, "सारो बले स्थिरांशे च मज्ज्ञि पुंसि धने जले। न्याय्ये क्लीवं त्रिषु वरे" इति "भाण्ड पात्रे वणिङ्मूलधने भूषाऽश्वभूषयोः" इति च मेदिनी; तदर्थं गेहं तत्स्थापनार्थं गृह, भूगर्भस्थ सुरक्षितप्रकोष्ठ इति यावत्, तस्य मुखे अभ्यन्तरे इत्यर्थः।"सारभंडगेहमुखे परिक्खित्ता" इत्यत्र "सारभंड-

राजा। ननु मत्सम्पर्कमुपलभ्य ? (झ)

विदू। अह इं। * (ञ)

राजा। क एवं विमुखोऽस्माकं येन चण्डीकृता देवी ? (ट)

विदू। सुणादु भवं। परिव्वाजिआ मे कहेदि, भो! ह्मिओ किल तत्तभोदी इरावदी रुजाअंतचलणां देवीं सुहं पुच्छिदुं आअदा। † (ठ)

राजा। ततस्ततः ?

विदू। तदो सा देवीए पुच्छिदा, किं अत्तणोवि अणलंकिदो

---

* अथ किम् इति सं०।

† शृणोतु भवान्। परिव्राजिका मे कथयति, भोः। ह्यः किल तत्रभवतीरावती रुजायमानचरणां देवीं सुखं प्रष्टुमागता इति सं०।

---

भूधरए गुहाए विअ णिक्खित्ता" इति पाठे—तारभाण्डभूधरस्य गुहायामिव निक्षिप्ता इति सं०।

(झ) ननु इति प्रश्ने। मत्सम्पर्कं मया सह सम्बन्धं, तस्यां मदनुरागमित्यर्थं, उपलभ्य ज्ञात्वा, परिक्षिप्ता किम्? इति शेषः।

(ञ) अथ किम् इति स्वीकारार्थकमव्ययम्; भवत्सम्पर्कमुपलभ्यैव परिक्षिप्ता इत्यर्थः।

(ट) एवम् ईदृशः, विमुखः पराङ्मुख, विरुद्धाचरणशील इत्यर्थः। येन विमुखेन जनेन। चण्डीकृता कोपिता, क्रुद्धीकृता इत्यर्थः।

(ठ) परिव्राजिका कौशिकी। "परिव्वाजिआ मे कहेदि, भो!" इत्यत्र "परिव्वाजिआए मे कहिदं" इति पाठे—परिव्राजिकया मे कथितम् इति सं०। ह्यः अतीतदिवसे, पूर्वदिने इत्यर्थ, "ह्योऽतीते" इत्यमरः। रुजायमानचरणां पीड्यमानपादां, पादवेदनया क्लिश्यन्तीमित्यर्थः, "रुजाअंतचलणां" इत्यत्र "रुअक्कंतचलणां" इति पाठे—रुजाक्रान्तचरणाम् इति सं०। सुखं रुजाक्रान्तिजनितदुःखाभावम्। 'सुहं पुच्छिदुं" इत्यत्र "सुहपुच्छिआ" इति पाठे—सुखपृच्छिका इति सं०।

हिअअजणो वल्लहोत्ति ? तदो ताए उत्तम्मंतीए मंतिदं, कुदो वा उवआरो जं परिअणे संकंतं वल्लहत्तणं जाणिस्सदित्ति ।*(ड)

* ततः सा देव्या पृष्टा, किमात्मनोऽप्यनलङ्कृतो हृदयजनो वल्लभः ? इति । ततस्तयोत्ताम्यन्त्या मन्त्रितं, कुतो वोपचारः, यत् परिजने सङ्क्रान्तं वल्लभत्वं ज्ञास्यतीति इति स० ।

(ड) सा इरावती । अनलङ्कृतः भूषणविरहितः, हृदयजनः हृदयप्रियजन इत्यर्थं, किम् आत्मनः स्वस्यापि, तवापि इत्यर्थः, वल्लभः प्रियः, भवति ? इति शेषः, तव कमपि प्रियजनमलङ्कारशून्यगात्रं दृष्ट्वा त्वं किं प्रीतिमनुभवसि ? नो चेत् त्वामीदृशीमनलङ्कृता दृष्ट्वा कथमहं प्रीतिमनुभवामि ? इति देव्युक्तेराशय', किमर्थं त्वं भूषणं विहाय अत्र समागता ? इति भावः । तया इरावत्या । उत्ताम्यन्त्या क्लिश्यन्त्या, सदु खमिति यावत् । मन्त्रितं कथितम् । उपचारः भूषणादिव्यवहारम् । यत् येन भूषणधारणेन, परिजने स।दृशे स्वजने परिचारिकाजने वा, सङ्क्रान्तं ससक्तं वल्लभत्व प्रियत्व, ज्ञास्यति अवगमिष्यति, देवीति शेष., तादृश उपचार , कुतो वा केन प्रकारेण, सम्भवेत् ? इति शेष । भवत्परिजन-भूता माम् अलङ्कृतां दृष्ट्वा यथा देवो आनन्दिना भवितुमर्हति तदिदानीं ने कथमपि न सम्भवेदित्यर्थ., यस्य प्रीतिसम्पादनार्थं कामिन्य. आत्मान-मलङ्कुर्वन्ति, स भर्त्तैव इदानीमन्यासक्त. मयि न प्रीतिमनुभवति, अतो विफल मे भूषणधारणमिति भाव' । यद्वा—आत्मन' तव, हृदयजनः हृदयप्रियजनः, वल्लभः भर्त्ता, अनलङ्कृत' ? भूषणशून्य. ? महाराजोऽपि किमिदानीं भूषणादिकं परित्यक्तवान्, येन त्वमपि तथाभूता अत्रा-गताऽसि ? । कुतो वा केन वा प्रकारेणेत्यर्थ', उपचारः आरोप., राजनि वल्लभशब्दप्रयोग इत्यर्थः । यत् यदि इत्यर्थ., परिजने आत्मनः परिवारस्वजनविशेषे, मालविकायामिति भाव', सङ्क्रान्त ससक्तं, वल्लभत्व प्रियत्व, 'राज्ञ. अनुराग इति यावत्, ज्ञास्यति, भवतीति शेष', युष्मत्-परिचारिका मालविका प्रति राज्ञः प्रेम भवती विजानीयात् चेत् राजनि वल्लभत्वोपचार केन प्रकारेण कर्त्तुं शक्नुयात् ? न केनापि प्रकारेणेत्यर्थ. । "किं ......जाणिस्सदित्ति" इत्यत्र "किं णु अलोइदो- वल्लहजणोत्ति ? ताए

राजा। अहो! निर्वेदादृते मालविकायामयमुपन्यासः शङ्कयति। (ढ)

विदू। तदो ताए अणुबंधिज्जमाणाए भवदो अविणअं अंतरेण परिगदत्था किदा। * (ण)

* ततस्तयाऽनुबध्यमानया भवतोऽविनयमन्तरेण परिगतार्था कृता इति स०।

उत्तं, मंदो वो उवआरो, जं परिजणे संक्कत वल्लहत्तणं ण जाणीअदि" इति पाठे—किन्तु अवलोकितो वल्लभजन इति ?। तया उक्त, मन्दो व उपचार, यत् परिजने सङ्क्रान्त वल्लभत्वं न ज्ञायते इति स०।

(ढ) निर्वेदात् ऋते निर्वेद वैराग्यम्., अनासक्तिरित्यर्थः., अनासक्तत्वात् सदा सन्तोष इति भाव, तस्मात् ऋते तं विना, सन्तोषं विना इत्यर्थः,असन्तोषहेतुक इति यावत्; यद्वा—विदन्ति अनेन इति वेद: ज्ञानं,निः निश्चय वेद ज्ञान तस्मात् निर्वेदात् निश्चयज्ञानात्, मालविका मम प्रिया इति निश्चयज्ञानात् ऋते विना, अपीति शेष, 'निर्वेदात्" इत्यत्र 'निर्भेदात्" इति पाठे—निर्भेदात् स्फुटतया रहस्यप्रकाशनादित्यर्थं। अयमेव पाठ सुगम. समीचीनश्च; अयम् इदानीमुक्त उपन्यास: वाग्विन्यास, कस्मिंश्चित् परिजने मम वल्लभत्वसङ्क्रान्तिरूप: इत्येवंरूप: प्रस्ताव इत्यर्थं, मालविकाया मालविकाविषये, शङ्कयति शङ्कामुत्पादयति, देव्या' परिजनेषु मालविकाया एव अनुपमसौन्दर्य्यशालित्वात् सा एव एतद्वाक्यस्य लक्ष्यस्थलमिति संशय स्वत एव उत्पद्यते इति भाव।

(ण) तया इरावत्या, अनुबध्यमानया अनुरुध्यमानया, देव्या सनिर्बन्ध पृष्टया सत्या इत्यर्थं, भवत. तव, अविनय मालविकायामनुरागरूपं दुष्टाचरणम्, अन्तरेण विना, मालविकया सह उपवने संलापरूपं नीतिविगर्हितमाचरणमनुल्लिख्यैवेत्यर्थं, "अणुबंधिज्जमाणाए" इत्यत्र "अणुखिज्जमाणा सा" इति पाठे—अनुखिद्यमाना सा इति स०। परिगतार्था विदितवस्तुका, ज्ञातवृत्तान्ता इत्यर्थ.,देवीति शेषः, कृता विहिता, मालविका प्रति तव आचरणस्य स्पष्टत: उल्लेखकरणाभावेऽपि, भङ्गी-

राजा। अहो! दीर्घरोषता तत्रभवत्याः। अतः परं कथय। (त)

विदू। किं अवरं? मालविआ बउलावलिआ अ णिगलपदीओ अदिट्ठसुज्जपाआ पाआलवासं णागकण्णआ विअ अणुहवंति। * (थ)

राजा। कष्टम्!! कष्टम्!!—

मधुरस्वरा परभृता भ्रमरी च विबुद्धचूतसङ्गिन्यौ।
कोटरमकालवृष्ट्या प्रबलपुरोवातया गमिते ॥ २ ॥

---

* किमपरम्? मालविका बकुलावलिका च निगड़पद्यावदृष्टसूर्य्यपादे पातालवासं नागकन्यके इवानुभवत. इति स०।

---

विशेषेण सर्वं देव्यै विज्ञापितं, ततश्च भवदविनय एव तस्याः भूषणत्यागे हेतुरिति सा प्रकारान्तरेण विज्ञापयामास इति फलितार्थः। यद्वा—तव आचरणमनुलिख्य केवलं मालविकैव त्वां प्रलोभितवतीति सैवात्र सापराधा इति कौशलेन देवीं विज्ञापितवतीति निष्कर्षः।

(त) अहो इति खेदे। तत्रभवत्या. इरावत्याः, दीर्घरोषता दीर्घकालस्थायी क्रोधः. बहुकालपूर्वमुत्पन्नः क्रोधः एतावता कालेनापि न प्रशमं गत इत्यतीव दुःखहेतुरिति भावः।

(थ) किमपरं, कथयिष्यामीति शेषः। "किं अवरं" इत्यत्र "किं अदो वरं" इति पाठे—किमतः परम् इति स०। निगड़पद्यौ शृङ्खलितचरणे। अदृष्टसूर्य्यपादे अदृष्टा. न दर्शनपथं गताः, सूर्य्यपादाः सूर्य्यकिरणा ययोः ते, न दृष्टाः द्रष्टुं समर्थाः, सूर्य्यपादा याभ्यां ते इति वा, अन्धकारकारागारे निक्षेपादिति भाव.। नागकन्यके इव नागकन्याद्वयमिव। "अदिट्ठ··अणुहवति" इत्यत्र "अदिट्ठसुज्जपाए पादालवासं णाग कण्णआओ विअ अणुहोंति" इति पाठेऽपि समान एव संस्कृतानुवादः। "अदिट्ठसुज्जपादं" इति पाठे—अदृष्टसूर्य्यपादम् इति स०।

मालविकाया अवस्थां स्मृत्वा खेदं प्रकाशयति, मधुरस्वरेति।—

अप्यत्र कस्यचिदुपक्रमस्य गतिः स्यात् ? (द)

विदू। कहं भविस्सदि ? जं सारभंडगिहव्वावारिदा माहविआ देवीए संदिट्ठा, मम अंगुलीअमुद्दिअं अदेक्खिअ ण मोत्तव्वा तुए हदासा मालविआ वउलावलिआ अ त्ति। * (ध)

* कथं भविष्यति ? यत् सारभाण्डगृहव्यापारिता माधविका देव्या सन्दिष्टा, ममाङ्गुलीयमुद्रिकामदृष्ट्वा न मोक्तव्या त्वया हताशा मालविका वकुलावलिका चेति इति सं०।

मधुरः प्रीतिप्रदः, स्वरः ध्वनिः यस्याः सा तादृशी, "स्वादुप्रियौ च मधुरौ" इत्यमरः ; परभृता कोकिला, भ्रमरी च मधुकरी च, तादृशी मालविका वकुलावलिका च इति ध्वनिः, विवुद्धेषु विकसितेषु, चूतेषु आम्रेषु, आम्रमुकुलेषु इति यावत्, सङ्गः संसर्गः अनयोरस्तीति तादृश्यौ सत्यौ, मत्सम्पर्किते सत्यौ इति ध्वनिः, प्रवलः भीषणः, पुरोवातः अग्रप्रवाहितवायुः यस्यास्तादृश्याः, इरावत्या इति ध्वनिः, अकालवृष्ट्या वर्षातिरिक्तकालिकवर्षणेन, राज्ञ्या इति ध्वनिः, कोटरं वृक्षगात्रस्थरन्ध्रं, तत्तुल्यं भूगर्भस्थसारभाण्डगृहमुखमिति ध्वनिः,गमिते प्रापिते। कालवृष्टौ प्रवलपुरोवातस्य प्रायशः अदृष्टत्वात् कोटरप्रवेशस्य प्रयोजनं न भवति इति अकालवृष्ट्या प्रवलपुरोवातया इत्युक्तम्। श्लोकेऽस्मिन् अप्रस्तुतेभ्यः परभृता-भ्रमरी-विवुद्धचूतसङ्गिप्रभृतिभ्यः समेभ्य प्रस्तुतानां मालविका-वकुलावलिका-राजप्रभृतीनां समानां प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः,तदुक्तं दर्पणकारेण—"अथ समात् समम्। अप्रस्तुतात् प्रस्तुतञ्चेत् गम्यते पञ्चधा ततः॥ अप्रस्तुतप्रशंसा स्यात्"॥ इति। आर्य्या जातिः॥ २॥

(द) अपि प्रश्ने। अत्र मालविका-वकुलावलिकयोः सारभाण्डगृहाद्धारविषये। उपक्रमस्य आरम्भस्य, चेष्टाविशेषप्रयोगस्येत्यर्थः, गतिः ज्ञानं, स्यात् ? "गतिः स्त्री मार्ग-दशयोः ज्ञाने यात्राऽभ्युपाययोः" इति मेदिनी ; मालविका-वकुलावलिके उद्धर्त्तुं कश्चिदुपायविशेषः त्वया ज्ञायते किम् ? इति निष्कर्षः।

(ध) कथ केन प्रकारेण, भविष्यति ? उद्धारोपाय इति शेषः;

राजा। [ निःश्वस्य सपरामर्शम् ]। ( न ) सखे ! किमत्र कर्त्तव्यम् ?

विदू। [ विचिन्त्य ]। अत्थि एत्थ उवाओ। *

राजा। क इव ?

विदू। [ सदृष्टिक्षेपम् ]। कोवि अदिट्ठो सुणिस्सदि। कण्णे दे कहेमि। [ उपश्लिष्य ]। एव्वं विअ। † ( प ) [ इत्यावेदयति ]।

राजा। [ सहर्षम् ]। अनुष्ठेयं प्रयुज्यतां सिद्धये। ( फ )

प्रति। [ प्रविश्य ] देव ! पवादसअणे देवी णिसण्णा रत्तचंदण-

---

* अस्त्यत्रोपायः इति स०।

† कोऽप्यदृष्टः श्रोष्यति। कर्णे ते कथयामि। एवमिव इति स०।

---

तयोरुद्धारोपायः असम्भव एवेति भावः। असम्भवत्वे कारणं प्रदर्शयति, यदिति।—सारभाण्डगृहे व्यापारिता नियुक्ता, देव्या तयोः रक्षणार्थमिति शेषः। सन्दिष्टा आज्ञप्ता।"सारभांडगिहव्वावारिदा"इत्यत्र सारभांडघरए वाउदा" इति पाठे—सारभाण्डगृहके व्यापृता इति स०। अङ्गुलीयकमुद्रिकां मन्नामाङ्कितमङ्गुरीयकम्। मोक्तव्या त्यक्तव्या। हताशा पिशुना, खलस्वभावा इत्यर्थः, दुश्चारिणीति यावत्, "हताशो निर्दये चाशारहिते पिशुनेऽपि च" इति मेदिनी। क्वचित् "तुए हदासा" इति पाठो नास्ति।

( न ) सपरामर्शं सचिन्तम्।

( प ) सदृष्टिक्षेपम् इतस्ततो दृष्टिपातं कुर्वन्। अदृष्टः आवाभ्यामनवलोकितः, आवयोर्दृष्टेरन्तराले अवस्थित इत्यर्थः। श्रोष्यति, उच्चैस्तत्कथने इति शेषः।"सुणिस्सदि"इत्यत्र"सुणोदि"इति पाठे—शृणोति इति स०। उपश्लिष्य समीपं गत्वा कर्णे मुखसंयोगं कृत्वा च। एवमिव एवमेवं कर्त्तव्यमित्यर्थः। आवेदयति "अहं सर्पेण दष्टोऽस्मि" इत्येवमपदिश्य देव्या हस्तस्थां विषापहारकमणिसंयुक्तां तामङ्गुलीयकमुद्रां देव्याः सङ्गृह्य तया ते मोचयिष्यामि इति राजानं विज्ञापयति, तच्चावेदनमनुपदमेव व्यक्तीभविष्यति।

( फ ) अनुष्ठेयं त्वया स्थिरीकृतं कर्त्तव्यम्। "अनुष्ठेयम्" इत्यत्र "सुष्ठु" इति पाठान्तरम्। सिद्धये साफल्याय, तयोर्मोचनाय इति यावत्।

वारिणा परिअणहत्थगदेण चन्दणेण भअवदीए विणोदीअमाणा कहाहिं चिट्ठदि। * (ब)

राजा। तस्मादस्मत्प्रयाणायोग्योऽयमवसरः। (भ)

विदू। भो! गच्छदु भवं। अहंवि देविं पेक्खिदुं अरित्त-पाणी हुविस्सं। † (म)

---

* देव! प्रवातशयने देवी निषण्णा रक्तचन्दनवारिणा परिजनहस्त-गतेन चन्दनेन भगवत्या विनोद्यमाना कथाभिस्तिष्ठति इति स०।

† भोः! गच्छतु भवान्। अहमपि देवीं प्रेक्षितुमरिक्तपाणिः भविष्यामि इति स०।

---

(ब) प्रवातशयने प्रवातशयनाख्यप्रासादे इत्यर्थः; यद्वा—प्रकृष्टः वातः वायुः यत्र तत् प्रवातं स्थानं, तत्र यत् शयनं शय्या तस्मिन्, "शयनं सुरते निद्रा-शय्ययोश्च नपुंसकम्" इति मेदिनी; निषण्णा स्थिता, शयिता उपविष्टा वा इत्यर्थः, "पवादसअणे" इत्यत्र "पवाद-सअणीए" इति क्वचित् पाठः। रक्तचन्दनवारिणा रक्तचन्दनमिश्रजलेन, परिजनहस्तगतेन कस्याश्चित् परिचारिकाया हस्तस्थितेन; "रत्तचंदण-वारिणा" इत्यत्र "रत्तचदणधारिणा" इति पाठान्तरम्। चन्दनेन धवलचन्दनेन, भगवत्या इत्यनेनान्वय, परिजनहस्तगतेन रक्तचन्दन-वारिणा भगवत्या च श्वेतचन्दनेन विनोद्यमाना इति सम्बन्धः। "चंदणेण"इत्यत्र "चलणेण" इति क्वचित् पाठः। कथाभिः विविधाभिः प्रबन्धकल्पनाभिः, विविधालापैरिति यावत्, विनोद्यमाना प्रीण्यमाना।

(भ) तस्मात् इदानीं देव्या प्रसन्नचित्ततया अवस्थानादित्यर्थः। अस्मदिति।—अस्माकम् आवयोरित्यर्थः, प्रयाणायोग्यः देव्याः समीपे गमनोपयोगी। अवसरः अवकाशः, इदानीं तत्रैव गमनमुचितमिति भाव.। "तस्मादस्मत्प्रयाणायोग्यः" इत्यत्र. "तेन हि अस्मत्प्रवेशयोग्यः" इति क्वचित् पाठः।

(म) "भो!" इत्यत्र "ता" इति पाठे—तत् इति स०। अरिक्त-

राजा। जयसेनायास्तावत् संविदितं गच्छ। (य)

विदू। तह। [कर्णे]। एव्व विअ होदि। * (र)

[इति निष्क्रान्तः]।

राजा। जयसेने! प्रवातशयनमार्गमादेशय।

प्रति। इदो इदो देवो। †

[ततः प्रविशति शयनस्था देवी परिव्राजिका विभवतश्च परिवारः]।

देवी। भअवदि। रमणिआ कहा। तदो तदो? ‡ (ल)

---

* तथा। एवमिव भवति इति स०।

† इत इतो देव' इति स०।

‡ भगवति! रमणीया कथा। ततस्ततः? इति स०।

---

पाणि अशून्यहस्तः, फलपुष्पाद्युपहारहस्त इत्यर्थः, "रिक्तपाणिर्न पश्येत्तु राजानं देवता गुरुम्। नैमित्तिकञ्च वैद्यञ्च फलेन फलमादिशेत्॥" इत्युक्तेः रिक्तपाणेः राजादिदर्शननिषेधादिति भावः। "अरित्तपाणी" इत्यत्र "अज्जो" इति पाठान्तरम्।

(य) जयसेना इति प्रतीहार्य्या नाम। जयसेनायाः संविदितं ज्ञातं यथा तथा, त्वं यत् कर्त्तुं गच्छसि तत् जयसेनायै विज्ञाप्य गच्छ इत्यर्थः, नो चेदनया तदानुकूल्यं न सम्भवतीति भावः। "संविदितं गच्छ" इत्यत्र "अस्मद्रहस्यं विदित कुरु" इति पाठान्तरम्।

(र) एवमिव भवति, किञ्चिदुद्दिश्य साधयितुम् "अहं सर्पेण दष्टः" इत्येवमभिनेष्यामि, त्वया च तदभिनयसाफल्यविधानाय यथायोग्यमाचरणीय, न पुनः किमपि कस्मैचित् प्रकाशनीयमिति महाराजस्य अभिप्राय इति कर्णे कथितमिति भावः। भवतीति भविष्यत्सामीप्ये वर्त्तमानप्रयोगः।

(ल) रमणीया चित्तहारिणी, कथा प्रबन्धकल्पना, आख्यानमित्यर्थः। "रमणिआ कहा" इत्यत्र "रमणिज्ज कहावत्थु" इति पाठे—रमणीयं कथावस्तु इति स०।

परि। [सहर्षमिव]। अतःपरं पुनः कथयिष्यामि। अत्र-भवान् विदिशेश्वरः प्राप्तः। (व)

देवी। अम्मो भट्टा !! * [इत्युत्थातुमिच्छति]। (श)

राजा। अलमलमुपचारयन्त्रणया। (ष)—

अनुचितनूपुरविरहं नार्हसि तपनीयपीठिकालम्बि।
चरणं रुजापरीतं कलभाषिणि! माच्च पीडयितुम्॥ ३॥

---

* अहो भर्त्ता !! इति सं०।

---

(व) क्वचित् "अतः परम्" इत्यत ऊर्द्ध्वं "देवि!" इत्यामन्त्रणा-पदमधिकं दृश्यते। अतः अस्मात्, यत्पर्य्यन्तं मया कथितं, तस्मादित्यर्थः, परम् अवशिष्टभागः। पुनः समयान्तरे। प्राप्तः समागतः।

(श) अम्मो इति ससम्भ्रमविस्मयसूचकमव्ययम्। उत्थातुं, शय्यात इति शेषः।

(ष) उपचारयन्त्रणया उपचारेण समादरेण, सम्मानप्रदर्शनार्थं शय्यात उत्थानादिरूपशिष्टव्यवहारेणेति यावत्, या यन्त्रणा क्लेश-स्वीकरणं तया, अलमलं न कार्य्यं न कार्य्यमित्यर्थः, मदभ्यर्थनार्थं क्लेश-स्वीकारेण प्रयोजनं नास्तीति निष्कर्षः। अलमिति वारणार्थकमव्ययम्, "अलं भूषणपर्य्याप्ति-शक्तिवारणवाचकम्"इत्यमरः।

उपचारप्रदर्शननिषेधे कारणमाह, अनुचितेति।—कलभाषिणि! हे मधुरवादिनि! अनुचितः अनभ्यस्तः, पूर्वं कदाऽपि न सञ्जात इति यावत्, नूपुरविरहः नूपुरशून्यता यस्य तादृशं, कदाचिदपरित्यक्तनूपुरं, पूर्वं सततं नूपुरसद्भावात् चरणमिदं सुन्दरतरदर्शनमासीत्, इदानीं चरणे वेदनाबाहुल्येन तत्परित्यागात् अनभ्यस्तभूषणशून्यचरणदर्शनानामस्माकं तदतीव पीड़ाकरं भवतीति भावः, तपनीयपीठिकालम्बि स्वर्णमय-क्षुद्रासनस्थितं, क्षुद्रस्वर्णासने संस्थापितमिति यावत्, "स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्। तपनीयम्" इत्यमरः; रुजापरीतं वेदनाऽभिभूतं, चरणं तव पादं, माच्च—तव चरणपीड़ादर्शनेन अनूपुरचरणदर्शनेन च रुजापरीतं माञ्चेति भावः, पीड़यितुं व्यथयितुं, नार्हसि न योग्या भवसि, मां सवर्द्धयितुं त्वमुत्तिष्ठसि चेत् तदा उत्थानवेगेन रुजार्त्तचरणस्य ते

धारि। जेदु जेदु अज्जउत्तो। *

परि। विजयतां देवः।

राजा। [ परिव्राजिकां प्रणम्योपविश्य च ]। देवि! अपि सह्या वेदना? ( स )

धारि। अत्थि मे बिसेसो। † ( ह )

[ ततः प्रविशति यज्ञोपवीतसंवीताङ्गुष्ठः सम्भ्रान्तो विदूषकः ]। ( क )

विदू। परित्ताअदु परित्ताअदु भवं। सप्पेणम्हि दट्ठो। ‡

[ सर्वे विषण्णाः ]।

राजा। कष्टम्!! कष्टम्!! क्व भवान् परिभ्रान्तः? ( ख )

---

* जयति जयति आर्य्यपुत्रः इति सं०।

† अस्ति मे विशेषः इति सं०।

‡ परित्रायतां परित्रायतां भवान्। सर्पेणास्मि दष्टः इति सं०।

---

अधिका पीडा भवितुमर्हति, तच्च मामतीव पीडयिष्यतीति न त्वया उत्थातव्यमिति भावः। श्लोकेऽस्मिन् चरणं माञ्च इत्यनयोः प्रस्तुतयोः एक-पीडनक्रियाभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः, स च राज्ञः पीडां प्रति देव्याश्चरणपीडायाः नूपुरशून्यतायाश्च हेतुत्वात् काव्यलिङ्गसङ्कीर्णः। आर्य्या जातिः॥ ३॥

( स ) अपि प्रश्ने। वेदना चरणपीड़ा, सह्या? सोढुं शक्या किम्? पूर्वमपेक्ष्य वेदना किञ्चित् स्वल्पीभूता किम्? इत्यर्थः।

( ह ) विशेषः पार्थक्यं, पूर्वं यादृशी आसीत् इदानीं तदपेक्ष्य स्वल्पा जाता इत्यर्थः। "अत्थि" इत्यत्र "अज्ज अत्थि" इति क्वचित् पाठः, अद्य अस्ति इति तस्य सं०।

( क ) यज्ञेति।—यज्ञोपवीतेन यज्ञसूत्रेण, संवीतः दृढतया बद्धः, अङ्गुष्ठः यस्य सः। सम्भ्रान्तः प्राप्तसाध्वसः, भीतः इत्यर्थः, "सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि" इति मेदिनी; यद्वा—सम्भ्रान्तः त्वरितः, त्वरान्वित इत्यर्थः, "सम्भ्रमस्त्वरा" इत्यमरः।

(ख) कष्टं कष्टमिति खेदातिशय्ये द्विरुक्तिः। परिभ्रान्तः? पर्य्यटनं कृतवान्?

विदू। देवीं देक्खिस्संत्ति आआरपुप्फकारणादो पमदवणं गदोम्हि। * (ग)

धारि। हद्धी !! हद्धी !! अहं ज्जेव्व जीविदसंसअणिमित्तं जादा बम्हणस्स। † (घ)

विदू। तहिं असोअस्सपुप्फकारणादो पसारिदो दक्खिणहत्थो, तदो कोडरविणिग्गदेण सप्परूविणा कालेण दंसिदोम्हि। णं एदाणि दुवे दंसणपदाणि। ‡ [इति दर्शयति]। ' (ङ)

* देवीं द्रक्ष्यामीत्याचारपुष्पकारणात् प्रमदवनं गतोऽस्मि इति सं०।

† हा धिक् !! हा धिक् !! अहमेव जीवितसंशयनिमित्तं जाता ब्राह्मणस्य इति सं०।

‡ तस्मिन्नशोकस्यपुष्पकारणात् प्रसारितो दक्षिणहस्तः, ततः कोटरविनिर्गतेन सर्परूपिणा कालेन दंशितोऽस्मि। नन्वेते द्वे दंशनपदे इति सं०।

(ग) आचारेति।—आचारपुष्पम् आचारार्थं लोकाचारपालनाय शिष्टाचारपालनाय वा पुष्पं, कश्चिदुपहारं दत्त्वा राजदर्शनस्य लोकशिष्टाचारसम्मतत्वात् देवीदर्शनार्थं पुष्पचयनमित्यर्थः, तस्य कारणात् हेतोः, पुष्पचयननिमित्तमित्यर्थः। "आआरपुप्फकारणादो" इत्यत्र "आआरपुप्फग्गहणकारणादो" इत्यधिकः पाठः क्वचित्।

(घ) हा धिक् !! हा धिक् !! इति आत्मभर्त्सनं, "धिक् निर्भर्त्सननिन्दयोः" इत्यमरः, आतिशय्ये द्विरुक्तिः। ब्राह्मणस्य विदूषकस्य। एतेन आत्मनः ब्रह्महत्यापापभागित्वं सूच्यते।

(ङ) अशोकस्यपुष्पकारणात् अशोकवृक्षस्थितकुसुमग्रहणहेतोः। कोटरविनिर्गतेन अशोकवृक्षस्थरन्ध्रात् वहिर्गतेन। सर्परूपिणा सर्पदेहधारिणा, कालेन यमेन। "असोअ दंसिदोम्हि" इत्यत्र "असोअत्थवअकारणादो पसारिदे दक्खिणहत्थे कोड़रणिग्गदेण सप्परुवेण कालेण दट्ठोम्हि" इति पाठे—अशोकस्तवककारणात् प्रसारिते दक्षिणहस्ते कोटरनिर्गतेन सर्परूपेण कालेन दष्टोऽस्मि इति सं०। ननु भोः! इति राज्ञः

परिव्राजिका।—

छेदो दंशस्य दाहो वा क्षतस्यारक्तमोक्षणम्।
एतानि दष्टमात्राणामायुष्याः प्रतिपत्तयः॥ ४॥

सम्प्रति विषवैद्यानां कर्म। (च)

राजा। जयसेने। ध्रुवसिद्धिः क्षिप्रमाहूयताम्। (छ)

प्रती। जं देवो आणवेदि। * [इति निष्क्रान्ता]।

* यद्देव आज्ञापयति इति सं०।

आमन्त्रणम्। दंशनपदे दंशनस्थानद्वयम्; दंशनस्य लक्ष्मद्वयमिति वा, दन्तचिह्नद्वयमित्यर्थः, सर्पः दंष्ट्राद्वयेन यत् स्थानद्वयं दष्टवान् तदिदं दृश्यते इति यावत्, "पदं व्यवसितित्राण-स्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः। "इति दर्शयति" इत्यत्र "इति दंशं दर्शयति" इति क्वचिदधिकः पाठः। "इति दर्शयति" इत्यनन्तरं "छेदो दंशस्य" इत्यादि श्लोकस्य प्राक् "परि। तेन हि दंशच्छेदः पूर्वकर्मेति श्रूयते, स तावदस्य क्रियताम्" इत्यधिकः पाठः क्वचित् दृश्यते।

परिव्राजिका सर्पविषस्य निष्कासनार्थम् उपायविशेषमुपदिशति, छेद इति।—दश्यते अत्र इति दंशः दष्टस्थानं, दंशनस्याश्रयीभूतावयवः इत्यर्थः, तस्य छेदः अस्त्रेण विदारणं, वा अथवा, दाहः अग्निना दहनं, तथा क्षतस्य दष्टव्रणस्य, आरक्तमोक्षणं सम्यक्शोणितनिःसारणम्, "क्षतस्यारक्तमोक्षणम्" इत्यत्र "क्षतैर्वा रक्तमोक्षणम्" इति पाठान्तरम्; एतानि छेद-दाह-रक्तमोक्षणानि, दष्टमात्राणां दंशनानन्तरमेवेत्यर्थः, सर्पदष्टानां सद्य एव जनानामित्यर्थो वा, आयुष्याः आयुषे हिताः, जीवन-रक्षिका इति यावत्, प्रतिपत्तयः उपायाः, एतेषु यः कश्चित् उपायः अविलम्बमेव कार्य्य इति निष्कर्षः। अनुष्टुप् वृत्तम्॥ ४॥

(च) विषवैद्यानां विषचिकित्सकानां, कर्म कार्य्यं, कश्चित् विषवैद्यः सत्वरमेव आनेतव्यः इत्यर्थः। पाठोऽयं क्वचित् राजोक्तित्वेन परिकल्पितः।

(छ) ध्रुवसिद्धिः ध्रुवा निश्चिता, सिद्धिः साफल्यम्, आरोग्यमिति यावत् यस्मात् सः, तन्नामा राज्ञः कश्चित् विषवैद्य इत्यर्थः।

विदू। अहो। पाविण मिच्चुणा गिह्णीदोम्हि। * (ज)

राजा। मा कातरो भूः। अविषोऽपि कदाचिद्दंशो भवेत्।(झ)

विदू। कहं ण भाइस्सं, सिमिसिमाअंति मे अंगाइं। †

[ इति विषवेग रूपयति ]। (ञ)

धारि। हा। हा। दंसिदं बिआरेण, अबलंबध बम्हणं। ‡(ट)

[ परिव्राजिका ससम्भ्रममवलम्बते ]। (ठ)

---

* अहो! पापेन मृत्युना गृहीतोऽस्मि इति सं०।

† कथं न भेष्यामि, सिमिसिमायन्ते मेऽङ्गानि इति सं०।

‡ हा! हा! दंशितं विकारेण, अवलम्बध्वं ब्राह्मणम् इति सं०।

---

( ज ) पापेन पापकारिणा, मम अकालमृत्युसङ्घटनाय उद्योग-करणादिति भावः।

( झ ) कातरः भयाद्भीरुः। दंशः दंशनं, कदाचित् अविषोऽपि विषशून्योऽपि, निर्विषसर्पेणापि दंशनसम्भवात् आदित एव ईदृशकातरता-प्रकाश. न युक्त इति भावः।

( ञ ) सिमिसिमायन्ते सिमिसिम कुर्वन्ति,वाचा अवर्णनीया "झिम् झिम्" इति सञ्ज्ञिका पीड़ामनुभवन्तीत्यर्थः। "सिमिसिम" इति शब्दात् "लोहितादिडाज्भ्य. क्यष्"इति सूत्रेण क्यष्। रूपयति नाटयति, अभि-नयतीत्यर्थः। विषवेगं वैवर्ण्यादिकं विषस्य प्रभावं, तथा चोक्तं वसन्त-राजीये—"वैवर्ण्यं वेपथुर्दाहः फेनः स्कन्धस्य भञ्जनम्। दुःखं जाड्यं मृतिश्चेति विषवेगाः स्युरष्टधा॥" इति।

( ट ) हा! हा! इति खेदे। विकारेण विषवेगकुपितधातु-वैषम्येण, वैवर्ण्यादिलक्षणेनेत्यर्थः। दंशितम् आक्रान्तमित्यर्थः। "दंशिदं बिआरेण" इत्यत्र "दंशिदं असुहं बिआरेण" इत्यधिक पाठ. क्वचित्। "असुहं" इत्यस्य"अशुभम्"इति संस्कृतम्। अवलम्बध्वं धारयत, यूयमिति शेषः, नो चेत् भूतले पतेदिति भावः।

( ठ ) ससम्भ्रमं सत्वरं, "सम्भ्रमः त्वरा" इत्यमरः।

विदू। [ राजानमवलोक्य ]। भो। बालपिअवअस्सोम्हि तुए; अविआरेण अपुत्ताए जणणीए जोगक्खेमं वहेहि। * (ड)

राजा। मा भैषीः। अचिरात् त्वां वैद्यश्चिकित्सिष्यति, स्थिरो भव। (ढ)

जयसेना। [ प्रविश्य ]। आणविदो धुवसिद्धी विण्णवेदि, इहज्जेव्व गोदमो आणीअदुत्ति। † (ण)

---

* भो! बालप्रियवयस्योऽस्मि ते, अविकारेणापुत्राया जनन्या योगक्षेमं वह इति सं०।

† आज्ञप्तो ध्रुवसिद्धिर्विज्ञापयति, इहैव गौतम आनीयतामिति इति सं०।

---

( ड ) बालप्रियवयस्योऽस्मि ते—अहं शैशवमारभ्य तव प्रियसुहृत्। अविचारेण किमपि विचारमकृत्वा, मम प्रियवयस्यः लोकान्तरं गतः, इदानीं तस्य परिजनान् प्रति मम किमपि कर्त्तव्यमस्ति न वा इत्यादि वितर्कमकृत्वैवेत्यर्थः, "अविआरेण" इत्यस्य अविकारेण इत्येवं संस्कृते सति मम नाशेऽपि आवयोः सौहार्दस्य अनन्यथाभावेन इत्यर्थः। अपुत्रायाः एकमात्रपुत्रस्य मम मरणात् पुत्रहीनायाः। योगक्षेमम् अप्राप्तस्य प्रापणं योगः, प्राप्तस्य परिरक्षणं क्षेमं, "अप्राप्तप्रापको योगः क्षेमं प्राप्तस्य रक्षणम्" इत्युक्तेः; योगेन सह क्षेमं योगक्षेमं, शाकपार्थिवादिवत् समासः; मम जनन्याः अभावपूरण-रक्षणाविक्षणादिरूपं तत्त्वावधानं, वह कुरु इत्यर्थः। "भो! ··वहेहि" इत्यत्र "भो! भवदो बल्लादोवि पिअवअस्सोम्हि; तं विआरिअ अपुत्ताए मे जणणीए जोगक्खेमं वहेसु" इति पाठे—भोः! भवतो बाल्यादपि प्रियवयस्योऽस्मि; तं विचार्य्य अपुत्राया मे जनन्या योगक्षेमं वह इति सं०।

( ढ ) मा भैषीः न विभीहि, भयं मा कुरु इत्यर्थः। वैद्यः विष-चिकित्सकः। स्थिरो भव धैर्य्यं धारय। चिकित्सिष्यति नीरोगं करिष्यति।

( ण ) आज्ञप्तः भवता आदिष्टः। विज्ञापयति निवेदयति, भवन्तमिति शेषः।

राजा। तेन हि वर्षवरप्रतिगृहीतमेव तत्रभवतः सकाशं प्रापय। (त)

जय। तहा। * (थ)

विदू। [देवीं विलोक्य]। भोदि। जीवेअं ण वा, जं मए तत्तभवंतं सेवमाणेण दे अवरद्धं, तं मरिसेहि। † (द)

धारि। दीहाउसो होहि। ‡

[निष्क्रान्तौ विदूषक' प्रतीहारी च]

राजा। प्रकृतिभीरुस्तपस्वी ध्रुवसिद्धेरपि यथार्थनाम्नः सिद्धिं न मन्यते। (ध)

---

* तथा इति स०।

† भवति! जीवेयं न वा, यन्मया तत्रभवन्तं सेवमानेन तेऽपराद्धं, तन्मर्षयस्व इति स०।

‡ दीर्घायुर्भव।

---

(त) वर्षवरप्रतिगृहीतं वर्षवरेण षण्ढेन, "खोजा" इति ख्यातेन अन्तःपुररक्षकेण आकृष्टाण्डपुरुषविशेषेणेत्यर्थः, "षण्ढो वर्षवरस्तुल्यौ" इत्यमरः; प्रतिगृहीतं धृतम्, अन्यथा भूतले पतनसम्भावना इति भावः। तत्रभवतः माननीयध्रुवसिद्धेः। प्रापय नय।"वर्षवरप्रतिगृहीतमेव" इत्यत्र केवलं "प्रतिगृहीतमेनम्" इति क्वचित् पाठः।

(थ) तथा, अस्तु इति शेषः, भवदादेशं प्रतिपालयामीत्यर्थः।

(द) जीवेयं न वा इत्यत्र न जानामि इति शेषः, यदि न जीवेयं तदा इति भावः। तत्रभवन्तं माननीयं प्रियवयस्यं, सेवमानेन आराधयता, तस्य सन्तोषं साधयता इत्यर्थः। मर्षयस्व क्षमस्व।

(ध) प्रकृतिभीरुः स्वभावत एव भयशीलः, अत एव तपस्वी अनुकम्पार्हः, गौतम इति शेषः। यथार्थनाम्नः सार्थकनाम्नः, विषचिकित्सायां सर्वत्रैव निश्चितसाफल्यलाभात् ध्रुवा निश्चिता, सिद्धिः आरोग्यं यस्मादिति अन्वर्थसंज्ञकस्येत्यर्थः। सिद्धिं निजारोग्यप्राप्तिमित्यर्थः, न मन्यते न

जयसेना। [प्रविश्य] जेदु जेदु भट्टा। धुवसिद्धी विसुवेदि, उदकुंभविधाणेण सप्पमुद्दिआ कप्पिदव्वा, ता अण्णेसीअदुत्ति। * (न)

धारि। एदं सप्पमुद्दिअं अंगुलीअअं। पच्छा मह हत्थे देहि णं। † (प)

राजा। जयसेने! कर्मसिद्धावाशु प्रतिपत्तिमानय। (फ)

---

* जयति जयति भर्त्ता। ध्रुवसिद्धिर्विज्ञापयति, उदकुम्भविधानेन सर्पमुद्रिका कल्पितव्या, तदन्विष्यतामिति इति स०।

† एतत् सर्पमुद्रिकमङ्गुलीयकम्। पश्चान्मम हस्ते देह्येतत् इति स०।

---

विश्वसिति। "ध्रुव· मन्यते" इत्यत्र "ध्रुवसिद्धिमपि यथार्थनामानं सिद्धिमन्तं न मन्यते" इति पाठान्तरम्।

(न) उदकुम्भविधानेन अगदतन्त्रोक्तसर्पविषचिकित्सायाः प्रकारभेदेन, तदुक्तविधानानुसारेणेत्यर्थः, सर्पमुद्रिका सर्पविषहारिमणियुक्ताङ्गुरीयकमुद्राविशेष., कल्पितव्या विधातव्या, उदकुम्भविधानेन सर्पमुद्रिकया कोऽपि चिकित्साविशेषः, करणीयः इत्यर्थः। अन्विष्यतां, सर्पमुद्रिकेति शेष.। "सप्पमुद्दिआ कप्पिदव्वा" इत्यत्र "सप्पमुद्दिअ किंपि कप्पिदव्वं" इति पाठे—सर्पमुद्रिकं किमपि कल्पयितव्यम् इति स०।

(प) सर्पमुद्रिकम् अङ्गुलीयकं सर्पविषहारिमणिसंयुक्ताङ्गुरीयकमुद्राविशेषः। पश्चात् कार्य्यसिद्ध्यनन्तरम्।

(फ) "जयसेने!" इत्यस्य प्राक् "प्रतीहारी गृहीत्वा प्रस्थिता" इति क्वचिदधिकः पाठः। कर्मसिद्धौ कार्य्यसमाप्तौ सत्यां, गौतमस्य आरोग्यलाभानन्तरमित्यर्थः, आशु शीघ्रं, प्रतिपत्तिं प्रवृत्तिं, आरोग्यप्राप्तिवार्त्तामित्यर्थ., "प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च। सम्प्राप्ते च प्रबोधे च पदप्राप्तौ च योषिति॥" इति मेदिनी; आरोग्यलाभानन्तरमेव तत्संवादं सत्वरमानय, यतस्तदर्थमतीवोत्कण्ठिता वयमिति निष्कर्षः। यद्वा—प्रतिपत्तिं यथायोग्यस्थानप्रापणं, राज्ञीसमीपमित्यर्थः।

जय। जं देवो आणवेदि। * [इति निष्क्रान्ता]।

परि। यथा हृदयमाचष्टे तथा निर्विषो गौतमः। (ब)

राजा। भूयादेवम्। (भ)

जयसेना। [पुनः प्रविश्य]। जेदु जेदु भट्टा। णिव्वुत्तविसवेगो गोदमो मुहुत्तेण पकिदित्थो संवुत्तो। † (म)

धारि। दिट्ठिआ वअणीआदो मुत्तम्हि। ‡ (य)

प्रती। एसो उण वाहृतओ अमच्चो विण्णवेदि—राअकज्जं बहु मंतिदव्वं। दंसणेण अणुग्गहं इच्छामि त्ति। § (र)

---

* यद्देव आज्ञापयति इति सं०।

† जयति जयति भर्त्ता। निवृत्तविषवेगो गौतमो मुहूर्त्तेन प्रकृतिस्थः संवृत्तः इति सं०।

‡ दिष्ट्या वचनीयान्मुक्ताऽस्मि इति सं०।

§ एष पुनर्वाहृतकोऽमात्यो विज्ञापयति—राजकार्य्यं बहु मन्त्रयितव्यम्; दर्शनेनानुग्रहमिच्छामीति इति सं०।

---

(ब) हृदयम् अन्तःकरणं, (कर्त्तृ) आचष्टे कथयति। तथा तेन हेतुना इत्यर्थः, मन्ये इति शेषः।

(भ) एवं निर्विषः, भूयात्, गौतम इति शेषः। भूयादिति आशिषि लिङ्।

(म) निवृत्तविषवेगः अपगतविषप्रभावः, निर्विष इत्यर्थः। प्रकृतिस्थः स्वभावस्थः, अरोगः इत्यर्थः, संवृत्तः जातः।

(य) दिष्ट्या भाग्येन, मम सौभाग्यबलादित्यर्थः, यद्वा—दिष्ट्या हर्षेण, अतीवानन्दविषय इत्यर्थः। वचनीयात् लोकापवादात्, मुक्ताऽस्मि, गौतमस्यारोग्यलाभादिति शेषः, यदि गौतमस्य किञ्चिदहितं भवेत् तदा देवीनिमित्तमेव गौतमस्य अकालमृत्युरभूदिति लोकनिन्दा मे कदाचिदपि नापगच्छेदिति भावः।

(र) वाहृतकः तन्नामा। बहु प्रभूतं, राजकार्य्यं मन्त्रयितव्यम्

धारि। गच्छदु अज्जउत्तो कज्जसिद्धीए। * (ल)

राजा। देवि! आतपाक्रान्तोऽयमुद्देशः, शीतक्रिया चास्या रुजः प्रशस्ता; तदन्यत्र नीयतां शयनीयम्। (व)

धारि। पालिआ! अज्जउत्तवअणं अणुचिट्ठध। † (श)

[परिजनस्तथा प्रक्रान्त]। (ष)

[निष्क्रान्ता देवी परिव्राजिका परिजनश्च]।

राजा। जयसेने! गूढेन पथा प्रमदवनं प्रापय। (स)

---

* गच्छत्वार्य्यपुत्रः कार्य्यसिद्धये इति सं०।

† पालिकाः! आर्य्यपुत्रवचनमनुतिष्ठत इति सं०।

---

आलोचयितव्यम्। दर्शनेन दर्शनलाभेन, अनुग्रहम् आत्मानमनुगृहीतमित्यर्थः, दर्शनलाभेन आत्मानमनुगृहीतं मन्तुमिति भावः।

(ल) कार्य्यसिद्धये राजकार्य्यसम्पादनार्थं, तस्यैव सर्वकर्मापेक्षया गुरुत्वादाशु सम्पादनीयत्वाच्चेति भाव.।

(व) आतपाक्रान्त. आतपेन प्रखररौद्रसन्तापेन, आक्रान्तः व्याप्तः, उत्तप्त इति यावत्। उद्देशः स्थानम्। अस्या रुजः अभिघातजनितवेदनायाः, शीतक्रिया शीतोपचारः, प्रशस्ता हिता, अभिघातजवेदनायां रक्तदुष्टित्वात्, रक्तदुष्टौ च शीतक्रियायाः शास्त्रसम्मतत्वादिति भावः। अन्यत्र छायाबहुलदेशे। शयनीयं शय्या।

(श) पालिकाः! रक्षिण्यः! रक्षयित्र्यः परिचारिकाः! इत्यर्थः, आर्य्यपुत्रवचनमनुतिष्ठत आर्य्यपुत्रस्य वाक्यानुसारेण इतः छायायां शय्यां नयत इत्यर्थः। "पालिआ!" इत्यत्र "वालिआओ" इति पाठे—बालिकाः! इति सं०।

(ष) परिजनः पालिका-परिचारिकाजनः, तथा प्रक्रान्तः राज्ञां आदेशं पालयितुमुपक्रान्तवानित्यर्थ। "परिजनस्तथा प्रक्रान्तः" इत्यत्र "परिजनः। तह" इति पाठः क्वचित्। तथा इति तस्य सं।

(स) गूढेन गुप्तेन, अप्रकाश्येनेत्यर्थः।

नय। एदु एदु देवो। * (ह)

राजा। जयसेने! ननु समाप्तकाम्यो गौतमः?। (क)

नय। अध इ। † (ख)

राजा।—

दृष्टाधिगमनिमित्तं प्रयोगमेकान्तसाध्यमपि मत्वा।
सन्दिग्धमेव सिद्धौ कातरमाशङ्कते चेतः॥ ५॥

---

* एतु एतु देवः इति सं०।

† अथ किम् इति सं०।

---

(ह) "एदु एदु" इत्यत्र "इदो इदो" इति पाठे—इत इतः इति स

(क) समाप्तकाम्यः पूर्णाभिलाषः, मालविका-वकुलावलिकयोरुद्धारार्थं योऽयं व्यापारस्तेन प्रक्रान्त, तत् तस्य पूर्णोऽभूत् किम्? इत्यर्थः। "समाप्तकाम्यः" इत्यत्र "समाप्तकरणीयः" इति पाठान्तरम्।

(ख) अथ किं—भवान् यत् ज्ञातुमुत्सुकः, तत् सम्पूर्णोऽभूदित्यर्थः, गौतम' मालविका-वकुलावलिके कारागृहात् उद्धारितवानिति भावः।

ननु कथं ते ईदृशः प्रश्नः? इत्याशङ्कायामाह, इष्टेति।—इष्टस्य काम्यवस्तुनः, अधिगमे प्राप्तौ, निमित्तं कारणं, कारणस्वरूपमित्यर्थः, प्रयुज्यते अनुष्ठीयते इति प्रयोगः उपायः तम्, एकान्तसाध्यमपि एकान्तम् असंशयं, निश्चितमित्यर्थः, साध्य सम्पाद्यं, फलमित्यर्थः, कार्य्यमिति यावत् यस्य तथाभूतमपि, निश्चितफलप्रदायकं सन्तमपीत्यर्थः, सिद्धौ कार्य्यसम्पादनाय, "सिद्धौ" इत्यत्र "सिद्धो" इति पाठान्तरम्; सन्दिग्धमेव संशयितमेव, प्रयुक्तोऽयमुपायः सिद्धिप्रदो भवितुमर्हति न वा इति सन्देहास्पदमित्यर्थः, मत्वा विविच्य, चेतः मनः, (कर्त्तृपदं) कातरम् अधीरं, सन्देहात् दोदुल्यमान यथा स्यात्तथेत्यर्थः, "चेतः" इत्यत्र "हृदयम्" इति पाठान्तरम्; आशङ्कते सशेते, मालविकाया उद्धारार्थं विदूषकोद्भावितोऽयमुपायः यद्यपि निश्चितमेव सफलो भविष्यति, तथाऽपि साफल्यविषये सन्दिग्धं मे चेतः कातरीभवति, यत ईदृश एव लोकानां स्वभाव इति भावः। श्लोके-

विदू। [प्रविश्य]। जेदु जेदु भवं। सिद्धाइं दे मंगल-कम्माइं। * (ग)

राजा। जयसेने। त्वमपि नियोगमशून्यं कुरु। (घ)

जय। जं देवो आणवेदि। † [इति निष्क्रान्ता]।

राजा। गौतम। क्षुद्रा माधविका, न खलु किञ्चिद्विचारित-मनया? (ङ)

विदू। देवीए अंगुलीअमुद्दिअं देक्खिअ कहं विआरेदि? ‡(च)

---

* जयति जयति भवान्। सिद्धानि ते मङ्गलकर्माणि इति सं०।

† यद्देव आज्ञापयति इति सं०।

‡ देव्या अङ्गुलीयमुद्रिकां दृष्ट्वा कथं विचारयति? इति सं०।

---

ऽस्मिन् लोकस्वभावरूपात् सामान्यादप्रस्तुतात् प्रस्तुतस्य विशेषस्य राज्ञः स्वभावस्य प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः। आर्या जातिः॥ ५॥

(ग) सिद्धानि सफलीभूतानि। मङ्गलकर्माणि ईप्सितकार्याणीत्यर्थः, मालविका-वकुलावलिकयोरुद्धारचेष्टा सफला जाता इति भावः। "जेदु जेदु" इत्यत्र "वड्ढदु" इति पाठे—वर्द्धतामिति सं०।

(घ) नियोगं स्वाधिकारं, द्वाररक्षणरूपनिजकार्य्यमित्यर्थः, अशून्यम् अविरहितं, सम्पन्नमित्यर्थः, कुरु विधेहि, द्वाररक्षणकर्मणि अवहिता भव इत्यर्थः, प्रतीहारीसमक्षं विदूषकेण सह मालविकोद्धारविषयकालापस्य अनौचित्यात् तदपसारणार्थमयं राजनिर्देश इति बोध्यम्।

(ङ) क्षुद्रा अल्पा, अल्पबुद्धिसम्पन्नेत्यर्थः। माधविका—मालविकायाः बन्धनागारद्वाररक्षणार्थं नियुक्ता तन्नाम्नी देव्याः काचित् परिचारिका। विचारितं वितर्कितं, संशयितमित्यर्थः। अनया माधविकया, यतः अस्मिन् विषये इयं न किमपि सन्देहं कृतवती, त्वदुक्तिमात्रेणैव मालविकां मोचितवती च, अत एव सा बुद्धिहीनेत्यर्थः।

(च) अङ्गुलीयमुद्रिकां मुद्राङ्कितमङ्गुरीयकमित्यर्थः। कथं किमर्थं, किमित्यर्थः, विचारयति वितर्कयति, सन्देग्धि इत्यर्थः, अङ्गुलीयमुद्रिकां

राजा। न खलु मुद्रामधिकृत्य ब्रवीमि, तयोर्द्वयोः किं निमित्तो मोक्षः, किं वा देव्या परिजनमतिक्रम्य भवान् सन्दिष्ट इत्येव तया प्रष्टव्यम्। (छ)

विदू। णं पुच्छिदोम्हि, मंदस्सवि पुणो मे तह पच्चुप्पसं उत्तरं आसि। * (ज)

राजा। कथ्यताम्।

विदू। भणिदा मए—देव्वचिंतएहिं विस्साविदो राआ "सोवसग्गं वो णक्खत्तं ; ता अवस्सं सव्वबंधमोक्खो करीअदु"त्ति।†(झ)

---

* ननु पृष्टोऽस्मि, मन्दस्यापि पुनर्मे तथा प्रत्युत्पन्नमुत्तरमासीत् इति स०।

† भणिता मया— दैवचिन्तकैर्विज्ञप्तो राजा "सोपसर्गं वो नक्षत्रम् ; तदवश्यं सर्वबन्धमोक्षः क्रियताम्" इति इति स०।

---

दृष्ट्वा मालविका-वकुलावलिके मोचनीये इति देव्या आदेशात् विषयेऽस्मिन् माधविकाया विचारस्य अनावश्यकत्वादिति भावः।

(छ) अधिकृत्य विषयीकृत्य, लक्ष्यीकृत्य इत्यर्थः। तयोर्द्वयोः मालविका-वकुलावलिकयोः। "तयोः" इत्यत्र "एतयोः" इति पाठान्तरम्। मोक्षः मुक्तिः। किं-वा कथं वा, केन हेतुना वेत्यर्थः। "देव्याः" इति षष्ठ्यन्तः पाठः क्वचित् दृश्यते। परिजनं परिग्रहं, निजपरिचारिकामित्यर्थः। अतिक्रम्य उल्लङ्घ्य, तासु काञ्चित् अनादिश्य इति यावत्। सन्दिष्टः आज्ञप्तः, तयोर्मोचनायेति शेषः। इति एतत् सर्वम्। तया माधविकया। "तया" इत्यत्र "अनया" इति पाठान्तरम्। प्रष्टव्यः जिज्ञासितव्यः, जिज्ञासितुमुचितमासीदित्यर्थः।

(ज) ननु भोः! ननु इति निश्चये वा, पृष्ट एवेत्यर्थः, माधविकयेति शेषः। मन्दस्यापि मूढस्यापि, अल्पबुद्धेरपि इत्यर्थः। तथा तादृक्, समयोचितमित्यर्थः। प्रत्युत्पन्न सप्रतिभं, सुसदृशमित्यर्थः। "मंदस्सवि ·· आसि" इत्यत्र "पुणो मंदस्स मे तस्सि पच्चुप्पसा मदी" इति पाठान्तरे— पुनर्मन्दस्य मे तस्मिन् प्रत्युत्पन्ना मतिः" इति स०।

(झ) दैवचिन्तकैः ज्योतिर्विद्भिः। भणिता उक्ता, माधविका

राजा। [सहर्षम्]। ततस्ततः ?

विदू। तं सुणिअ देवीए इरावदीए चित्तं रक्खंतीए "राआ किल मोअअदि" त्ति अहं संदिट्टोत्ति। तदो "जुज्जदि" त्ति ताए संपादिदो अत्थो। * (ञ)

---

* तत् श्रुत्वा देव्या इरावत्याश्चित्तं रक्षन्त्या "राजा किल मोचयति" इत्यहं सन्दिष्ट इति। ततो "युज्यते" इति तया सम्पादितोऽर्थः इति सं०।

---

वक्ष्यमाणवचनमिति शेषः। वो युष्माकं, तवेत्यर्थः, नक्षत्रं जन्मतारा, सोपसर्गं सोपप्लवं, ज्योतिःशास्त्रनिर्दिष्टपापग्रहवेधसूचितदैवोपद्रवेणाविष्टमित्यर्थः, तस्य च फलम् आर्थिकी शारीरी च विविधा पीडा सकलचेष्टानाञ्च वैफल्यमिति, तथा च—"ईहा-देहार्थहानि स्यात् जन्मर्क्षे उपतापिते" इति। "उपसर्गः स्मृतो रोगभेदोपप्लवयोरपि" इति मेदिनी। सर्वेति।—सर्वेषां, वन्दिनामिति शेषः, बन्धात् बन्धनात्, मोक्षः मुक्तिः। बन्धमोक्षे उपसर्गशान्तिमाह महाभारतीयशान्तिपर्वणि यथा—"बन्धमोक्षे सर्वशान्तिर्नृपाणामुपजायते" इति। सर्वेषां वन्दिनां मुक्तिदाने कृते राज्ञः सोपसर्गनक्षत्रदोषस्य शान्तिर्भविष्यतीत्याशयः।

(ञ) तत् दैवज्ञवचनम्। देव्या धारिण्या। इरावत्याश्चित्तं मनः, मनसः अन्यथाभावमित्यर्थः, मनोदुःखमिति यावत्, रक्षन्त्या परिहरन्त्या इत्यर्थः, "ममाप्रियकारिणीं मालविका देवी मोचितवती" इति मनसिकृत्य यथा इरावत्या मनोदुःखं न स्यात् तथा कुर्वत्या इति भावः। राजा किल मोचयति—मालविकां बकुलावलिकाञ्च महाराजः अमङ्गलाशङ्कापरिहारार्थं स्वयमेव मोचयति इति, सर्वान् विज्ञाप्य इति शेषः, अहं सन्दिष्टः आज्ञप्तः, अङ्गुलीयकमुद्रां दर्शयित्वा ते मोचयितुम् आदिष्ट इत्यर्थः। ततः मद्वचनश्रवणानन्तरं, युज्यते तव वचनमिदं सङ्गच्छते, इति एवम्, उक्त्वा इति शेषः, तया माधविकया, अर्थः प्रयोजनम्, अस्माकं प्रयोजनीभूतः मालविका-बकुलावलिकयोः मुक्तिरूपव्यापारः इत्यर्थः, सम्पादितः अनुष्ठितः। "मोअअदि" इत्यत्र "मोएदि" इति पाठान्तरेऽपि तुल्यमेवोभयोः रूपम्।

राजा। [विदूषकं परिष्वज्य] (ट)। सखे। प्रियोऽहं खलु तव।—

न हि बुद्धिगुणेनैव सुहृदामर्थदर्शनम्।
कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते॥ ६॥

विदू। तुवरदु भवं, समुद्दगेहके सहीसहिदं मालविअं ठाविअ भवंतं पच्चुग्गदोम्हि। * (ठ)

---

* त्वरतां भवान्, समुद्रगृहके सखीसहितां मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि इति सं०।

---

(ट) परिष्वज्य आलिङ्ग्य, स्वाभीष्टसम्पादनजनितसन्तोषादिति भावः।

"प्रियोऽहं तव" इति यदुक्तं, तत्र कारणं प्रदर्शयति, न हीति।— सुहृदां सखिनां, बुद्धिगुणेनैव केवलं प्रत्युत्पन्नमतिप्रभावेणैव, अर्थदर्शनं प्रयोजनसाक्षाल्लाभः, अभीष्टसिद्धिरिति यावत्, न हि नैव, किन्तु स्नेहेनापि प्रेम्णाऽपि, प्रणयेनापि इत्यर्थः, न केवल बुद्धिगुणेन इत्यपि-शब्दार्थः, सूक्ष्मः अन्यैर्दुर्बोधः, सामान्यजनैः सहसा उद्भावयितुमशक्यः इति यावत्, कार्य्यसिद्धिपथः अभीष्टसिद्धेरुपायः, उपलभ्यते उद्भाव्यते, बुद्धिनैपुण्य-स्नेहाभ्यामुभाभ्यामेव मिलिताभ्यां सुहृत् सुहृदां कार्य्यं सम्पादयतीत्यर्थः, त्वया हि स्वकीयप्रत्युत्पन्नमतिप्रभावेण मां प्रति स्नेहेन च ममेदं दुष्करं कार्य्यं साधितं, स्नेहाभावे ईदृशदुष्करकार्य्ये न कोऽपि प्रवर्त्तितुमर्हति, मयि स्नेह एवात्र तव प्रवृत्तिहेतुः, अतः प्रियोऽहं तवेति भाव.। श्लोकेऽस्मिन् सुहृदामर्थदर्शनरूपात् सामान्यादप्रस्तुतात् राज्ञः कार्य्यसिद्धिरूपस्य विशेषस्य प्रस्तुतस्य प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः। अनुष्टुप् वृत्तम्॥ ६॥

(ठ) त्वरतां सत्वरो भवतु। समुद्रगृहके समुद्रवद्गम्भीरजल-ह्रद-मध्यस्थगृहे, जलयन्त्रगृहे इत्यर्थो वा, "समुद्रगृहमित्युक्तं जलयन्त्रनिकेतनम्" इति हारावली। प्रशस्तार्थे कः। "समुद्दगेहके" इत्यत्र "समुद्दघरए" इति पाठान्तरेऽपि—समुद्रगृहके इति सं०। प्रत्युद्गतोऽस्मि उद्दिश्य समागतोऽस्मि।

राजा। अहमेनां सम्भावयामि। गच्छाग्रतः। (ड)

विदू। एदु एदु भवं। [परिक्रम्य]। एदं समुद्दगेहकं। * (ढ)

राजा। [साशङ्कम्]। वयस्य। एषा कुसुमावचयव्यग्रहस्ता सख्यास्ते इरावत्याः परिचारिका चन्द्रिका सन्निकृष्टमागच्छति। इतस्तावदावां भित्तिगूढ़ौ भवावः। (ण)

विदू। अह्नो। कुंभीलएहिं कामुएहिं अ परिहरणीआ चंदिआ। † (त)

---

* एतु एतु भवान्। एतत् समुद्रगृहकम् इति सं०।

† अहो! कुम्भीलकैः कामुकैश्च परिहरणीया चन्द्रिका इति सं०।

---

(ड) एनां मालविकाम्। सम्भावयामि संवर्द्धयामि, स्वयमेव तत्र गत्वा तां समादरयामि इति यावत्।

(ढ) "समुद्दगेहकं" इत्यत्र "समुद्दघरं" इति पाठान्तरम्।

(ण) कुसुमेति।—कुसुमानां पुष्पाणाम्, अवचये सङ्ग्रहे, व्यग्रः व्यासक्त, व्यापृत इत्यर्थः, "व्यग्रो व्यासक्त आकुले" इत्यमरः, हस्तो यस्याः सा। चन्द्रिका तन्नामिका। सन्निकृष्टं समीपम्। इतः अस्यां दिशि। भित्तिगूढ़ौ भित्तिना कुड्येन, गूढ़ौ गुप्तौ, प्राचीरान्तरालेऽदृश्यौ इत्यर्थः।

(त) कुम्भीलकैः चौरैः, कामुकैः स्मरार्त्तैः, चन्द्रिका ज्योत्स्ना, तन्नामिका इरावत्याः परिचारिका इति च व्यङ्ग्यार्थः; परिहरणीया परित्याज्या, चौराणां कामुकानाञ्च चन्द्रिकोदये अभीष्टसिद्धेर्व्याघातसम्भवादिति भावः। कुम्भीलकैः कामुकैश्च यथा ज्योत्स्नाऽपराख्या चन्द्रिका वर्जनीया, तथा चौरवत् गूढं गच्छता कामुकेन भवता चन्द्रिकानाम्नी परिचारिकाऽपि वर्जनीया इति अप्रस्तुतात् कुम्भीलक-कामुकसामान्यात् प्रस्तुतस्य चौरवदाचरतः कामुकस्य विप्रियस्य राज्ञः प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः, तथा अप्रस्तुत-प्रस्तुतयोरेतयोरेकपरिहरणरूपक्रियया सम्बन्धात् अप्रस्तुतप्रशंसोत्थापितं दीपकञ्च, किञ्च, ज्योत्स्ना-परिचारिकयोर्भेदेऽपि श्लिष्टार्थकेन चन्द्रिकाशब्देन अभेदाध्यवसायात् अतिशयोक्तिश्च इत्येषामङ्गाङ्गिभावेनावस्थानात् सङ्करः।

[ उभौ यथासमर्थितं कुरुतः ]। (थ)

राजा। कथं नु ते सखी मां प्रतिपालयति, एहि, एनां गवाक्षमाश्रित्य यावदवलोकयामि। (द)

विदू। तहा। * (ध)

[ उभौ विलोकयन्तौ स्थितौ ]। (न)

[ ततः प्रविशति मालविका बकुलावलिका च ]।

बकुला। सहि। पणम भट्टारं। †

माल। णमो दे जो पासदो पिट्ठदो अ पेक्खीअदि— ‡ (प)

राजा। शङ्के मे प्रतिकृतिं निर्दिशति। (फ)

---

* तथा इति सं०।

† सखि! प्रणम भर्त्तारम् इति सं०।

‡ नमस्ते यः पार्श्वतः पृष्ठतश्च प्रेक्ष्यते—इति सं०।

---

(थ) उभौ राज-विदूषकौ। यथासमर्थितं यथामन्त्रितं, मन्त्रणाऽनुरूपं भित्तेरन्तराले आत्मगोपनमित्यर्थः।

(द) ते सखी मालविका। प्रतिपालयति प्रतीक्षते। एनां ते सखीं मालविकाम्।

(ध) तथा, करोतु इति शेषः।

(न) उभौ राज-विदूषकौ। विलोकयन्तौ पश्यन्तौ, मालविकामिति शेषः।

(प) ते तुभ्यम्। यः यो भवान्। पार्श्वतः उभयोः पार्श्वयोः। पृष्ठतः पश्चाच्च। प्रेक्ष्यते दृश्यते,मयेति शेषः, सर्वदा अनुचिन्त्यमानत्वात् यत्र दृष्टिर्निक्षिप्यते तत्रैव दृश्यते इत्यर्थः, "सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे" इति महाजनोक्तेरिति भावः। क्वचित् "णमो दे" इत्येव पाठः।

(फ) शङ्के मन्ये। प्रतिकृतिम् आलेख्यम्। निर्दिशति लक्ष्यीकृत्य प्रणमतीत्यर्थः। एतेन तस्मिन् गृहे राज्ञः प्रतिकृतिरासीदिति प्रतीयते, एतच्च अग्रे इरावती-निपुणिकयोरालापावसरे व्यक्तीभविष्यति।

माल। [सहर्षं द्वारमवलोक्य]। "—हला! मं विप्पलंभेसि? *(ब)

राजा। हर्ष-विषादाभ्याम् अत्रभवत्याः प्रीतोऽस्मि।—(भ)

सूर्योदये भवति या सूर्यास्तमये च पुण्डरीकस्य।
वदनेन सुवदनायास्ते समवस्थे क्षणादूढे ॥७॥

* "—हला मां विप्रलम्भयसि? इति सं०।

(ब) सहर्ष—राजा आगच्छति इति मनसिकृत्य सहर्षं द्वारावलोकनं कृतमिति बोध्यम्। विप्रलम्भयसि? प्रतारयसि? द्वारदेशे दृष्टिनिक्षेपानन्तरं राजानमदृष्ट्वा विषादोक्तिरियं कृतेति मन्तव्यम्; भर्त्ता तु अत्र न दृश्यते, तत् कथं त्वया अहं तस्मै प्रणामं कर्त्तुमुपदिष्टा? इति भाव।

(भ) अत्रभवत्याः माननीयायाः, आदरणीयाया इति यावत्। हर्ष-विषादाभ्यां मां द्रक्ष्यति इति बुद्ध्या हर्षः, तददर्शने च विषादः ताभ्याम्।

प्रीतिकारणं विवृणोति, सूर्योदये इति।—पुण्डरीकस्य पद्मस्य, सूर्योदये सूर्यस्य उदयकाले, या विकाशरूपा अवस्था इत्यर्थः, सूर्यास्तमये च सूर्यस्य अस्तगमनकाले च, या सङ्कोचरूपा अवस्था इत्यर्थः, भवति जायते, सुवदनायाः सुमुख्याः मालविकायाः, वदनेन मुखेन, ते विकाशसङ्कोचात्मिके, हर्षोज्ज्वल-विषादमलिनात्मिके इति यावत्, समवस्थे सम्यगवस्थाद्वयं, क्षणात् क्षणकालमध्येनैव, ऊढे धृते, प्राप्ते इत्यर्थः, मद्दर्शनाशया आदौ मुखं हर्षेण समुज्ज्वलं, परक्षणे च आशाभङ्गात् विषादेन मलिनं जातमिति क्षणकालव्यवधानेनैव विपरीतावस्थाद्वयप्राप्त्या वैचित्र्यविशेषदर्शनेन प्रीतोऽस्मीति समुदितार्थः। अत्र अन्यस्यावस्थां कथमन्यो वहतु इति वस्तुसम्बन्धासम्भवात् पुण्डरीकस्य समवस्थे इव समवस्थे ऊढे इति बिम्बानुबिम्बभावबोधनात् असम्भवद्वस्तुसम्बन्धरूपनिदर्शनाऽलङ्कारः, यदुक्तं दर्पणकारेण—"सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वाऽपि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना॥" इति; तेन च मालविकामुखस्य पुण्डरीकसादृश्यं व्यज्यते इति। आर्य्या जातिः॥ ७॥

बकुला। णं एस चित्तगदो भट्टा चिट्ठदि। * (म)

उभे। [प्रणिपत्य]। जेदु जेदु भट्टा। †

माल। तह्नि संभमे ठिदा भट्टिणो रूवस्स ण तह वितिण्ह-म्हि, जह अज्ज सए भाविदो अवितिण्हदंसणो भट्टा। ‡ (य)

* नन्वेष चित्रगतो भर्त्ता तिष्ठति इति स०।

† जयति जयति भर्ता इति स०।

‡ तस्मिन् सम्भ्रमे स्थिता भर्त्तुः रूपस्य न तथा वितृष्णाऽस्मि,यथाऽद्य मया भावितोऽवितृष्णदर्शनो भर्त्ता इति स०।

(म) चित्रगतः आलेख्ये अङ्कितः, अहं चित्रगतं भर्त्तारं प्रयान्तुं त्वामुपादिशम् अतो न विप्रलम्भयामीति भावः।

(य) तस्मिन् अभिनयकरणकाले अशोकदोहदप्रदानकाले वा,सम्भ्रमे त्वरायाम्, अभिनयप्रदर्शनजनितत्वराहेतोः अशोकदोहदप्रदानजनित-त्वराहेतोर्वा इत्यर्थः, "सम्भ्रमस्त्वरा"इत्यमरः, यद्वा—सम्भ्रमे साध्वसे, भीत-भावे इत्यर्थः,"सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि" इति मेदिनी; स्थिता अवस्थिता, अभिनयकाले देव्याः समक्षं भीतभावेन भर्त्तारं सम्पूर्ण-भावेन द्रष्टुमक्षमतया, प्रमदवने च केनचिद्दर्शनाशङ्कया निर्भयेण भर्त्तारं पूर्णदृष्ट्या द्रष्टुमक्षमतया वा अवस्थिता इत्यर्थः, भर्त्तुः राज्ञः, रूपस्य सौन्दर्य्यस्य सम्बन्धे, तथा तादृक्तया, न वितृष्णा विगता तृष्णा, निरा-काङ्क्षा इत्यर्थः, अस्मीति अहमर्थे अव्ययम्, अहं न निराकाङ्क्षा जाता इत्यर्थः, यथा यादृक्तया, अद्य इदानीमित्यर्थः, मया भावितः चिन्तितः, चित्रे दर्शनानन्तर तात्कालिकरूपं मनसा आलोचितः इत्यर्थः, भर्त्ता अवि-तृष्णदर्शनः नास्ति वितृष्णा आकाङ्क्षाभावः यस्मिन् तत् अवितृष्णं निरा-काङ्क्षं, दर्शनं यस्य स तादृशः, आकाङ्क्षणीयदर्शनः, सञ्जात इति शेषः, पूर्वं त्वरावशात् भयात् वा पूर्णदृष्ट्या भर्त्तारं द्रष्टुमक्षमतया तादृक्तया मे तद्दर्शनपिपासानिवृत्तिर्नाभूत्, यादृक्तया अधुनाऽपि चित्रगतं रूपं पूर्ण-भावेन पुनःपुनः दृष्ट्वाऽपि पूर्वदृष्टरूप विचिन्त्य च प्रत्यक्षतो दर्शनालाभात् दर्शनपिपासा मे न निवर्त्तते इत्यर्थः, तस्य कमनीयरूपं यथा यथा

विदू। सुदं भवदा ? णं किं अत्तभोदी तुए जह दिट्ठा, तह ण दिट्ठो भवं ? सुधा दाणिं मंजूसा विअ रअणभांडं जोव्वणगव्वं वहेसि। * (२)

---

* श्रुतं भवता ? ननु किमत्रभवती त्वया यथा दृष्टा, तथा न दृष्टो भवान् ? सुधेदानीं मञ्जूषेव रत्नभाण्डं यौवनगर्वं वहसि इति स०।

---

चिन्तयामि, तथा तथा मे साक्षात् दर्शनपिपासा वर्द्धते इति भावः। एतेन राज्ञः अतुलनीयसौन्दर्य्यं मालविकायाश्च अनुरागातिशय्यं व्यज्यते इति। "तहिं ·अज्ज" इत्यत्र "हला ! तदा संभमदिट्टे भट्टिणो रूवे जहा ण वितिण्हम्हि, तहा अज्जवि" इति पाठान्तरे—हला ! तदा सम्भ्रमदृष्टे भर्त्तुः रूपे यथा न वितृष्णाऽस्मि, तथा अद्यापि इति स०।

(२) श्रुतं भवता ? मालविकावचनमिति शेषः। ननु इति प्रश्ने, त्वया अत्रभवती माननीया मालविका, यथा येन प्रकारेण, यादृगनुरागातिशय्येन इत्यर्थः, दृष्टा, तथा तादृगनुरागातिशय्येन इत्यर्थः, भवान् न दृष्टः किम् ? मालविकयेति शेषः, अपि तु दृष्ट एवेत्यर्थः। "ण ·भव" इत्यत्र "तत्तभोदी चित्ते जहा दिट्ठो, तहा दिट्ठो भवं त्ति मतेदि" इति पाठे—तत्रभवती चित्ते यथा दृष्टः, तथा दृष्टो भवानिति मन्त्रयति इति स०। मञ्जूषा "पेट्रा" "सिन्दुक" इति च ख्यातः पेटकः, "पिटकः पेटकः पेटा मञ्जूषा" इत्यमरः; रत्नभाण्डमिव मणिमयभूषणमिव, मण्याधारपात्रमिव इति वा, "भाण्ड पात्रे वणिङ्मूलधने भूषाऽश्वभूषयोः" इति मेदिनी; सुधा वृथा, "व्यर्थके तु वृथा सुधा" इत्यमरः। मञ्जूषा यथा रत्नभाण्डं वहन्त्यपि चन्दनभारवाहि-गर्दभवत् तस्य उपभोगसुख न जानाति, तद्वत् त्वमपि "अहं युवा" इति गर्वं वहसि, परन्तु युवजनोचिते सानुरागसुन्दरीशिरोमणिसङ्गमसुखभोगे अयथाविलम्बकरणात् वृथैव ते स गर्वः इति भावः। यदा मालविकाऽपि तव एकान्तानुरागिणी, तदा युवा त्वं किमर्थं तदुपभोगे विलम्बं करोषि ? सत्वरं प्रत्यक्षीभूय उभयोरेव मनोरथं सफलीकुरु इति तात्पर्य्यम्।

राजा। सखे! कुतूहलवानपि निसर्गशालीनः स्त्रीजनः। (ल) पश्य—

कार्त्स्न्येन निर्वर्णयितुं च रूप-
मिच्छन्ति तत्पूर्वसमागमानाम्।
न तु प्रियेष्वायतलोचनानां
समग्रवृत्तीनि विलोचनानि॥ ८॥

माल। हला! का एसा पासपरिवत्तिदवअणेण भट्टिणा सिणिद्धाए दिट्ठीए णिज्झाअदि?* (व)

---

* हला! कैषा पार्श्वपरिवर्त्तितवदनेन भर्त्रा स्निग्धया दृष्ट्या निध्यायते? इति स०।

---

(ल) कुतूहलवान् औत्सुक्यवान्, प्रियजनदर्शनायेति शेषः। निसर्गशालीनः निसर्गात् स्वभावत एव, शालीनः सलज्जः, स्त्रीस्वभावसुलभलज्जावशात् मां दृष्ट्वा मालविका सङ्कुचिता भवति, एतदर्थमेव अहं सहसा एतत्समीपं गन्तुं न शक्नोमीति भावः।

स्त्रीणां निसर्गशालीनत्वमेव वर्णयति, कार्त्स्न्येनेति।—आयतलोचनानां दीर्घनेत्राणां, स्त्रीणामिति शेषः, विलोचनानि नयनानि, (कर्त्तृणि) तत्पूर्वसमागमानां तैः नेत्रैः, पूर्वं प्राक्, समागमः मिलनं येषां तादृशानां पूर्वं सकृद्दृष्टानां प्रियजनानामित्यर्थः, रूपं सौन्दर्य्यं,कार्त्स्न्येन च साकल्येनैव, सम्पूर्णदृष्ट्या एवेत्यर्थः, च कारोऽत्र एवार्थे; निर्वर्णयितुम् अवलोकयितुं, "निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः; इच्छन्ति अभिलष्यन्ति, सोत्सुकानि भवन्तीति यावत्, तु किन्तु, प्रियेषु तेषु प्रियजनेषु, तद्दर्शनायेत्यर्थः, "तु" इत्यत्र "च" इति पाठान्तरम्; समग्रवृत्तीनि सम्पूर्णव्यापारवन्ति, पूर्णदृष्ट्या पतितानीत्यर्थः, न, भवन्तीति शेषः, प्रियजनदर्शनाय ऐकान्तिकाग्रहे सत्यपि स्त्रियः स्वाभाविकलज्जावशात् तं पूर्णभावेन द्रष्टुं न शक्नुवन्ति, अपाङ्गेन क्षणमात्रं दृष्ट्वैव नतशिरस्काः भवन्ति च इति समुदितार्थः। श्लोकेऽस्मिन् अप्रस्तुतात् स्त्रीसामान्यात् मालविकारूपविशिष्टस्त्रियाः प्रतीतेः अप्रस्तुतप्रशंसा-

वकुला। णं इअं पासगदा इरावदी। *

माल। सहि! अदक्खिणो विअ मे भट्टा पडिभादि, जो सव्वं देवीअणं उज्झिअ एक्काए मुहे बद्धलक्खो। † (श)

वकुला। [आत्मगतम्]। चित्तगदं भट्टारं परमत्थदो संकप्पिअ असूअदि। भोदु, कीलिस्सं दाव एदाए। [प्रकाशम्]। हला! भट्टिणो वल्लहा एसा। ‡ (ष)

---

* नन्वियं पार्श्वगतेरावती इति सं०।

† सखि! अदक्षिण इव मे भर्त्ता प्रतिभाति, यः सर्वं देवीजनमुज्झित्वैकस्या मुखे बद्धलक्ष्यः इति सं०।

‡ चित्रगतं भर्त्तारं परमार्थतः सङ्कल्प्यासूयति। भवतु, क्रीड़िष्यामि तावदेतया। हला! भर्त्तुर्वल्लभैषा इति सं०।

---

ऽलङ्कारः। "कात्स्न्येंन निर्वर्णयितुम्" इत्यत्र दुःश्रवत्वदोषः। उपजाति वृत्तम् ॥ ८॥

(व) पार्श्वेति।—पार्श्वे पार्श्वदेशे, वामपार्श्वे इति यावत्, परिवर्त्तितं प्रत्यावर्त्तितं, वक्रीकृतमिति यावत्, वदनं मुखं येन तादृशेन। स्निग्धया प्रेमपूर्णया, सानुरागया इत्यर्थः। निध्यायते दृश्यते; "निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः।

(श) अदक्षिणः इव"एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः" इत्युक्त-दक्षिणनायकलक्षणात् विपरीत इव, एकस्यामेव अनुरागाधिक्य-प्रकटनादिति भावः। सर्वं देवीजनं सर्वामेव राज्ञीमित्यर्थः, देवीशब्दोऽत्र राज्ञ. स्त्रीमात्रवाचकः, न तु कृताभिषेकापरः, सर्वमिति विशेषणप्रयोगा-दिति बोध्यम्। बद्धलक्ष्यः स्थापितदृष्टिः।

(ष) चित्रगतम् आलेख्ये अङ्कितं, न तु वास्तविकमिति भावः। परमार्थतः यथार्थतः, सत्यमित्यर्थः, सङ्कल्प्य निश्चित्य, सत्यमेव पतिं विचिन्त्येत्यर्थः। असूयति ईर्ष्यति, इरावत्यामनुरागाधिक्यदर्शनात् अदक्षिणत्वरूपदोषमारोपयतीत्यर्थः। क्रीड़िष्यामि कौतुकं करिष्यामि, इरावत्याः प्रसङ्गमुत्थाप्य परिहासं करिष्यामीत्यर्थः। एतया मालविकया।

माल। तदो किं दाणि अत्ताणं आआसिअ। * [इति सासूयं परावर्त्तते]। (स)

राजा। सखे। पश्य पश्य,—

भ्रूभङ्गभिन्नतिलकं स्फुरिताधरोष्ठं
सासूयमाननमितः परिवर्त्तयन्त्या।
कान्तापराधकुपितेष्वनया विनेतुः
सन्दर्शितेव ललिताभिनयस्य शिक्षा॥ ८॥

* ततः किमिदानीमात्मानमायास्य इति सं०।

वल्लभा सर्वाभ्यः प्रियतमा। "असूअदि" "कीलिस्सं" इत्यत्र "असूइस्सदि" "कीलइस्सं" इति पाठान्तरद्वये—असूयिष्यति, क्रीड़यिष्यामि इति च सं०।

(स) ततः तस्मात्, इरावत्या एव भर्त्तुः प्रियतमत्वात्, आत्मानं स्वम्, आयास्य खेदयित्वा, किम् अत्र, प्रयोजनं नास्तीत्यर्थः, यद्वा—किम्? भविष्यतीति शेषः, "किं कुत्सायां वितर्के च निषेधप्रश्नयोरपि" इति मेदिनी; यदा इरावती एव भर्त्तुर्वल्लभा, तदा मयि तस्य अनुरागासम्भवात् अननुरक्ते आत्मसमर्पणं कृत्वा केवलं क्लेशमेव अनुभविष्यामि, अतोऽस्मात् निवृत्तिरेव मे श्रेयसीति भावः। "आआसिअ" इत्यत्र "आआसइस्सं" इति पाठे—आयासयिष्यामि इति सं०। परावर्त्तते विवृत्तमुखी भवति, चित्रदर्शनान्निवृत्य अन्यस्यां दिशि मुखं प्रत्यावर्त्तयतीत्यर्थः, "न मानिनीशं सहतेऽन्यसङ्गमम्" इति असूयया परावर्त्तनहेतुरिति भावः।

मालविकाया असूयया परावर्त्तनकालिकीं शोभां वर्णयति, भ्रूभङ्गेति।—अनया मालविकया, भ्रुवोः भङ्गेन कौटिल्येन, सङ्कोचनेनेत्यर्थः, भिन्नं विच्छिन्नं, मध्ये विच्छेदं प्राप्तमित्यर्थः, तिलकं विशेषकं, मृगमदादिविरचितः ललाटस्थप्रसाधनविशेष इत्यर्थः यत्र तादृशं, स्फुरितौ ईषत् कम्पितौ, अधरोष्ठौ ओष्ठाधरौ यत्र तादृशम्, अत्र अधरशब्दस्य पूर्वनिपातश्छन्दोऽनुरोधादिति बोध्यम्; यद्वा—स्फुरितः अधरोष्ठः निम्नरदनच्छदः यत्र तादृशम्, अस्मिन् पक्षे "अधरस्तु पुमानोष्ठे हीनेऽनूर्द्धे च वाच्यवत्" इति

विदू। अणुणअसज्जो दाणिं होहि। * (ह)

माल। अज्जगोदमो एत्थ ज्जेव्व सेवदि णम्। † [इति पुनः स्थानान्तराभिमुखी भवितुमिच्छति]। (क)

---

* अनुनयसज्ज इदानीं भव इति स०।

† आर्य्यगोतमः अत्रैव सेवते एनाम् इति स०।

---

मेदिनीवचनात् अधरशब्दस्य निम्नोर्द्ध्वोभयोष्ठबोधकत्वात् विशेषतो निम्नोष्ठ-बोधनार्थं प्रयोगः इति सुधीभिर्विभाव्यम्; आननं मुखम्, इतः चित्रगतात् मत्तः, सासूयं सेर्ष्यं यथा तथा, साभिमानं यथा स्यात्तथेति यावत्, परिवर्त्तयन्त्या अनया दिशि प्रत्यावर्त्तयन्त्या सत्या, स्वयं मच्चित्रपटात् विमुखी-भवन्त्या सत्या इत्यर्थः, कान्तस्य वल्लभस्य, अपराधेन दोषेण, नायिका-ऽन्तरसङ्गनादिजनितेनेति यावत्, कुपितेषु "क्तदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् कोपेषु विषयेषु, भावे क्तः; विनेतुः शिक्षकस्य, नाट्याचार्य्यस्य गणदासस्येत्यर्थः, कर्त्तरि षष्ठी; ललित. सुन्दर, यः अभि-नयः अवस्थाऽनुकारः तस्य, मनोहरभ्रूभङ्गाधरोष्ठस्फुरणादिरूपकोपव्यञ्जक-चेष्टाविशेषस्येत्यर्थः, कर्मणि षष्ठी; शिक्षा उपदेशः, सन्दर्शितेव प्रदर्शितेव, दृश्योऽयमतीव मनोहर. इति भावः। अत्र सन्दर्शितेवेति इवशब्द-प्रयोगात् वाच्या क्रियोत्प्रेक्षाऽलङ्कारः। वसन्ततिलकं वृत्तम्॥ ९॥

(ह) अनुनयसज्जः अनुनयाय मानभञ्जनार्थं चरणपतनादिरूप-सान्त्वनाय, सज्जः सज्जितः, उन्मुख इत्यर्थः, दयिताया मानभञ्जनस्य अवश्य-कर्त्तव्यत्वादिति भावः।

(क) अत्रैव अस्मिन् चित्रपटेऽपि, एनाम् इरावतीं, सेवते परि-चरति, राज्ञः अतिप्रियत्वात् एतस्याः मनोरञ्जनार्थं विविधप्रियवाक्येन प्रीणयतीत्यर्थः, एतेन चित्रपटे इरावत्याः समीपे विदूषकोऽपि चित्रित आसीदिति प्रतीयते। स्थानान्तराभिमुखी राज्ञ. विमुखीभूय यस्मिन् पार्श्वे मुखं प्रत्यावर्त्तितवती, तस्मादपि परावृत्तमुखी। चित्रपटेऽपि विदूषकस्य इरावत्याः मनोरञ्जनार्थं चेष्टादर्शनात् सैव राज्ञः अतिप्रिया इति प्रतीतिः राजनि आत्मसमर्पणे कृते स न कदाऽपि मदनुरागस्य

बकुला। [मालविका रुद्धा]। ण हि ण हि। कुविदा दाणिं तुमं? * (ख)

माल। जदि चिरं कुविदं ज्जेव्व मं मंतेसि, एस पच्चाणी-अदु कोवो। † (ग)

राजा। [उपेत्य]। (घ)—

कुप्यसि कुवलयनयने! चित्रार्पितचेष्टया कथय किमिदं मे?।
ननु तव साक्षादयमहमनन्यसाधारणो दासः ॥१०॥

* न हि न हि, कुपितेदानीं त्वम्? इति सं०।

† यदि चिरं कुपितामेव मा मन्त्रयसि, एष प्रत्यानीयतां कोपः इति सं०।

प्रतिदानं करिष्यति इति निश्चित्य एतस्मात् विरतिरेव मे श्रेयसीति मालविकोक्तेराशय इति भावः।

(ख) रुद्धा प्रतिनिवृत्य, स्थानान्तरगमनाय बाधां दत्त्वा इत्यर्थः। न हि न हि, स्थानान्तरं यातुमर्हसीति शेषः, चित्रगतमपि भर्त्तारमुपेक्ष्य स्थानान्तरगमनं ते नोचितमिति भावः। "ण हि ण हि" इत्यत्र "ण क्खु" इति पाठान्तरे—न खलु इति सं०। कुपितेदानीं त्वम्? त्वं किं क्रुद्धाऽसि? इति काकुः।

(ग) चिरं दीर्घकालम्। मन्त्रयसि विवेचयसि। "मंतेसि" इत्यत्र "मण्णेसि" इति पाठे—मन्यसे इति सं०। प्रत्यानीयतां प्रत्याहृत्यतां, निवार्य्यतामिति यावत्। "पच्चाणीअदु" इत्यत्र "पच्चाणेअदि" इति पाठे—प्रत्यानयति इति सं०। अहं कुपिताऽस्मि इति यदि त्वं विवेचयसि, तदा मम तत्कोपशान्त्युपायं विधेहीति मालविकोक्तेराशयः। एतेन अचिरमेव राजदर्शनम् अलप्स्ये चेत् मम कोपशान्तिरभविष्यदित्यभिप्रायः मालविकया प्रकटित इति भावः।

(घ) उपेत्य गत्वा, मालविकासमीपमिति शेषः।

"एस पच्चाणीअदु कोवो" इति मालविकोक्तिश्रवणेन मालविका-समीपं गन्तुमयमेव प्रकृष्टावसरः इति विविच्य गत्वा तस्याः कोपापशमनाय

वकुला। जेदु जेदु भट्टा। *

माल। [आत्मगतम्]। कहं !! चित्तगदो भट्टा मए असूइदो !! †
[ इति सव्रीडवदनमञ्जलिं करोति ]। (ङ)

* जयति जयति भर्त्ता इति सं०।

† कथम् !! चित्रगतो भर्त्ता मया असूयितः !! इति सं०।

आह, कुप्यसीति।—कुवलयनयने! हे नीलोत्पललोचने! मे मम, चित्रार्पितचेष्टया चित्रे आलेख्यपटे, अर्पिता विन्यस्ता, अङ्कितेत्यर्थः, या चेष्टा व्यापारः तया, इरावतीं प्रति सानुरागदृष्टिपातरूपभावविशेषेण इत्यर्थः,कुप्यसि क्रुध्यसि,मह्यमिति शेषः,इदं कोपप्रकटनं,किं कथम्? कथय ब्रूहि, न हि मया तव कोपकारणं किमपि अनुष्ठितम्,अतश्चित्रगतचेष्टायां गुरुत्वारोपस्ते नोचित इति भावः। "कथय किमिदं मे"इत्यत्र "किमेतन्मे" इति पाठान्तरम्। ननु इरावतीं प्रति ते सानुरागदृष्टिपातं प्रत्यक्षं दृष्ट्वाऽपि कथं न कुप्यामि? कथं वा त्वया "तव कोपकारणं किमपि नानुष्ठितम्"इति वक्तुं शक्यते? इति चेदाह, ननु इति।—ननु इति अनुनयार्थकमव्ययं, "प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ननु" इत्यमरः; साक्षात् प्रत्यक्षविषयीभूतस्वरूपः, न तु प्रतिमूर्त्तिरिति भावः, अयमहम् एषोऽहम्, (इति आत्मनिर्देशः) तव अनन्यसाधारणः न अन्यस्याः स्त्रियाः साधारणः सामान्यः, समानाधिकारसम्पन्न इत्यर्थः, त्वदेकाधीन इति यावत्, दासः सेवकः, अस्मीति शेषः, चित्रार्पिता मे प्रतिकृतिः इरावत्या सुखे यद्वलच्या तिष्ठति, साक्षादहन्तु तवैव एकान्तानुगतसेवकः त्वत्परिचर्यार्थमिह समुपस्थितोऽस्मि, यतः त्वमेव मे एकमात्रप्रियतमा, अतो मह्यमयं कोपस्ते न युज्यते इति भावः। श्लोकेऽस्मिन् "साक्षादयमहम्" इत्युक्तेः न तु मे चित्रगता मूर्त्तिरित्यन्यव्यपोहात् आर्थी परिसङ्ख्याऽलङ्कारः, स च कुवलयनयने इत्युपमया सङ्कीर्यते। आर्य्या जातिः॥ १०॥

(ङ) असूयित. ईर्ष्यित., ईर्ष्याविषयीकृत इत्यर्थः, इरावतीं प्रति सानुराग इति निश्चित्य भर्त्तुर्दाक्षिण्यादिगुणेषु दोषारोप. कृत इति भावः, "असूया तु दोषारोपो गुणेष्वपि" इत्यमरः। सव्रीडवदनं सलज्जमुख, स्वकृतदोषारोपस्य राज्ञा श्रवणात् इति भावः। "इति सव्रीडवदनम्"

[राजा मदनकातर्य्यं रूपयति।] (च)

विदू। किं भवं उदासीणो विअ दिसदि ? * (छ)

राजा। अविश्वसनीयत्वात् सख्यास्ते। (ज)

विदू। अत्तभोदीए कहं तव अविस्सासो ? †

राजा। श्रूयताम्।—

पथि नयनयोः स्थित्वा तिरोभवति क्षणात्
सरति सहसा बाह्वोर्मध्यं गताऽपि सखी तव।
मनसिजरुजाक्लिष्टस्यैवं समागममायया
कथमपि सखे। विश्रब्धं स्यादिमां प्रति मे मनः ? ॥११॥

* किं भवानुदासीन इव दृश्यते ? इति सं०।

† अत्रभवत्यां कथं तवाविश्वासः ? इति सं०।

इत्यत्र "प्रकाशं सव्रीड़वचनम्" इति, "इति सप्रणयवदनम्" इति च पाठान्तरद्वयम्।

(च) मदनकातर्य्यं कामातुरत्वम्, अनङ्गपीड़ाजनितामधीरता-मित्यर्थः, रूपयति नाटयति।

(छ) उदासीन इव निरपेक्ष इव, अनया सङ्गन्तुं निस्पृह इवेत्यर्थः, यदर्थम् एतावान् उद्योगः, तां पुरतो दृष्ट्वाऽपि कथं तूष्णीं तिष्ठसि ? अविलम्बमेव उभयोः अभिलाषं सफलय इति विदूषकोक्तेस्तात्पर्य्यम्।

(ज) ते सख्याः मालविकायाः, अविश्वसनीयत्वात् विश्वासायोग्यत्वात्, उदासीन इव दृश्ये इति शेषः; अभिलाषपूरणाय समुद्योगे कृतेऽपि तव सख्याः व्यवहारदर्शनेन स सफलीभविष्यतीति विश्वासाभावात् तूष्णीं तिष्ठामीति भावः

अविश्वासकारणं प्रदर्शयति, पथीति।—हे सखे! तव सखी एषा मालविका, नयनयोः चक्षुषोः, ममेति शेषः, पथि मार्गे, नेत्रगोचरे इत्यर्थः, स्थित्वा समागत्य, क्षणात् परक्षणे एव, आगमनादनन्तरमेवेत्यर्थः, तिरोभवति अन्तर्द्धत्ते, दर्शनं दत्त्वैव पलायते इत्यर्थः, बाह्वोः भुजयोः, मध्यम् अन्तरं, गताऽपि प्राप्ताऽपि,

बकुला। सहि! बहुसो किल भट्टा विप्पलद्धो; ता अत्ता वीस्ससणीओ करीअदु। * (भ)

* सखि! बहुशः किल भर्त्ता विप्रलब्धः, तदात्मा विश्वसनीयः क्रियताम् इति सं०।

आलिङ्गनबद्धाऽपीति यावत्, सहसा अतर्कितभावेन, सरति अपगच्छति, आलिङ्गनपाशाद्दृश्या भवतीत्यर्थः, सङ्कल्पवशात् यदा यदैव इमां मनसा अवलोकयितुम् आलिङ्गितुञ्च उद्यतो भवामि, तदा तदैव सङ्कल्पान्तरोदयात् पूर्वसङ्कल्पापगमेन इयम् मनोमध्यादन्तर्हिता भवति, ईदृशव्यापारस्य पुनःपुनर्भवनेन अतीव क्लिष्टोऽस्मीति भावः; एवम् उक्तरूपेण, समागममायया मिलनविषयकबुद्ध्या, अविलम्बमेव एतया सङ्गंस्ये अविलम्बमेव एतया सङ्गंस्ये इत्याशया इत्यर्थः, "माया स्यात् शाम्बरीबुद्ध्योः" इति मेदिनी; यद्वा—समागममायया मिलनविषयककपटताऽऽचरणेनेत्यर्थः, पुनः पुनः कपटताऽऽचरणेन अविश्वासकार्य्यानुष्ठानादिति यावत्, मनसिजरुजा अनङ्गपीड़या, क्लिष्टस्य पीड़ितस्य, मे मम, मनः चित्तं, (कर्त्तृपदम्) अपि प्रश्ने, इमां मालविकां प्रति, कथं केन प्रकारेण, "कथमपि" इत्यत्र "कथमिव" इति पाठान्तरं साधु; विस्रब्धं विश्वस्तं, "समौ विस्रम्भविश्वासौ" इत्यमरः; स्यात्? भवेत्? इमां विश्वसितुं कथं शक्नुयात्? अपितु कथमपि नैव शक्नुयादित्यर्थः, एतावन्तं कालं पुनः पुनः मया सह कपटव्यवहारकरणात् कपटस्वभावायाः पुनरपि कपटताऽऽचरणस्य सम्भवात् अस्यामविश्वास एव कर्त्तव्य इति भावः। श्लोकेऽस्मिन् कर्त्तृकारकस्य एकस्य सखीपदस्य तिरोभवति सरति इति, एकाधिकक्रियया सम्बन्धात् दीपकालङ्कारः, "अथ कारकमेकं स्यादनेकासु क्रियासु चेत्" इति दर्पणोक्तलक्षणात्, तथा विश्वासाभावं प्रति पूर्वार्द्धगतवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्च, एतयोः परस्परनैरपेक्ष्यात् संसृष्टिः। हरिणी वृत्तं, "न-स-म-र-स-ला गः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात्॥ ११॥

(भ) बहुशः बहुवारान्, पुनः पुनरित्यर्थः। विप्रलब्धः प्रतारितः। विश्वसनीयः विश्वासयोग्यः, राज्ञः मनोरथं पूरयित्वेति भावः। "ता"

माल। मम उण मंदभग्गाए सिविणअसमागमोवि भट्टिणो दुल्लहो आसि। * (ञ)

बकुला। एदु भट्टा, देहि से उत्तरम। † (ट)

राजा। उत्तरेण किमात्मैव पञ्चबाणाग्निसाक्षिकम्।
तव सख्यै मया दत्तो न सेव्यः सेविता रहः ॥१२॥

---

* मम पुनर्मन्दभाग्यायाः स्वप्नसमागमोऽपि भर्तुर्दुर्लभ आसीत् इति सं०।

† एतु भर्त्ता, देह्यस्या उत्तरम् इति सं०।

---

इत्यत्र "दाव तुए" इति, तथा "वीसम्भणीओ"इत्यत्र "विस्समणिज्जो" इति पाठान्तरद्वयम्; तावत् त्वया, विश्वसनीयः इति च तयोः संस्कृतम्।

(ञ) मन्दभाग्यायाः भाग्यहीनायाः। स्वप्नसमागमोऽपि निद्रितावस्थायां मिलनमपि, किं पुनर्जाग्रदवस्थायामित्यपि-शब्दार्थः; भर्त्रा सह समागमचिन्तया निद्राऽभावादिति भावः। एतेन न केवलं भर्त्ता एव मया सह समागमाभावात् मनसिजरुजाक्लिष्टः, अहमपि अनेन समागमाभावात् तथैव क्लिष्टा, अतो न मया भर्त्ता स्वेच्छया विप्रलब्धः, परन्तु देवीप्रभृतीनां पीड़नमेवात्र हेतुरिति द्योतितम्।

(ट) अस्याः मालविकायाः, उक्तेरिति शेषः। उत्तरं प्रतिवचनम्। "एदु भट्टा, देहि" इत्यत्र "भट्टा कहेदु"इति पाठे—भर्त्ता कथयतु इति स०।

मालविकोक्तेः प्रत्युत्तरस्य निष्प्रयोजनत्वमाह, उत्तरेणेति।—उत्तरेण तव सखीवाक्यस्य प्रतिवचनेन, किम्? किं प्रयोजनम्? उत्तरेण किमपि प्रयोजनं नास्तीत्यर्थः, वाक्येन प्रत्युत्तरमदत्त्वा कार्य्येणैव दास्यामीत्यभिप्रेत्याह, मया पञ्चबाणाग्निसाक्षिकं पञ्चबाणः काम एव, अग्निः अनलः, सन्तापकत्वादिति भावः, साक्षी साक्षात् द्रष्टा यस्मिन् कर्मणि तत् यथा तथा, अग्निसाक्षिकमित्यनेन आत्मदानस्य अपरिवर्त्तनीयता सूचिता; तव सख्यै मालविकायै, आत्मा एव स्वमेव, यद्वा—आत्मा स्वकलेवरमेव, "आत्मा कलेवरे यत्ने स्वभावे परमात्मनि। चित्ते धृतौ

वकुला। अणुगिहीदह्मि। * (ठ)

विदू। [ परिक्रम्य, ससम्भ्रमम् ]। बउलावलिए। असोअपल्लवाइं अहिलंघइदुं इच्छदि हरिणो, एहि णिवारेम णं। † (ड)

* अनुगृहीताऽस्मि इति सं०।

† वकुलावलिके! अशोकपल्लवान्यभिलङ्घयितुमिच्छति हरिणः, एहि निवारयाव एनम् इति सं०।

च वृद्धौ च परव्यावर्त्तनेऽपि च॥" इति धरणिः; दत्तः समर्पितः, अत एव रहः विजने, "विविक्तविजनच्छन्ननिःशलाकास्तथा रहः" इत्यमरः; सेविता सेवकः, अहमेवास्या इति शेषः, न सेव्यः सेवनीयः, अहमनयेति शेषः, यतो मया तव सख्यै आत्मसमर्पणं कृतं, तत इयमेव मे प्रभुः, अतश्च मयैवेयं सेवनीया, न त्वहं दासोऽनया सेवनीयः, एवञ्च प्रभुत्वात् अनया मयि प्रणिपातादिकं न करणीयमिति भावः। श्लोकेऽस्मिन् आत्मदानरूपप्रस्तुतार्थघटके साचिव्यकार्ये मदने अग्नित्वारोपस्य उपयोगित्वात् पञ्चबाणाग्निसाचिकमिति परिणामालङ्कारः, किञ्च, यतो मया आत्मा दत्तः, अतः न सेव्यः सेविता एव इति सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासश्च, तदेतयोरङ्गाङ्गिभावेनावस्थानात् सङ्करः। अनुष्टुप् वृत्तम्॥ १२॥

(ठ) अनुगृहीताऽस्मि कृपापात्रीकृताऽस्मि, भवतेति शेषः, मम सख्यै एवमनुरागप्रदर्शनादिति भावः। "अणुगिहीदह्मि" इत्यत्र "अणुग्गहीदम्ह" इति पाठे—अनुगृहीताः स्मः इति सं०।

(ड) ससम्भ्रम सत्वरं, "सम्भ्रमस्त्वरा" इत्यमरः। अशोकस्य अशोकवृक्षस्य, पल्लवानि किशलयानि, कोमलपत्राणीत्यर्थः, अभिलङ्घयितुम् आक्रमितुम्, इच्छति भक्षणार्थं चेष्टते इत्यर्थः। एनं हरिणम्। राजमालविकयोः निर्जनमिलनविधानार्थं विदूषकेण एव कौशलमुद्भावितमिति बोध्यम्, इदानीमस्मात् आवयोः प्रस्थानं कर्त्तव्यमिति भावः। "असोअ......इच्छदि" इत्यत्र "एसो बालासोअरुक्खस्स पल्लवाइं लंघेदि" इति पाठे—एष बालाशोकवृक्षस्य पल्लवानि लङ्घयति इति सं०।

वकुला। तह। * [इति प्रस्थिता]।

राजा। एवमेवास्मिन् रक्खणीयेऽविलम्बितेन भवितव्यम्। (ढ)

विदू। एव्वंवि गोदमो णिद्दिसीअदि? † (ण)

वकुला। अज्ज! गोदम! अहं अप्पआसे चिट्ठामि, तुमं दुवाररक्खओ होहि। ‡ (त)

विदू। जुज्जदि। § (थ)

[निष्क्रान्ता वकुलावलिका]।

---

* तथा इति स०।

† एवमपि गौतमो निर्दिश्यते? इति स०।

‡ आर्य्ये! गौतम! अहमप्रकाशे तिष्ठामि, त्वं द्वाररक्षको भव इति स०।

§ युज्यते इति स०।

---

(ढ) अस्मिन् रक्षणीये अन्यस्मात् रक्षणयोग्ये अस्मिन् गोपनीय-व्यापारे इत्यर्थः। एवमेव अनेन प्रकारेण, अशोकपल्लवरक्षणार्थं यथा सत्वरो भवसि तथैवेत्यर्थः, अविलम्बितेन सत्वरेण, सावहितेनेति यावत्; यथा कश्चित् समागत्य आवयोरत्रावस्थानमवगन्तुं नार्हति, तथा त्वया अवहितेन भाव्यमिति निष्कर्षः। "एवमेव अविलम्बितेन" इत्यत्र "वयस्य! एवमेवास्मिन् रक्षणक्षणे अवहितेन त्वया" इति पाठान्तरम्।

(ण) एवम् अनेन प्रकारेण, अपि प्रश्ने, गौतमः निर्दिश्यते? निर्देशं प्राप्नुमर्हति? त्वयेति शेषः, व्यापारेऽस्मिन् गोतमः स्वत एव अवहितस्तिष्ठति, तव आदेशः बाहुल्यमात्रमिति भावः। "णिद्दिसीअदि" इत्यत्र "णिद्दिसदि" इति पाठे—निदिशति इति स०। अत्र पाठे—अपि-शब्दः हेत्वर्थकः, अवश्यरक्षणीयस्य रक्षणीयत्वात् अवश्यमेव रक्षणमुचितमिति तर्कवाचस्पतिकृतव्याख्या।—"सन्दिसीअदि" इति पाठे—सन्दिश्यते इति स०।

(त) अप्रकाशे अन्तराले, कस्मिंश्चित् गुप्तस्थाने इत्यर्थः, कश्चिदागच्छति न वा इति दर्शनार्थमिति भावः।

(थ) युज्यते सङ्गच्छते, त्वया यदुक्तं तत् सङ्गतार्थकम् इत्यर्थः, अतस्त्वदुपदेशानुरूपं कार्य्यं करिष्यामीति भावः।

विदू। इमं दाव फटिअत्थम्भं सम्सिदो होमि। [तथा कृत्वा]। अह्लो सुहप्फरिसदा सिलाविसेसस्स। * [इति निद्रायते]। (द)

[मालविका ससाध्वस तिष्ठति]। (ध)

राजा।—

विसृज सुन्दरि ! सङ्गमसाध्वसं
तव चिरात् प्रभृति प्रणयोन्मुखे।
परिगृहाण गते सहकारतां
त्वमतिमुक्तलताऽऽचरितं मयि ॥१६॥

---

* इमं तावत् स्फटिकस्तम्भं संश्रितो भवामि। अहो ! सुखस्पर्शता शिलाविशेषस्य इति सं०।

---

(द) संश्रितः आश्रितः, स्फटिकस्तम्भमवलम्ब्य अवस्थित इत्यर्थः। अहो ! आश्चर्य्यम्। सुखस्पर्शता सुखः शीतलत्वात् सुखदायकः, स्पर्शः यस्य तस्य भावस्तत्ता। शिलाविशेषस्य स्फटिकशिलाया इत्यर्थः। निद्रायते निद्रित इव आचरति, तन्द्रायते इत्यर्थः।

(ध) ससाध्वसं सभयम्, अनभ्यस्तपुरुषसान्निध्यात्, मौग्ध्याद्वा इति भावः; तिष्ठतीति क्रियाया विशेषणमेतत्। "ससाध्वसा" इति पाठान्तरम्।

मालविकाया भीतभावदर्शनेन भयापनोदनार्थं तामनुनयति, विसृजेति।—सुन्दरि ! हे सौन्दर्य्यशालिनि ! सङ्गमसाध्वसं समागमसम्भावनया भयं, विसृज त्यज, चिरात् प्रभृति दीर्घकालावधि, तव प्रणयोन्मुखे प्रेमलाभार्थं समुत्सुके, सहकारताम् आम्रवृक्षत्वम्, आम्रवृक्षतुल्यत्वमित्यर्थः, गते प्राप्ते, सहकारतां गते साहचर्य्यं प्राप्तुमिच्छतीत्यर्थश्च, मयि त्वम् अतिमुक्तलताऽऽचरितम् अतिमुक्तलतायाः माधवीलतायाः, "अतिमुक्तः पुण्ड्रकः स्यात् वासन्ती माधवीलता" इत्यमरः; आचरितम् आचरणम्, आलिङ्गनेन तदनुरूपव्यवहारमित्यर्थः, परिगृहाण अवलम्बय, माधवीलता यथा सहकारवृक्षमाश्रित्य वर्त्तते, तथा त्वं मामालिङ्ग इति निष्कर्षः। श्लोकेऽस्मिन् साहचर्य्यार्थक-सहकारत्वस्य आम्रवृक्षत्वस्य च भेदेऽपि अभेदा-

माल। देवीभआदो अत्तणोवि पिअं कादुं ण पारेमि। * (न)

राजा। न भेतव्यं न भेतव्यम्। (प)

माल। [सोपालम्भम्]। जो ण भाअदि, सो मए भट्टिणीदंसणे दिट्ठसमत्थो भट्टा। † (फ)

राजा।—

दाक्षिण्यं नाम बिम्बोष्ठि! नायकानां कुलव्रतम्।
तन्मे दीर्घाक्षि! ये प्राणास्ते त्वदाशानिबन्धनाः ॥१४॥

---

* देवीभयादात्मनोऽपि प्रियं कर्त्तुं न पारयामि इति सं०।

† यो न बिभेति, स मया भट्टिनीदर्शने दृष्टसामर्थ्यो भर्त्ता इति सं०।

---

व्यवसायरूपातिशयोक्तिः, सा च श्लेषमूला, किञ्च राज्ञः सहकारतुल्यतां तथा मालविकाया अतिमुक्तलताया आचरितमिवाचरितमिति सादृश्ये पर्य्यवसानात् असम्भवद्वस्तुसम्बन्धा निदर्शना च, तदेतयोरेकाश्रयानुप्रवेशात् सङ्करः। द्रुतविलम्बितं वृत्तं, "द्रुतविलम्बितमाह न-भौ भ रौ" इति लक्षणात् ॥१३॥

( न ) देव्याः महिष्याः धारिण्याः। पारयामि शक्नोमि। एतेन तव इच्छापूरणे मम काऽपि आपत्तिर्नास्ति, प्रत्युत ऐकान्तिकीच्छैवास्तीति ध्वन्यते।

( प ) "न भेतव्यं न भेतव्यम्" इत्यत्र "अयि! न भेतव्यम्" इति पाठान्तरम्।

( फ ) सोपालम्भं सतिरस्कारमिति यावत्, सोल्लुण्ठमिति भावः। भट्टिनीदर्शने भट्टिन्याः अकृताभिषेकायाः इरावत्याः, दर्शने साक्षात्काले, "देवी कृताभिषेकायामितरासु च भट्टिनी" इत्यमरः। दृष्टसामर्थ्यः दृष्टं प्रत्यक्षीकृतं, सामर्थ्यं शक्तिः, प्रभाव इत्यर्थः यस्य तादृशः। भर्त्ता भवानित्यर्थः। भर्त्तुर्भवतः अभयप्रदाने या शक्तिः, सा मया प्रमदवने इरावत्याश्चित्तरञ्जनार्थमाचरणं दृष्ट्वा प्रत्यक्षीकृता, अतस्त्वत्कृताभयदाने नास्ति मे विश्वासः इति निष्कर्षः।

मालविकाकृतवक्रोक्तेरुत्तरदानार्थं दक्षिणनायकानां कर्त्तव्यं विष्ठु-

तदनुरुध्यतां चिरानुरक्तोऽयं जनः। [इति संश्लेषमुपजनयति]। (ब)

[मालविका नाट्येन परिहरति]। (भ)

राजा। रमणीयः खलु नवाङ्गनानां मदनविषयावतारः। एषा हि (म)—

थोति, दाक्षिण्यमिति।—बिम्बोष्ठि! बिम्बे इव रक्तवर्णफलविशेषौ इव, ओष्ठौ रदनच्छदौ यस्यास्तत्सम्बोधने, हे सुपक्वबिम्बफलवत् आरक्तकोमलाधरे! दाक्षिण्यं सर्वासु भार्य्यासु समानुरागित्वं, नाम इति स्वीकारार्थकं प्रकाशार्थकं वा अव्ययं, "नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च। सम्भाव्यकुत्साप्राकाश्यविकल्पेऽपि च दृश्यते॥" इति मेदिनी; (अभ्युपगमः स्वीकारः) नायकानां कुलव्रतं वंशपरम्परागताचारः, तद्वदवश्यपालनीयनियम इत्यर्थः, नायकानां दाक्षिण्य कुलव्रतमिति सर्वेषामेव स्वीकृतं, सर्वत्रैव प्रसिद्धमिति वा नाम-शब्दस्यार्थः; "नायकानाम्" इत्यत्र "वैम्बिकानाम्" इति पाठान्तरम्; दक्षिणनायककर्त्तव्यप्रतिपालनार्थं मया तदानीमिरावत्याः कोपोपशमनाय चरणपतनादिकं कृतं, न तु भयेन न वा तत्प्रत्यनुरागवशेनेति भावः, तत् तस्मात्, इरावतीं प्रति वास्तवानुरागाभावादित्यर्थः,दीर्घाक्षि! हे आयतनेत्रे! मे मम, ये प्राणाः असवः, ते त्वदाशानिबन्धनाः त्वदाशा तव समागमाकाङ्क्षा एव, निबन्धनं धारणार्थं बन्धनरज्जुस्वरूपा येषां तथाभूताः, तिष्ठन्तीति शेषः; त्वया सह मिलनाशयैव एतावन्तं कालं मम जीवनं तिष्ठति, तत्र चेन्निराशो भवेयं, नैव जीवेयमिति भावः। नायकानां दाक्षिण्यं कुलव्रतमिति सामान्यादप्रस्तुतात् प्रस्तुतस्य विशेषस्य राज्ञोऽपि दाक्षिण्यव्रतस्य प्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः, बिम्बोष्ठि! इति लुप्तोपमा च, तदेतयोः संसृष्टिः। अनुष्टुप् वृत्तम्॥ १४॥

(ब) अनुरुध्यतां, तव सङ्गदानेनेति शेषः। संश्लेषम् आलिङ्गनम्, उपजनयति करोतीत्यर्थः।

(भ) नाट्येन अभिनयव्यापारेण, परिहरति प्रतिसरति; आलिङ्गनपाशात् विमुक्ता भवतीत्यर्थः।

(म) नवाङ्गनानां नवीनानां कामिनीनां, नायकेन प्रथमसङ्गतानामित्यर्थः। मदनविषयावतारः कामव्यापारस्य आविर्भावः, कामाविर्भाव-

हस्तं कम्पयते रुणद्धि रशनाव्यापारलोलाङ्गुलीः
स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात्।
पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं
व्याजेनाप्यभिलाषपूरणसुखं निर्वर्त्तयत्येव मे ॥१५॥

जन्यचेष्टाविशेष इत्यर्थः। एषा मालविका। "एषा" इत्यस्य वक्ष्यमाणश्लोकेन अन्वयः। "एषा हि" इत्यत्र "तथाहि" इति पाठान्तरम्।

नवाङ्गनानां मदनावतारजन्यरमणीयचेष्टाविशेषं विवृणोति, हस्तमिति।—एषा मालविका, हस्तं स्वकरं, कम्पयते चालयति, मत्सन्निधानादपसर अपसर इति ज्ञापनार्थमिति भावः; रशनाव्यापारे काञ्चीगुणाकर्षणरूपचेष्टायां, काञ्चीदामस्खलितनीवीग्रन्थिमोचनोद्यमे इत्यर्थः, "स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा" इत्यमरः; लोलाः चञ्चलाः, सात्त्विकभावोदयात् व्यग्रत्वाद्वा कम्पमाना इत्यर्थः, अङ्गुलीः, ममेति शेषः, "लोलाङ्गुलीः" इत्यत्र "लोलाङ्गुलीम्" इति पाठान्तरम्; रुणद्धि प्रतिबध्नाति, निवारणार्थं धारयतीत्यर्थः; बलात् बलमाश्रित्य, आलिङ्ग्यमाना आश्लिष्यमाणा सती, नयतीति शेषः, स्वौ निजौ हस्तौ करौ, स्तनावरणतां स्तनाच्छादकत्वं, नयति प्रापयति, कराभ्यां स्तनद्वयमावृणोतीत्यर्थः; तथा पक्ष्मले प्रशस्तपक्ष्मयुक्ते, घनकोमललोमविशिष्टे इत्यर्थः, "पक्ष्म सूत्रादिसूक्ष्मांशे किञ्जल्के नेत्रलोमनि" इति मेदिनी; नेत्रे लोचने यत्र तादृशम्, आननं मुखं, पातुं चुम्बितुम्, उन्नमयतः उत्तोलयतः, करेण चिवुकं धृत्वा उत्तोलयन्तं मामनादृत्येत्यर्थः, साचीकरोति तिर्य्यग्व्यावर्त्तयति, वक्रीकरोतीत्यर्थः, आननमित्यनेन सम्बन्धः; "तिर्य्यगर्थे साचि तिरोऽपि" इत्यमरः; अत एव व्याजेनापि छलेनापि, बाधाप्रदानच्छलेनापीत्यर्थः, मे मम, अभिलाषपूरणसुखं कामनापूर्त्तिजन्यमानन्दं, निर्वर्त्तयत्येव सम्पादयत्येव, अनिष्पादनव्यवच्छेदकोऽयमेवशब्दः। श्लोकेऽस्मिन् कम्पयते रुणद्धि इत्याद्यनेकक्रियासु एकस्य "एषा" इति पदस्य कर्तृकारकत्वात् दीपकालङ्कारः, "अथ कारकमेकं स्यादनेकासु क्रियासु चेत्" इति लक्षणात्; किञ्च, अभिलाषपूरणजनितसुखनिष्पादनं प्रति पूर्वपादत्रयगतवाक्यानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गं,

[ ततः प्रविशति इरावती निपुणिका च ]।

इरा। हञ्जे णिउणिए! सच्चं तुम परिगतत्था चंदिआए, समुद्दगेहकालिंदसइदो अज्जगोदमो दिट्ठो त्ति ? * (य)

निपु। अण्णहा कहं भट्टिणीए विण्णवीअदि। † (र)

इरा। तेण हि तहिं ज्जेव्व गच्छम्ह संसआदो मुत्तं पिअ-वअस्सं पुच्छिदुं अ। ‡ (ल)

---

* हञ्जे निपुणिके! सत्यं त्वं परिगतार्था चन्द्रिकया, समुद्रगृह-कालिन्दशयित आर्य्यगौतमो दृष्ट इति ? इति स०।

† अन्यथा कथं भट्टिन्या विज्ञाप्यते इति स०।

‡ तेन हि तत्रैव गच्छावः संशयान्मुक्तं प्रियवयस्यं प्रष्टुञ्च इति स०।

---

तथा प्रतिकूलाचरणार्थं हस्तकम्पनादीनाम् अभिलाषपूरणजन्यसुख-रूपानुकूलानुबन्धित्वात् अनुकूलालङ्कारस्य, "अनुकूलं प्रातिकूल्यमनुकूलानु-बन्धि चेत्" इति लक्षणात्; तदेतेषामेकाश्रयानुप्रवेशात् सङ्करः। शार्दूलविक्रीड़ितं वृत्तम् ॥ १५ ॥

( य ) परिगतार्था विज्ञापितवस्तुका, प्राप्तसंवादा इत्यर्थः। चन्द्रिकया तन्नाम्ना परिचारिकया। समुद्रेति।—समुद्रगृहकस्य समुद्रतुल्य-विशालह्रदतीरस्थभवनविशेषस्य इत्यर्थः, अलिन्दे बहिर्द्वारपार्श्वस्थप्रकोष्ठे, "प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके" इत्यमरः; आलिन्दे एकदेशे इत्यर्थो वा, "गृहैकदेशे आलिन्दः प्रघाणः प्रघणस्तथा" इत्यमरमाला; शयितः सुप्तः, "समुद्दगेहकालिंदसइदो" इत्यत्र "समुद्दघरअलिंदसइदो एआई" इति पाठान्तरं, समुद्रगृहालिन्दशयित एकाकी इति स०।

( र ) अन्यथा चन्द्रिकया अपरिगतार्थायां कृतायामित्यर्थः। भट्टिन्याः भवत्या इत्यर्थः। "भट्टिणीए" इत्यस्य "भट्टिन्यै" इति संस्कृतं साधु। विज्ञाप्यते ? निवेद्यते ? मयेति शेषः। "विण्णवीअदि" इत्यत्र "विण्णावेमि" इति पाठे—विज्ञापयामि इति स०।

( ल ) तत्रैव समुद्रगृहे एव। संशयात् सन्देहात्, सर्पदंशनेन प्राण-जीवनाशङ्कात इत्यर्थः, मुक्तं परित्रातम्। प्रियवयस्यं गौतमम्।

निपु। सावसेसं विअ भट्टिणीए वअणं। * (व)

इरा। अण्णं च. चित्तगदं अज्जउत्तं पसादइदुं। † (श)

निपु। अह दाणिं कहं णु भट्टा एव्वं अणुणीअदि? ‡ (ष)

इरा। मुद्धे! जारिसो चित्तगदो तारिसो ज्जेव्व अण्णसंकंतहिअओ अज्जउत्तो; केवलं उवआरादिक्कमं पमज्जिदुं अअं आरंभो। § (स)

---

* सावशेषमिव भट्टिन्या वचनम् इति स०।

† अन्यच्च, चित्रगतमार्य्यपुत्रं प्रसादयितुम् इति स०।

‡ अथेदानीं कथं नु भर्त्तैवमनुनीयते? इति स०।

§ मुग्धे! यादृशश्चित्रगतस्तादृश एवान्यसङ्क्रान्तहृदय आर्य्यपुत्रः केवलमुपचारातिक्रमं प्रमार्जितुमयमारम्भः इति स०।

---

(व) सावशेषम् अवशेषेण सह वर्त्तमानम्, असमाप्तमित्यर्थः।"प्रष्टुञ्च" इति चकारप्रयोगात् एवं बोध्यते यत् प्रियवयस्यसमीपे पृच्छातिरिक्तम् अन्यत् किमपि प्रयोजनमस्तीति।

(श) अन्यच्च, सावशेषं वचनमिति शेषः। चित्रगतम् आलेख्यस्थितम् आर्य्यपुत्रस्य प्रतिकृतिमित्यर्थः। प्रसादयितुं प्रसन्नं कारयितुं, मा प्रतीति शेषः, गच्छाम इति पूर्ववाक्यस्थक्रियया सम्बन्धः। मत्प्रसादनार्थं पादपतितमपि आर्य्यपुत्रमुपेक्ष्य मया तदानीं प्रस्थितं, तेन च स मां प्रति अप्रसन्न एवासीदिति मन्ये, अत एव तत्प्रसादनार्थं गच्छामीति निष्कर्षः।

(ष) अथ प्रश्ने, नु वितर्के, "नु पृच्छाया वितर्के च" इति शाश्वतः। एवं परोक्षभावेनेत्यर्थः। अनुनीयते प्रसाद्यते, चित्रगतो भर्त्ता कथं त्वया अनुनेतुं शक्यते इति नाहं बोद्धुं शक्नोमीत्यर्थः। "अह .. अणुणीअदि" इत्यत्र "जइ दाणिं भट्टा पच्चक्खदो अणुणीअदि, ता को दोसो?" इति, "अह कहं दाणि ज्जेव्व ण पसादीअदि?" इति च पाठान्तरयोः,—यदीदानीं भर्त्ता प्रत्यक्षतोऽनुनीयते, तत् को दोषः? इति, अथ कथमिदानीमेव न प्रसाद्यते? इति च स०।

(स) मुग्धे! मूढे! आशयानभिज्ञे! इति यावत्, "मुग्धः सुन्दर-

निपु। इदो इदो भट्टिणी। *

[उभे परिक्रामतः]।

चेटी। [प्रविश्य] जेदु जेदु भट्टिणी। भट्टिणि। देवी भणादि, "ण एसो मह मच्छरस्स कालो, तव बहुमाणं वड्ढइदुं इअं वअस्सिआए सह णिअलबंधणे किदा मालविआ। जइ अणुमण्णेसि, अज्जउत्तं पि तव किदे विसज्जावइस्सं"। † (छ)

---

* इत इतो भर्त्तृनी इति सं०।

† जयति जयति भर्त्तृनी। भर्त्तृनि! देवी भणति, "नैव मे मत्सरस्य कालः, तव बहुमानं वर्द्धयितुम् इय वयस्यिकया सह निगड़बन्धनं कृता मालविका। यद्यनुमन्यसे, आर्य्यपुत्रमपि तव कृते विसर्जयिष्यामि" इति सं०।

---

मूढ़योः" इत्यमरः। यादृशः यथा। तादृशः तथा। अन्यसङ्क्रान्तहृदयः अन्यस्यां मद्व्यतिरिक्तायां नार्य्यां, सङ्क्रान्तं संलग्नम, आसक्तमित्यर्थः, हृदयं चेतो यस्य तादृशः, चित्रगतो भर्त्ता यथा भार्य्यायाः अनुरागं बोद्धुं न शक्नोति, उपेचते च तां, अन्यनार्य्यासक्तचेताः भर्त्ता अपि तथैव, अत एव तेन सह चित्रगतस्य कोऽपि विशेषो नास्ति, एवञ्च चित्रगतो भर्त्ता यथा मत्कृतप्रसादसम्पादनव्यापारे निर्विकारः स्थास्यति, साक्षाद्भर्त्ता अपि तथैव स्थास्यति, अतश्च मत्कोपे उभयोरेव तुल्यत्वात् चित्रगतस्य प्रसादनं न दोषावहमिति भावः। उपचारातिक्रमम् उपचारस्य सेवायाः, मत्कोपप्रशमनाय मम पादपतनरूपसेवनस्येत्यर्थः, अतिक्रमम् उल्लङ्घनं, तत्र उपेचाप्रदर्शनरूपमपराधमिति यावत्, प्रमार्जयितुं चालयितुम्, अयं चित्रगतस्य प्रसादनरूप एषः, आरम्भः उद्योगः, अन्यसङ्क्रान्तहृदयस्य भर्त्तुः साक्षादनुनयकरणायोग्यत्वादेव क्रियते इति भावः।

(छ) "जेदु जेदु भट्टिणी। भट्टिणि!" इत्यत्र "जेदु भट्टिणी" इत्येव पाठः क्वचित् दृश्यते। देवी महिषी धारिणी। मत्सरस्य अन्यशुभद्वेषस्य, सपत्न्यां त्वयि विद्वेषस्येति भाव, "मत्सरोऽन्यशुभद्वेष." इत्यमरः; कालः समयः, सपत्न्या त्वयि विद्वेषस्य नायमुपयुक्तसमय इत्यर्थः। बहुमानं

इदा। णाअरिए। विण्णवेहि देवीं, काओ वअ भट्टिणीं णिओजेदुं, परिअणणिग्गहेण मइ दंसिदो अणुग्गहो, कस्स वा पसाएण अअं जणो वड्ढदित्ति। * (क)

---

* नागरिके! विज्ञापय देवीं, का वयं भट्टिनीं नियोजयितुम्? परिजन-निग्रहेण मयि दर्शितोऽनुग्रहः, कस्य वा प्रसादेनाय जनो वर्द्धते? इति इति स०।

---

सम्मानम्। "वड्ढइदुं" इत्यत्र "वड्ढदुं" इति पाठेऽपि वर्द्धयितुम् इत्येव स०। वयस्यिकया वयस्या एव वयस्यिका तया, स्वार्थे कनि टापि अत इत्वम्; सख्या वकुलावलिकया। निगड़बन्धनं शृङ्खलाबद्धम्। "वअस्सि-आए" इत्यत्र "वअस्साए" इति पाठान्तरे—वयस्यया इति स०। अनुमन्यसे अनुमोदसे, तव अनुमतो भवतीत्यर्थः। तव कृते त्वन्निमित्तं, त्वां प्रति पूर्ववत् प्रणयं प्रदर्शयितुमित्यर्थः, मया अनुवद्धः आर्य्यपुत्रः तत्रापराधं विस्मृत्य पूर्ववत् अनुरागं दर्शयिष्यतीति भावः। "जइ···विसावइस्स" इत्यत्र "जइ अणुनस्ससि अज्जउत्तस्स पिअं कादुं, तहा करेमि। जं तुह इच्छिअं, तं मे भणाहि त्ति" इति पाठान्तरे—यदि अनुमन्यसे आर्य्यपुत्रस्य प्रियं कर्त्तुं तथा करोमि। यत् तव इष्टं तत् मे भण इति इति स०।

(क) नागरिके! इति चेव्याः नाम? भट्टिनीं स्वामिनीं, महिषी-मित्यर्थः,"भट्टिनी द्विजभार्य्यायां नाट्योक्त्या राजयोषिति" इति मेदिन्युक्तेः भट्टिनीशब्दस्य राजयोषिन्मात्रार्थकत्वात् कृताभिषेकायां महिष्यामपि प्रयोगो न दोषावहः इति बोद्धव्यम्। नियोजयितुम् आदेशं कर्त्तुं, देव्येव अस्य क प्रभुः, कस्मिन्नपि विषये तामादेशं कर्त्तुमस्माकं स्वर्द्धा एव भवितुं नार्हतीत्यर्थः। "भट्टिणीं णिओजेदुं" इत्यत्र "भट्टिणीणोदिं जेदुं" इति पाठान्तरे—भट्टिनीनीतिं जेतुमिति स०। परिजननिग्रहेण परि-जनस्य निजपरिचारिकायाः मालविकायाः, निग्रहेण बन्धनेन, परिजनं दण्डयित्वा इत्यर्थः, "निग्रहो भर्त्सनेऽपि स्यात् मर्य्यादायाञ्च बन्धने" इति मेदिनी। "परिअणणिग्गहेण" इत्यत्र "परिअणणिअलणेण" इति पाठे—परिजननिगड़नेन इति स०। कस्य, जनस्य इति शेषः। प्रसादेन

चेटी। तह। * [इति निष्क्रान्ता]।

निपु। [परिक्रम्यावलोक्य च]। एस दुवारे समुद्दगेहकस्स विपणिगदो विअ बुसहो गोदमो आसीणो ज्जेव्व णिद्दाअदि। † (ख)

इरा। किं णु क्खु अच्चाहिदं ? सावसेसो विअ विसविआरो भवे। ‡ (ग)

---

* तथा इति स०।

† एष द्वारे समुद्रगृहकस्य विपणिगत इव वृषभः गौतम आसीन एव निद्रायते इति स०।

‡ किं नु खल्वत्याहितम् ? सावशेष इव विषविकारो भवेत् इति स०।

---

अनुग्रहेण, "प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसत्तिषु" इति मेदिनी। अयं मल्लक्षणो जनः, देव्या भवत्या अनुग्रह एव मम सर्वसम्पद्धेतुः, मम मङ्गलार्थं सम्मानरक्षार्थं च देवी यत् सुष्ठु विवेचयिष्यति, तदेव करिष्यति, अत मम मतजिज्ञासा निष्प्रयोजनैव इति भावः।

(ख) विपणिगत इव वृषभः विपणिः पण्यवीथिका, पण्यविक्रयस्थानमित्यर्थः, तद्गतः तत्रावस्थितः, वृषभ इव षण्ड इव ; धर्मार्थमुत्सृष्टो वृषभो यथा हट्टमार्गे आसीन एव नेत्रे निमील्य वर्त्तते तद्वदित्यर्थः। आसीनः उपविष्ट एव, न तु शयान इति भावः। "दुवारे समुद्दगेहकस्स" इत्यत्र "दुवारुद्देसे समुद्दघरअस्स" इति पाठे—द्वारोद्देशे समुद्रगृहस्य इति, तथा "बुसहो" इत्यत्र "बलीबद्दो" इति पाठे—बलीवर्द इति च स०।

(ग) नु वितर्के, खलु प्रश्ने, अत्याहितं महाभीतिः, भीतिजनकव्यापार इत्यर्थः, किम् ? उपस्थितम् इति शेषः, महाभीतिजनकः व्यापारः किञ्चित् समुपस्थितः किम् ? इत्यर्थः। "अत्याहितं महाभीतिः कर्म जीवानपेक्षि च" इत्यमरः। सावशेष इव किञ्चिदवशिष्ट इव, विषविकारः सर्पदंशनजधातुवैषम्यं, भवेदिति सम्भावनायां लिङ्,यदुक्तं रुग्विनिश्चयसङ्ग्रहे—"निद्रां तन्द्रां क्लमं दाहं सम्पाकं रोमहर्षणम्। शोथञ्चैवातिसारञ्च कुरुते जङ्गमं विषम्॥" इत्युक्तलक्षणः, नो चेदीदृशसमये

निपु। पसस्समुहवस्सो दीसदि। अवि अ भुवसिद्धिणा चिइस्सिदो ; ता से असंकणिज्जं पावं। * (घ)

विदू। [उत्स्वप्नायते]। भोदि! मालविए!। † (ङ)

निपु। सुदं भट्टिणीए ? कस्स वा एसो अत्तणीणो अब्भव-हारिअसंबंधापेक्खी किदग्घो ? इदो सव्वं कालं सोत्थिवअण-मोदएहिं कुक्खिं पुरिअ संपदं मालविअं सिविणावेदि। ‡ (च)

---

* प्रसन्नमुखवर्णो दृश्यते। अपि च भुवसिद्धिना चिकित्सितः, तदस्य अशङ्कनीयं पापम् इति सं०।

† भवति! मालविके! इति सं०।

‡ श्रुतं भट्टिन्या ? कस्य वैष आत्मनीनः अभ्यवहार्य्यसम्बन्धापेक्षी

---

अस्थाने च कथं निद्रायते ? मन्ये, देहात् सर्वथा अनिर्गतं विषमेव स्वप्रभावं प्रदर्शयतीति भावः। "किं ण · विअ" इत्यत्र "अचाहिदं, ण क्खु सावसेसो" इति पाठान्तरम्।

(घ) प्रसन्नेति।—प्रसन्नौ विषविहीनत्वात् समुज्ज्वलौ, प्रकृतिस्थौ इति यावत्, मुखवर्णौ आनन दैहिकरागश्च यस्य तादृशः। एतेन विदूष-कस्य देहात् विषप्रभावः सर्वथा विनष्टीभूत इति प्रतीयते, यदुक्तं रुग्-विनिश्चयसङ्ग्रहे—"प्रसन्नदोष प्रकृतिस्थधातुमन्नाभिकामं सममूत्रविट्कम्। प्रसन्नवर्णेन्द्रियचित्तचेष्टं वैद्योऽवगच्छेदविषं मनुष्यम्॥" इति। भुवसिद्धिना चिकित्सित इत्यनेन तव ईदृशी शङ्का अमूला,यतः भुवसिद्धिना चिकित्सि-तस्य विषार्त्तस्य .मृत्युरसम्भव एवेति सूच्यते। पापम् अमङ्गलमिति यावत्। अशङ्कनीयं न तर्कणीयम्, अस्य जीवनहानेराशङ्का नैव कर-णीया इत्यर्थः।

(ङ) उत्स्वप्नायते उत् उद्गतः, सञ्जात इत्यर्थः,स्वप्नः निद्रितावस्थायां विषयविशेषानुभवः यस्य स. उत्स्वप्नः स इवाचरति, निद्रितावस्थायां विषयविशेषमनुभूय जाग्रदिव तदुच्चरतीत्यर्थः।

(च) आत्मनीनः आत्मने हितः, आत्मसम्बन्धीत्यर्थः, आत्मीय इति यावत्। "अत्तणीणो"इत्यत्र "किदवो" इति पाठे—कितवः प्रवञ्चकः।

विदू। इरावदीं अदिक्कमंतो होहि। * (छ)

निपु। एदं अच्चाहिदं। भुअंगभीअं वल्हवंधुं इमिणा भुअंगकुडिलेण अत्तणो दडकट्ठेण अंतरिदा भीसेमि। † (ज)

कृतघ्नः ? इतः सर्वं कालं स्वस्तिवाचनमोदकैः कुक्षिं पूरयित्वा साम्प्रतं मालविकां स्वप्नायते इति सं०।

* इरावतीमतिक्रामन्ती भव इति सं०।

† एतदत्याहितम्। भुजङ्गभीतं ब्रह्मबन्धुमनेन भुजङ्गकुटिलेनात्मनो दण्डकाष्ठेनान्तरिता भाययामि इति सं०।

अभ्यवहार्य्यसम्बन्धापेक्षी अभ्यवहार्य्यस्य भोज्यद्रव्यस्य, सम्बन्धं सम्पर्कम्, अपेक्षते इति तादृश, केवलं भोजनार्थम् आत्मीयताकारक इत्यर्थः। कृतघ्नः प्राप्तोपकारविस्मर्त्ता, अकृतज्ञ इत्यर्थः। अभ्यवहार्य्यसम्बन्धापेक्षी एष कृतघ्नः कस्य वा आत्मनीनः, तत् श्रुतं भट्टिन्या ? इत्यन्वयः, कृतघ्नोऽयं केवलं भोजनार्थमेव भवत्याश्चाटुं करोति,वस्तुतस्तु मालविकाया एव एकान्तानुगत इति भावः। "कस्स ·किदग्घो" इत्यत्र "कस्स एसो अत्तणिओगसंपादणे विस्ससणिज्जो हदासो" इति पाठान्तरे—कस्य एष आत्मनियोगसम्पादने विश्वसनीयो हताशः इति सं०। इतः अस्मात् स्थानात्, भवत्सकाशादित्यर्थः। स्वस्तिवाचनमोदकैः स्वस्तिवाचनेन आशीर्वाक्येन, लब्धैः मोदकैः मिष्टान्नैः, भवतीमाशीर्वचनेन प्रसाद्य लब्धैः मिष्टान्नैरित्यर्थः, "स्वस्त्याशी:क्षेमपुण्यादौ" इत्यमरः। कुक्षिम् उदरम्। स्वप्नायते स्वप्ने पश्यति, सर्वदा मालविकायाः सन्तोषसम्पादने नियुक्तत्वात् निद्रितावस्थायामपि तामेव पश्यन् किञ्चित् सम्भाषते इत्यर्थः।

(छ) अतिक्रामन्ती उल्लङ्घयन्ती, पराजयमानेत्यर्थः, स्वगुणेन इरावतीमपसार्य्य राज्ञः प्रियतमा भव इति भावः।

(ज) अत्याहितं महाभीतिः, प्रबलभयकारणमित्यर्थः, भवत्या इति शेषः, भवत्या एतस्य कृतघ्नस्य प्राक् यत् अत्याहितमाशङ्कितं, तत् न अत्याहितं, परन्तु अनेन अधुना यदुक्तं तदेव भवत्या अन्यासाञ्च राज्ञीनामत्याहितं सापत्नसम्भावनादिति भावः। "अत्याहितं महाभीतिः कर्म

सर्पा। अरिहदि किदग्घो सप्पदसणं। *(झ)

[ निपुणिका विदूषकस्योपरि दण्डकाष्ठ पातयति ]।

विदू। [ सहसा प्रबुध्य ]। अविहा !! अविहा !! दव्वीकरो मे उबरि परिपड़िदो। †(ञ)

* अर्हति कृतघ्नः सर्पदंशनम् इति सं०।

† अपिहा !! अपिहा !! दर्वीकरो मे उपरि परिपतितः इति सं०।

जीवानपेक्षि च" इत्यमरः। ब्रह्मबन्धुं कुब्राह्मणं, "शूद्रप्रेष्यो भृतो राज्ञा वृषलग्रामयाजकः। वध-बन्धोपजीवी च षड़ेते ब्रह्मबन्धवः॥" इत्युक्त-लक्षणं निन्दितब्राह्मणमित्यर्थः। भुजङ्गकुटिलेन सर्पवत् वक्रेण। अन्तरिता प्रच्छन्ना, स्फटिकस्तम्भान्तराले लुक्कायितेत्यर्थः, "अंतरिञ्चा" इत्यत्र "तंभं-तरिदा" इति पाठे—स्तम्भान्तरिता इति सं०। भाययामि त्रासयामि; भयं प्रदर्शयामीत्यर्थः। "भीसेमि" इत्यत्र "ताड़इस्सं" तथा "भाअइस्स" इति च पाठान्तरद्वयम्। ताड़यिष्यामि, भाययिष्यामि इति च तयोः संस्कृतद्वयम्।

(झ) अर्हति युज्यते, कृतघ्नः कृतोपकारविस्मर्त्ता, उपकर्त्तुरपि अप-कारीत्यर्थः, अकृतज्ञ इति यावत्; विविधभावेन उपकर्त्त्र्या अस्माकम् उपकार विस्मृत्य सपत्नीसङ्घटनचेष्टया अपकारकरणात् अकृतज्ञोऽयं गुरुतरपापवत्त्वात् सर्पदंशनयोग्य एव भवतीति भावः। कृतघ्नस्य गुरुतर-पापभाक्त्वमाह स्कन्दपुराणे—"ब्रह्मघ्ने च सुरापे च चौरे च गुरुतल्पगे। निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः॥" इति।

(ञ) प्रबुध्य जागरित्वा। अपिहा अपिहा इति भीतिसूचकमव्ययम्। "अपिहा अपिहा" इत्यत्र "अविहा अविहा" इति "अविद अविद" इति च पाठान्तरद्वये—अविधा अविधा, तथा अविद अविद इति च तयोः संस्कृतम्। दर्वीकरः दर्विं फणां करोतीति दर्वीकरः सर्पः, "फणा भोगः फणो दर्विः" इति तारपालः; दर्वीकरो दीर्घपृष्ठो दन्दशूको विलेशय" इति सर्पपर्य्याये अमरः। "दव्वीकरो परिपड़िदो" इत्यत्र "सप्पो मे उबरि पड़िदो" इति पाठे—सर्पो मे उपरि पतितः इति सं०।

राजा। [ सहसोपसृत्य ]। न भेतव्यं न भेतव्यम्।

माल। [अनुसृत्य]। मा दाव सहसा णिक्कमिस्ससि, सप्पोत्ति भणादि। * (ट)

इरा। हद्धी !! हद्धी !! भट्टा दाव इदो ज्जेव्व धावदि। † (ठ)

विदू। [ सप्रहासम् ]। कहं, दंडकाट्ठं एदं !! अहं उण जाणे, जं मए केदअकंडएहिं दंसं करिअ सप्पस्स अअसी किदं, तं मे फलिदं त्ति। ‡ (ड)

---

* मा तावत् सहसा निष्क्रमिष्यसि, सर्प इति भणति इति सं०।

† हा धिक् हा धिक्। भर्त्ता तावदित एव धावति इति सं०।

‡ कथं, दण्डकाष्ठमेतत् !! अहं पुनर्जाने, यन्मया केतककण्टकैर्दंशं कृत्वा सर्पस्यायशः कृतं, तन्मे फलितमिति इति सं०।

---

(ट) अनुसृत्य अनुगत्य, राज्ञः पश्चाद्गमनं कृत्वेत्यर्थः। भणातीत्यत्र गौतम इति शेषः। "णिक्कमिस्ससि" इत्यत्र "णिक्कमदु भट्टा" इति "णिक्कम" इति च पाठद्वये—निष्क्रामतु भर्त्ता, निष्क्राम इति च सं०। "भणादि" इत्यत्र "भणीअदि" इति पाठे—भण्यते इति सं०।

(ठ) हा धिक् हा धिक् इत्यनेन आत्मभर्त्सनं कृतमिरावत्या इति मन्तव्यं, तथाविधसमये तस्मिन् निभृतप्रदेशे मालविकार्थमेव राज्ञ अवस्थितिरित्यनुमाय आत्मनो दुरदृष्टस्मरणं तथाविधात्मभर्त्सने हेतुरिति मन्तव्यम्। यद्वा—धिक् इत्यत्र राजानमिति शेषः, सामान्यपरिचारिकां प्रति अनुरागवशात् तथाविधस्थाने राज्ञः अवस्थितिदर्शनादिति भावः। इत एव अस्माभिव दिशि।

(ड) सप्रहासम् अत्युच्चहास्यसहितम्। कथमिति हर्षार्थकं विस्मयार्थकं वा अव्ययम्, एतत् सर्पो न, परन्तु दण्डकाष्ठमिति निश्चित्य हर्षः; एतदेकं दण्डकाष्ठम् !! अहं पुनः सर्पं मन्ये इति विस्मयः इति वा; "कथ हर्षे च गर्हायां—" इत्यादि मेदिनी। पुनः किन्तु। जाने मन्ये। केतककण्टकैः केतकीपुष्पस्य तद्वृक्षस्य वा कण्टकैः। दंशं दंशनचिह्नम्। तत् दंशनम्। फलितं सफलं जातं, सत्यं सञ्जातमित्यर्थः; तदा मिथ्यादंशन-

[ततः प्रविशति पटाक्षेपेण बकुलावलिका]। (ढ)

बकुला। मा क्खु भट्टा पविसदु; इह कुड़िलगई सप्पो विअ दीसदि। * (ण)

ईरा। [राजान सहसोपसृत्य]। अवि णिव्विग्घमणोरहो दिवा-संकेदो मिहुणस्स? † (त)

[सर्वे इरावतीं दृष्ट्वा सम्भ्रान्ताः]। (थ)

---

* मा खलु भर्त्ता प्रविशतु; इह कुटिलगतिः सर्प इव दृश्यते इति सं०।

† अपि निर्विघ्नमनोरथो दिवासङ्केतो मिथुनस्य? इति सं०।

---

चिह्नं कृतम्, इदानीं सत्यमेवाहं सर्पेणाक्रान्त इति निष्कर्षः। "सप्पस्स अअसो किदं" इत्यत्र "सप्पदंसो किदो" इति "सप्पस्स उवरि अअसो किदं" इति च पाठान्तरद्वयं, संस्कृतमनयोः स्पष्टम्।

(ढ) पटाक्षेपेण पटस्य अक्षेपेण अनपसारणेन, पटक्षेपमकृत्वैवेत्यर्थः, अन्तराले अवस्थाय तत्र इरावतीं समागतां दृष्ट्वा भयवशात् द्रुतागमनात् इति भावः, "पटीक्षेपो न कर्त्तव्य आर्त्तराजप्रवेशने" इत्युक्तेरिति। यद्वा—पटस्य आक्षेपेण आकर्षणेन, अपसारणेनेत्यर्थः।

(ण) प्रविशतु, समुद्रगृहमिति शेषः। गृहप्रवेशनिषेधे कारणमाह, इहेति। कुटिलगतिः वक्रगामी। सर्प इव इत्यनेन अत्र इरावती मया दृष्टा इति ध्वन्यते।

(त) अपिः प्रश्ने। मिथुनस्य द्वन्द्वस्य, त्वन्मालविकारूपस्य नायकनायिकायुगलस्येत्यर्थः, "स्त्री-पुंसौ मिथुनं द्वन्द्वम्" इत्यमरः; दिवासङ्केतः दिवसे विजने सम्मेलनार्थमभिसारः, निर्विघ्नः निर्बाधः, मनोरथः सम्भोगाभिलाषः यत्र स तादृशः, दिवाभागे एव युवयोः निर्जने सम्मेलनार्थं सङ्केतः निर्विघ्नेन सुसम्पन्नः किम्? इत्यर्थः।

(थ) सम्भ्रान्ताः प्राप्तसाध्वसाः, भीताः इत्यर्थः, "सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि" इति मेदिनी।

राजा। प्रिये। अपूर्वोऽयमुपचारः। (द)

इरा। वउलावलिए' भट्टाहिसारविसआ संपुण्णा दे पइण्णा?*(ध)

वकुला। पसीददु भट्टिणी। किं मए किदंत्ति देवो पुच्छिदव्वो। दद्दुरा वाहरन्ति त्ति किं देवो पुहविं वरिसिदुं सुमरेदि ?। † (न)

* वकुलावलिके! भर्त्रभिसारविषया सम्पूर्णा ते प्रतिज्ञा? इति सं०।

† प्रसीदतु भट्टिनी। किं मया कृतमिति देवः प्रष्टव्यः। दर्दुरा व्याहरन्तीति किं देवः पृथिवीं वर्षितुं स्मरति? इति सं०।

(द) अयम् एषः, उपचारः व्यवहारः, आगमनानन्तरमेव शिष्टाचारं विहाय मिथ्यापवादारोपरूप इत्यर्थः, अपूर्वः पूर्वमननुभूतः ; नाहमीदृशालीकापवादार्हा इति भावः।

(ध) भर्त्तुः राज्ञः, अभिसारः एव सङ्केतस्थाननयनमेव, मालविकया सह संयोजनमेवेति यावत्, विषयः यस्याः सा तादृशी। "भट्टाहिसारविसआ" इत्यत्र "दिट्ठिआ इच्छाहिआरविसआ" इति पाठे—दिष्ट्या इत्यधिकारविषया इति सं०।

(न) देवः महाराजः। प्रष्टव्यः जिज्ञासितव्यः। दर्दुराः भेकाः, व्याहरन्ति शब्दायन्ते, इति अस्माद्धेतोः, देवः देवेन्द्रः, मेघवाहन इति यावत्, पृथिवीं मेदिनीं, पृथिव्यामित्यर्थः, वर्षितुं वृष्टिं कर्त्तुं, स्मरति किम्? चिन्तयति किम्? प्रवर्त्तते किम्? इत्यर्थः, अपितु नैव ; यथा भेकाः जलं प्रार्थयन्ति इति मनसिकृत्य देवेन्द्रः पृथिव्यां नैव वर्षणाय प्रवर्त्तते, अपितु यदा तस्य इच्छा भवति, तदैव वर्षति, एवं देवोऽपि स्वेच्छयैव मालविकाभिसरणाय प्रवर्त्तते, नात्र मे कोऽपि प्रयत्नविशेषः, अतः किं कृतं मे प्रतिज्ञया? देवमेव पृष्ट्वा सर्वं जानातु देवीति भावः। वकुलावलिकायाः मालविकासखीत्वात् राज्ञश्च मालविकायामनुरागाधिक्यात् आत्मानं राजानुगृहीतां मन्यमाना वकुलावलिका निःशङ्कमेवमुक्तवतीति मन्तव्यम्। "दद्दुरा·· सुमरेदि" इत्यत्र "किं णु क्खु दद्दुरा वाहरंतीति देवीए पुढ़वीए देव्वा वरिसिदुं विरमदि?" इति पाठे—किं नु खलु दर्दुरा व्याहरन्तीति देव्यां पृथिव्यां देवो वर्षितुं विरमति? इति सं०।

विदू। मा दाव भोदीए दंसणमेत्तेण अत्तभवं पणिबादलंघणं विसुमरिदो भोदि ; तुम उण पसादं ण गेण्हसि। * (प)

दुग। कुविदावि अहं किं करिस्सं? † (फ)

राजा। एवमेतत्। अस्थाने कोप इत्यनुपपन्नं त्वयि। (ब)—

* मा तावत् भवत्या दर्शनमात्रेणात्रभवान् प्रणिपातलङ्घनं विस्मृतो भवति। त्वं पुनः प्रसादं न गृह्णासि इति सं०।

† कुपिताऽप्यहं किं करिष्यामि? इति सं०।

(प) भवत्या दर्शनमात्रेण तव साक्षात्कारमात्रेणैव, अत्रभवान् माननीयो राजा, प्रणिपातलङ्घनं प्रणिपातस्य त्वदनुनयार्थं चरणपतनरूपस्य स्वापकर्षतासूचकस्य व्यापारस्य, लङ्घनम् अतिक्रमणं, त्वत्कृतप्रत्याख्यानमित्यर्थः, तज्जन्यापमानमिति यावत्, मा तावत् नैव,"यावत्तावच्च साकल्ये एवार्थेऽपि समुच्चये" इत्यमरः ; विस्मृतो भवति विस्मरति। पुनः पक्षान्तरे, त्वम्, अपीति शेषः, प्रसादं प्रसन्नतां, क्रोधशान्तिसूचकं शान्तभावमिति यावत्, न गृह्णासि न आश्रयसि. त्वत्कृतप्रणिपातलङ्घनजनितापराधः त्वां दृष्ट्वैव राज्ञः स्मृतिपथे समुदितो भवति, तदपराधक्षमापणार्थं कमप्युपायं यदि भवती अवलम्बेत, तदैव तमपराधं राजा विस्मरेत्, अन्यथा न, परन्तु भवती नाद्यापि तदवलम्बते, प्रत्युत कुपिता एव तिष्ठति, एतत्तु नोचितमिति भावः। यद्वा—मा तावत् इति छेदः, एवंविधमलोकापवादं न दातुमर्हसि ; कथमिति चेत्? आह, अत्रभवान् त्वां दृष्ट्वैव त्वत्कृतप्रणिपातलङ्घनं विस्मृतः, नो चेत् त्वया सह आलापमपि नैव कुर्य्यात्, त्वन्तु इदानीमपि प्रसन्ना न भवसि, एतत्ते नोचितमिति भावः। "विसुमरिदो भोदि" इत्यत्र "विसुमरिदो" तथा "तुमं उण पसादं" इत्यत्र "तुमं उण अज्जवि पसादं" इति पाठान्तरद्वयम्।

(फ) कुपिताऽपि अहं किं करिष्यामि? मम कोपे कस्य का क्षतिः? राज्ञा विप्रलब्धाऽहं कस्य वा किमनिष्टं कर्त्तुं शक्नोमि? इति भावः।

(ब) एवमेतत् "कुपिताऽपि अहं किं करिष्यामि" इति यत् त्वया उक्तं तत् सत्यमित्यर्थः। क्वचित् पाठोऽयं न दृश्यते। अस्थाने अविषये, यत्र कोपस्य कोऽपि हेतुर्नास्ति तथाविधस्थाने इत्यर्थः, कोपः, क्रियते

कदा मुखं वरतनु ! कारणादृते
तवागतं क्षणमपि कोपपात्रताम् ? ।
अपर्वणि ग्रहकलुषेन्दुमण्डला
विभावरी कथय कथं भविष्यति ? ॥१६॥

त्वयेति शेषः, इति एतत्, त्वयि विषये अनुपपन्नम् अयुक्तं, कोपकारणा-भावात् त्वया कोपो न कर्त्तव्य इत्यर्थः ।

अस्थाने कोप इत्यादि यदुक्तं तत् समर्थयितुमाह, कदेति ।—वरतनु ! वरा उत्तमा, तनूः अङ्गं यस्याः तत्सम्बोधने, हे अनवद्याङ्गि ! तव मुखम् आननं, कारणात् ऋते हेतुं विना, मत्कृतापराधजनक-कार्य्यरूप कारणमन्तरेणेत्यर्थः, कदा कस्मिन् समये, क्षणमपि अत्यल्प-कालमपि, कोपपात्रतां क्रोधभाजनतां, क्रोधजनितवर्णान्यथाभागित्व-मित्यर्थः, आगतम् ? प्राप्तम् ? इतःपूर्वं कदाऽपि मम अपराधाभावे तव मुखस्य क्रोधारुणत्वं न मया लक्षितं, तत् कथमद्य ममापराधा-भावेऽपि तत् दृश्यते ? एतत्तु न युक्तमिति भावः । अकारणकोपस्य अयुक्तत्वं द्रढयितुं दृष्टान्तमाह, अपर्वणीति ।—विभावरी रात्रिः, अपर्वणि पर्व दर्श-प्रतिपदोः सन्धिः, पूर्णिमा-प्रतिपदोः सन्धिकाल इत्यर्थः, तद्भिन्ने अपर्वणि पूर्णिमा-प्रतिपत्तिथ्योः सन्धिकालभिन्नकाले, "पर्व क्लीवं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि ॥" इति मेदिनी ; यद्यपि पर्वशब्दः अमावस्या-पूर्णिमयोरुभयोरेव वाचकः, तथाऽपि इन्दुमण्डल-विभावरीति शब्दद्वयसामर्थ्यात् पूर्णिमा-प्रतिपदोः सन्धिकाल एवात्र विवक्षितः, तदैव चन्द्रग्रहणदर्शनादिति बोध्यम् ; ग्रहकलुषेन्दुमण्डला ग्रहेण सैंहिकेयेन, राहुणेत्यर्थः, "ग्रहोऽनुग्रह-निर्बन्धग्रहणेषु रणोद्यमे । सूर्य्यादौ पूतनादौ च सैंहिकेयोपरागयोः ॥" इति मेदिनी ; कलुषम् आविलं, ग्रस्तत्वात् अन्धकारमित्यर्थः, इन्दुमण्डलं चन्द्रबिम्बं यस्यां सा तादृशी, कथं केन प्रकारेण, भविष्यति, तत् कथय ? वद ? अपितु कथमपि नैव इत्यर्थः, अपर्वकाले यथा चन्द्र-मण्डलं राहुणा कवलितं भवितुं नार्हति, तथा ममापराधाभावेऽपि तव मुखं कोपकलुषितं नैव भवितुमर्हति, किं मया तव कोप-

इरा। अट्ठाणे त्ति सुट्ठु अवधारिदं अज्जउत्तेण। अस्ससकंतेसु अम्हाणं भाअधेएसु जदि उण कुप्पेअं,ण अहं हस्सा भवेअं। *(भ)

राजा। त्वमन्यथा कल्पयसि, अहं पुनः सत्यमेव कोपस्थानं न पश्यामि। (म) कुतः,—

नार्हति कृतापराधोऽप्युत्सवदिवसेषु परिजनो बन्धुम्।
इति मोचिते मयैते प्रणिपतितुं मामुपगते च॥ १७॥

---

* अस्थाने इति सुष्ठु अवधारितमार्य्यपुत्रेण ; अन्यसङ्क्रान्तेष्वस्माकं भागधेयेषु यदि पुनः कुप्येय, नन्वहं हास्या भवेयम् इति स०।

---

कारणमनुष्ठितं तत् कथयेति भावः। श्लोकेऽस्मिन् .सधर्मस्य वस्तुनः प्रतिविम्बनात् दृष्टान्तालङ्कारः, "दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिविम्बनम्" इति लक्षणात्। रुचिरा वृत्तं, "ज-भौ स-जौ 'गिति रुचिरा चतुर्ग्रहैः" इति तल्लक्षणम् ॥१६॥

(भ) अस्थाने अविषये, इति एतत्, आर्य्यपुत्रेण सुष्ठु सङ्गतार्थकमित्यर्थः, अवधारितम् निर्णीतं, अस्थाने मम कोप इति यत् आर्य्यपुत्रेण स्थिरीकृतं, तत् युक्तमेवेत्यर्थः। "अवधारिद" इत्यत्र "वाहरिदं" इति पाठान्तरे—व्याहृतमिति स०। सोल्लुण्ठनोक्तिरियम्। कथं सुष्ठु अवधारितम्? इत्याह—अस्माकं भागधेयेषु भाग्येषु,पत्युः प्रणयभागित्वरूपसौभाग्येषु इत्यर्थः, अन्यसङ्क्रान्तेषु अन्यस्याम् अपरस्यां स्त्रियां, मालविकायामिति यावत्,सङ्क्रान्तेषु सङ्गतेषु, अन्यस्यां स्त्रियाम् अस्माकं सौभाग्यमपहृत्य भर्तुः प्रणयभागिन्यां सत्यामित्यर्थः, यदि अहं कुप्येयं क्रुद्धा भवेयं, तदा हास्या उपहास्या, भवेयं, भर्त्ता चेत् मयि अनुरक्तो भवेत् तदा तस्मै मम कोपो युज्यते, अन्यानुरक्ते भर्त्तरि मम कियानप्यधिकारो नास्ति, अतस्तस्मै कोपप्रकाशः अस्थाने एव इति आर्य्यपुत्रेण सुष्ठु अवधारितमिति भावः। "णं अहं" इत्यत्र "तदो" इति पाठान्तरे—ततः इति स०।

(म) अन्यथा विपरीतं, मालविकायामहमनुरागवानिति अयथार्थभूतमित्यर्थः। अहं पुनः अहन्तु।

कोपस्थानादर्शने कारणं प्रदर्शयति, नार्हतीति।—कृतापराधोऽपि

इरा। णिउणिए! गच्छिअ देविं विण्णवेहि, दिट्ठं भवदीए पक्खपादित्तणं, अवहिदं मे हिअअं अज्जत्ति। * (य)

निपु। तह। † [ इति निष्क्रान्ता। ]

* निपुणिके! गत्वा देवीं विज्ञापय, दृष्टं भवत्याः पक्षपातित्वम्, अवहृतं मे हृदयमद्येति इति स०।

† तथा इति स०।

सदोषोऽपि, परिजनः अनुजीविलोकः, उत्सवदिवसेषु आनन्दजनक-व्यापारानुष्ठानदिनेषु, बन्धं सयन्तुं, कारागारे आबद्धतया अवस्थातु-मित्यर्थः, "बन्धुम्" इत्यत्र "दण्डम्" इति पाठान्तरम्; नार्हति न याग्यो भवति, उत्सवकाले सर्वे वन्दिनः राजभिर्मुच्यन्ते इत्येव राज्ञां नीतिरिति भावः, इति अस्माद्धेतोः, मया एते मालविका-वकुला-वलिके द्वे, मोचिते बन्धनात् परित्याजिते। भवतु, अत्र कथमनयोरागम-नम्? इति चेदाह, मां प्रणिपतितुं प्रणाम कर्त्तुं, मुक्तिप्राप्तिनिमित्तकृत-ज्ञतां ज्ञापयित्वा नमस्कर्त्तुमिति यावत्, उपगते च समुपस्थिते च, एवञ्च विषयेऽस्मिन् त्वमन्यथा कल्पयितुं नार्हसीति भावः। अत्र उन्निन्नस्यापि राज-मालविकयोः प्रणयरूपस्य वस्तुनः विषयान्तरेण गोपनात् व्याजोक्ति-रलङ्कारः, "व्याजोक्तिर्गोपनं व्याजादुन्निन्नस्यापि वस्तुनः" इति लक्षणात्। आर्य्या वृत्तम् ॥ १७ ॥

(य) पक्षपातित्वम् अनौदासीन्य, विवदमानयोः एकस्मिन् पक्षे अनुरागप्रदर्शनमित्यर्थः, दृष्टं प्रत्यक्षीकृतं, मयेति शेषः, अनेन व्यापारेण मया ते मम शत्रुपक्षे स्नेहविशेषः प्रत्यक्षीकृत इत्यर्थः। "दिट्ठं भवदीए पक्खपादित्तणं" इत्यत्र "दिट्ठं भवदीए एक्कपक्खपादित्तणं" इति पाठान्तरे —दृष्टं भवत्या एकपक्षपातित्वम्" इति स०। "गच्छिअ अज्जत्ति" इत्यत्र "गच्छ, देवीं विण्णवहि, दिट्ठा भवदीए पक्खवादो णु अज्जत्ति" इति पाठे—गच्छ, देवीं विज्ञापय, दृष्टो भवत्या पक्षपातो ननु अद्येति इति स०। अद्य मे हृदयम् अवहृतं निश्चित, ज्ञातमित्यर्थः, "मम अङ्गुली-यकादर्शनमन्तरेण नैते मोचयितव्ये" इति भवत्या प्रागुक्त, राज्ञा भव-

विदू। [आत्मगतम्]। अहो! अणत्थो संपडिदो, बंधणब्भट्टो गीहकवोदओ विडालिआए आलोए पडिदो। * (र)

[प्रविश्य निपुणिका]।

निपु। भट्टिणि। जदिच्छादिट्ठाए माहविआए आचक्खिदं, एव्वं-णिमित्तं। † (ल) [इति कर्णे कथयति]।

---

* अहो! अनर्थः सम्पतितः, बन्धनभ्रष्टो गृहकपोतको विड़ालिकाया आलोके पतितः इति स०।

† भट्टिनि! यदृच्छादृष्टया माधविकया आख्यातम्, एवं-निमित्तम् इति स०।

---

त्वकाशात् सा मुद्रा न प्राप्ता चेत् कथमेते मोचिते? एवञ्च निजपरिजनत्वेन मालविकायाः पक्षपातिनी त्वं राज्ञा सह सम्मन्त्र्य तां मोचितवतीति मे निश्चय इति भाव.।

(र) अहो! इति खेदे। अनर्थः-विपत्, सम्पतितः समुपस्थितः, इरावत्या अत्रागमनादिति भाव। कीदृगनर्थः? इत्याह, बन्धनभ्रष्टः मुक्तबन्धनः,गृहकपोतकः गृहपालितः क्षुद्रः पारावत, एतेन अनुद्भिन्नपक्षत्वात् उड्डयनासमर्थ इति व्यज्यते; आलोके नेत्रगोचरे। विड़ालिकाया दृष्टिगोचरे निपतितः मुक्तबन्धनः अनुद्भिन्नपक्षः क्षुद्रगृहकपोतो यथा विपन्नो भवति,तथा इरावत्याः कोपदृष्टौ निपतिता शान्तस्वभावा असहाया अप्रगल्भा इयं मालविका विपन्ना जाता, कोऽस्याः परित्राणोपायः? इति भावः। अप्रस्तुतप्रशंसाऽलङ्कार.।

(ल) "भट्टिणि" इत्यत्र "देवि!" इति पाठान्तरम्। "भट्टिणि!" इत्यत्र "[अपवार्य्य] भट्टिणि!" इत्यधिक पाठ क्वचित्। यदृच्छादृष्टया सहसा अवलोकितया, देव्याः समीपे गमनकाले पथिमध्ये अकस्मादवलोकितया इत्यर्थः। माधविकया सारभाण्डगृहद्वाररक्षिण्या देव्याः परिचारिकया। आख्यातं कथितम्। एवं-निमित्तम् एतद्धेतुकम्; "सोपसर्गं वो नक्षत्रं, तदवश्यं सर्वबन्धमोक्षः क्रियताम् इति दैवचिन्तकैः विज्ञापितो राजा इति राजा सर्वबन्धमोचनाय आदिदेश"

इरा। [आत्मगतम्]। उववस्सं सव्वं ज्जेव्व। बम्हबंधुणा उब्भिस्सो पओओ। [विदूषकं विलोक्य प्रकाशम्]। इअं अस्स कामतंतसचिवस्स बम्हबंधुणो णोदी। * (व)

विदू। भादि। जदि णोदीए एक्कंवि अक्खरं पढेअं, ण अत्तभवं संस्सिदो भवे। † (श)

* उपपन्नं सर्वमेव। ब्रह्मबन्धुनोद्भिन्नः प्रयोगः। इयमस्य कामतन्त्रसचिवस्य ब्रह्मबन्धोर्नीतिः इति स०।

† भवति! यदि नीत्या एकमप्यक्षरं पठेयं, न अत्रभवन्तं संश्रितो भवेयम् इति स०।

इत्युक्त्वा गौतमेन प्रदर्शितां देव्या अङ्गुलीयकमुद्रां दृष्ट्वा मया ते नीचिते इत्युक्तप्रकारं माधविकावाक्यं कर्णे कथयति। "एव्वं णिमित्तं" इत्यत्र "एव्वं क्खु एदं णिव्वुत्तं त्ति" इति पाठे—एवं खलु एतत् निर्वृत्तमिति इति स०।

(व) उपपन्नं युक्तं, सम्भाव्यते इत्यर्थः।' ब्रह्मबन्धुना ब्राह्मणाधमेन। उद्भिन्नः उद्भावितः, आविष्कृत इत्यर्थः। प्रयोगः उपायः। कामतन्त्रसचिवस्य कामतन्त्रे अनङ्गविषयकेतिकर्त्तव्ये, राज्ञः कामव्यापारे इत्यर्थः, "तन्त्रं कुटुम्बकृत्ये स्यात् सिद्धान्ते चौषधोत्तमे। इतिकर्त्तव्यतायाञ्च" इति मेदिनी; सचिवस्य अमात्यस्य, सहायस्येत्यर्थः। नीति नयः, कौशलमिति यावत्। "उववस्सं णोदी" इत्यत्र "उववस्सं, सच्चं अअं एत्थ बम्हबंधुणा किदो पओओ। [विदूषकं विलोक्य] इअं इमस्स कामतंतसचिवस्स णोदी" इति पाठे—उपपन्नं, सत्यमयमत्र ब्रह्मबन्धुना कृतः प्रयोगः। इयमस्य कामतन्त्रसचिवस्य नीतिः इति स०।

(श) भवति! मान्ये!। नीत्याः नीतिशास्त्रस्य। अत्रभवन्तं माननीयं राजानम्। संश्रितः विदूषकरूपेण आश्रितः इत्यर्थः, यद्यहं नीतिशास्त्रं पठेयं, तदा चाटुवृत्तिं कृत्वा जीविकासंस्थानं नैव कुर्य्यां, सचिवादिरूपं किञ्चिदुच्चैः पदं प्राप्नुयामिति भावः। "ण अत्तभवं संस्सिदो भवे" इत्यत्र "णं मए अत्तभवं पेसिदो हवे" इति पाठे—ननु मया अत्रभवान् प्रेषितो भवेत् इति स०।

राजा। [अपवार्य्य]। आः !! कथं नु खल्वस्मात् सङ्कटान्मुच्यावहे। (ष)

[प्रविश्य सावेगा जयसेना]। (स)

जय। देव। कुमारी वसुलच्छी कंदुअं अणुधावंती पिंगलवाणरेण बलिअं वित्तासिदा, अंकणिसण्णा अ देवीए पवादकिसलअं विअ वेवमाणा ण किंपि पड़िवज्जदि।* (ह)

---

* देव! कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिङ्गलवानरेण बलीयो वित्रासिता, अङ्कनिषण्णा च देव्याः प्रवातकिसलयमिव वेपमाना न किमपि प्रतिपद्यते इति सं०।

---

(ष) "अपवार्य्य" इत्यत्र "आत्मगतम्" इति पाठान्तरम्। आः !! इति पीड़ासूचकमव्ययम्, "आस्तु स्यात् कोपपीड़योः" इत्यमरः। सङ्कटात् विपदः, मुच्यावहे मुक्तौ भवाव, आवामिति शेषः। कर्मकर्त्तरि प्रयोगोऽयम्। "मुच्यावहे" इत्यत्र "आत्मानं मोचयिष्यामि" इति पाठान्तरम्।

(स) सावेगा सत्वरा, "आवेगस्तु त्वरा त्वरिः" इति वाचस्पतिः। उद्विग्नचित्ता इत्यर्थो वा।

(ह) वसुलक्ष्मीः तदाख्या राजकुमारी। कन्दुकं गेन्दुकं, "बल्" इति ख्यातं क्रीड़नकविशेषमित्यर्थः, "गेन्दुकः कन्दुकः" इत्यमरः। अनुधावन्ती अनुसरन्ती, कन्दुकस्य पश्चात पश्चात् द्रुतं गच्छन्तीत्यर्थः। पिङ्गलवानरेण पिङ्गलवर्णेन पिङ्गलनामकेन वा पोषितवानरविशेषेण। बलीयः अत्यर्थम्। वित्रासिता भीषिता, भयं प्रापिता इत्यर्थः। अङ्कनिषण्णा क्रोड़े उपविष्टा। देव्याः महिष्या धारिण्याः। प्रवातकिसलयमिव प्रवाते प्रबलवायुयुक्तस्थाने, किसलयमिव अवस्थितं पल्लवमिव। वेपमाना कम्पमाना। प्रतिपद्यते विजानाति, अज्ञाना सती तिष्ठतीत्यर्थः। "प्रतिपन्नोऽन्यलिङ्गः स्यात् विज्ञातेऽङ्गीकृतेऽपि च" इति मेदिनी। "पड़िवज्जदि" इत्यत्र "पकिदिं पड़िवज्जदि" इति पाठे—प्रकृतिं प्रतिपद्यते इति सं०।

राजा। कष्टम्!! कष्टम्!! कातरो बालभावः। (क)

इरा। [सावेगम्]। तुवरदु तुवरदु अज्जउत्तो णं समासासइदुं, मा से संदावजणिदो विआरा वड्डदु। * (ख)

राजा। अहमेनां संज्ञापयामि। (ग) [इति सत्वरं निष्क्रामति]।

विदू। साहु रे पिंगलवाणर। साहु। परित्तादो तुए सबक्खो। † (घ)

[निष्क्रान्तो राजा विदूषकश्चेरावती निपुणिका प्रतिहारी च]।

माल। देवीं चिंतिअ वेवइ मे हिअअं; ण आणे, संपदि किं अदो अणुभविदव्वं भविस्सदित्ति। ‡ (ङ)

---

* त्वरता त्वरतामार्यपुत्रः एनां समाश्वासयितुं, माऽस्याः सन्तापजनितो विकारो वर्द्धताम् इति सं०।

† साधु रे पिङ्गलवानर! साधु। परित्रातस्त्वया स्वपक्षः इति सं०।

‡ देवीं चिन्तयित्वा वेपते मे हृदयम्; न जाने, सम्प्रति किमतोऽनुभवितव्यं भविष्यतीति इति सं०।

---

(क) बालभावः शैशवं, कातरः अधीरः, स्वल्पेनैव कारणेन भयविक्लव इत्यर्थः, अत एव वानरविलासनेन मोहावस्था सम्भवत्येवेति भावः॥

(ख) सावेगं सोत्कण्ठमित्यर्थः। एनां कुमारीं वसुलक्ष्मीम्। समाश्वासयितुं सान्त्वयितुं, स्वस्थां कर्तुमित्यर्थौ वा। "संदावजणिदो" इत्यत्र "संतासजणिदो" इति पाठे—सन्त्रासजनितः इति सं०। विकारः रोगः।

(ग) संज्ञापयामि प्रबोधयामि, अस्याः चैतन्यमुत्पादयामीत्यर्थः।

(घ) परित्रातः सङ्कटात् मोचितः, वसुलक्ष्मीं विलासयित्वेति शेषः। स्वपक्षः निजपक्षः, राजादि आत्मीयवर्ग इत्यर्थः, इरावतीहस्तादुद्धृत्य अस्माकं महानुपकारस्त्वया कृतः, नो चेदावयोर्संहती दुर्गतिरासीदिति भावः। तुल्यबुद्धित्वात् राज्ञः आत्मनश्च वानरस्य स्वपक्षत्वमिति विदूषकाशयः। सोपहासोक्तिरियमिति।

(ङ) "देवीं" इत्यत्र "हला! देवीं" इत्यधिकः पाठः क्वचिद्दृश्यते। देवीं चिन्तयित्वा देव्याः शासनं स्मृत्वा, स्थितायाः इति शेषः। अतः

[नेपथ्ये]। अच्चरिअं !! अच्चरिअं !! अपुव्वे पंचरत्ते दोहलस्स मउलेहिं संणद्धो तवणीआसोओ। जाव देवीए णिवेदेमि। * (च)

[उभे श्रुत्वा प्रहृष्टे]।

वकुला। आससदु सही, सच्चपइण्णा देवी। † (छ)

माल। तेण अहं पमदवणपालिआए पिट्ठदो होमि। ‡ (ज)

[इति निष्क्रान्ते]। (झ)

इति चतुर्थोऽङ्क।

---

* आश्चर्य्यम्!! आश्चर्य्यम्!! अपूर्व्वे पञ्चरात्रे दोहदस्य मुकुलैः सन्नद्धस्तपनीयाशोकः। यावद्देव्यै निवेदयामि इति सं०।

† आश्वसितु सखी, सत्यप्रतिज्ञा देवी इति सं०।

‡ तेनाहं प्रमदवनपालिकायाः पृष्ठतो भवामि इति सं०।

---

अस्मादनुसूयमानदुःखात्, इरावतीकर्तृकात् राज्ञा सह समालापस्थान-दर्शनादित्यर्थो वा। अनुभवितव्यं भोक्तव्यम्, आवाभ्यामिति शेषः। इरा-वतीसमीपे राज्ञा सह समालापं विजने अवस्थानं श्रुत्वा देवी भूयोऽपि किंविधं शासनं करिष्यतीति विचिन्त्य व्याकुलोभवामीति निष्कर्षः।

(च) दोहदस्य तपनीयाशोके मालविकाकर्तृकपादाघातरूपस्य कुसुम-विकासकस्येत्यर्थः। मुकुलैः कुड्मलैः, सन्नद्धः व्याप्तः, परिपूर्ण इत्यर्थः, मुकुलितो जात इति यावत्। उद्यानपालिकया इदमुक्तमिति बोद्धव्यम्।

(छ) सत्यप्रतिज्ञा सत्यसन्धा, निजाङ्गीकारपालने दृढ़चित्ता इत्यर्थः, सत्यप्रतिज्ञत्वात् देवी अवश्यमेव तव मनोरथं पूरयिष्यति, न काञ्चिदपि शास्तिं विधास्यति, भीतिं परिहर इति भाव।

(ज) प्रमदवनपालिकायाः उपवनरक्षिकायाः मधुकरिकायाः, पृष्ठतः पश्चात्, पश्चाद्गामिनीत्यर्थः, मधुकरिकायाः पश्चात् पश्चात् देवीसमीपे गच्छामीति यावत्, प्रियवार्त्तादायिन्याः मधुकरिकायाः पश्चात् पश्चाद्गमने कृते तपनीयाशोकस्य मुकुलोद्गमरूपस्याभीष्टपूर्त्तिहेतुभूतां दोहददायिनीं मां दृष्ट्वा देवी सन्तुष्टा एव भविष्यति, न तु शास्तिविधानं करिष्यतीति भावः।

(झ) "निष्क्रान्ते" इत्यत्र "निष्क्रान्ताः सर्वे" इति पाठान्तरम्। इत्यन्तो विमर्षसन्धिरिति मन्तव्यम्।

इति चतुर्थाङ्कव्याख्या समाप्ता।

# पञ्चमोऽङ्कः ।

[ ततः प्रविशत्युद्यानपालिका ] ।

उद्यानपालिका । उवक्खित्तो मए सक्कारविहिणा तवणीआ-सोअस्स भित्तिवेदिआबंधो । जाव अणुट्ठिदणिओअं अत्ताणं देवीए णिवेदेमि । [ परिक्रम्य ] । अदो देव्वस्स अणुकंपणीआ मालविआ । तस्सिं तह चंडिआ देवी इमिणा असोअहरिस-दोहलवुत्तंतेण पसादुम्मुही भविस्सदि । कहिं णु क्खु भवे देवी ? । [ विलोक्य ] । अम्मो ! एसो देवीए परिअणंतरो किंपि जदुमुद्दा-लंछिद मंजूसं गेण्हिअ चउस्सालादो कुज्जो णिक्कामदि । पुच्छिस्सं दाव णं । * (क)

---

* उपक्षिप्तो मया सत्कारविधिना तपनीयाशोकस्य भित्तिवेदिका-बन्धः । यावदनुष्ठितनियोगमात्मानं देव्यै निवेदयामि । अतो देवस्यानु-कम्पनीया मालविका । तस्यां तथा चण्डिका देवी अनेनाशोकहर्षदोहद-वृत्तान्तेन प्रसादोन्मुखी भविष्यति । कुत्र नु खलु भवेत् देवी ? अहो !! एष देव्याः परिजनान्तरं किमपि जतुमुद्रालाञ्छितां मञ्जूषां गृहीत्वा चतुःशालात् कुब्जो निष्क्रामति । प्रक्ष्यामि तावदेनम् इति स० ।

---

(क) सत्कारविधिना सत्कारः तलदेशपरिष्कारकरणादिरूपा परिचर्य्या, स एव विधिः अनुष्ठानं तेन । "सक्कारविहिणा" इत्यत्र "किदसक्कारविहिणो" इति पाठे—कृतसत्कारविधिः इति स० । भित्ति-वेदिकाबन्धः भित्तिवत् वेदिरचना, उपवेशनार्थमिति भावः ; मूले जल-धारणार्थं भित्तिवत् उन्नतालबालरचना इत्यर्थो वा । उपक्षिप्तः विरचित इत्यर्थः । अनुष्ठितनियोगम् अनुष्ठितः सम्पादितः, नियोगः आज्ञा. भित्तिवेदिकाबन्धनायेति भावः, येन तादृशम् । देव्यै महिष्यै धारिण्यै । निवेदयामि भवत्या ,आदेशः मया प्रतिपालित इति विज्ञापयामि । अतः वक्ष्यमाणात् कारणादित्यर्थः । "अदो" इत्यत्र "अहो !" इति

[ तत प्रविशति यथानिर्दिष्टहस्त कुब्ज ]।

उद्यान। सारस ! कहिं पत्थिदोसि ? । * (ख)

सार। महुअरिए ! विज्जाचरिआणं बम्हणाणं इमं णिच्चदक्खिणं मासिइं अज्जपुरोहिदस्स हत्थं पावइस्सं। † (ग)

---

* सारस ! कुत्र प्रस्थितोऽसि ? इति सं०।

† मधुकरिके ! विद्याचरितानां ब्राह्मणानामिमां नित्यदक्षिणां मासिकीमार्य्यपुरोहितस्य हस्तं प्रापयिष्यामि इति सं०।

---

पाठान्तरं समीचीनम्। अनुकम्पनीया अनुग्राह्या, अनुग्रहभागिनी इत्यर्थः। अनुकम्पनीयत्वे कारणमाह, तस्यामिति।—तस्यां मालविकायां, तथा तादृशी, चण्डिका अत्यन्तकोपना, अतिशयेन क्रुद्धा इत्यर्थः। अनेन मया निवेद्यमानेन, अशोकस्य तपनीयाशोकवृक्षस्य, यः हर्षदोहदः हर्षजनकः मालविकायाः पादाघातात् कुसुमोद्गमः, तस्य वृत्तान्तेन वार्त्तया, वार्त्ताश्रवणेनेत्यर्थः। प्रसादोन्मुखी प्रसन्नतया पुरस्कारवितरणोद्यता इत्यर्थः। "असोअहरिसदोहलवुत्तंतेण पसादुम्मुही" इत्यत्र "असोअकुसुमवुत्तंतेण पसादसुमुही" इति पाठान्तरम्। परिजनान्तरम् अन्यतमः परिचारकः। "परिअणंतरो" इत्यत्र "परिअणब्भंतरो" इति पाठे—परिजनाभ्यन्तरः इति सं०। जतुमुद्रालाञ्छितां जतु लाक्षा, "लाक्षा राक्षा जतु क्लीबे" इत्यमरः; तस्य मुद्रया तत्कृतमुद्रणेन, लाञ्छितां चिह्नितान्, दृढ़ाबद्धामित्यर्थं। मञ्जूषां पेटकम्। चतु शालात् चतस्र शाला परस्पराभिमुखगृहाः यत्र तस्मात् "चक्कमिलान बाड़ी" इति ख्यातप्रासादविशेषादित्यर्थः। "कुज्जो पिक्खामदि" इत्यत्र "कुज्जो सारसिओ पिक्कमदि" इति पाठान्तरम्।

(ख) सारस इति कुब्जस्य नाम। "सारस" इत्यत्र "सारसिअ" इति पाठे—सारसिक इति सं०।

(ग) विद्या शास्त्रं, शास्त्रानुशीलनमेवेत्यर्थः, चरितम् आचरणं येषां तादृशानां, निरन्तरं शास्त्रानुशीलननिरतानामित्यर्थः, विद्वन्मितियावत्। "विज्जाचरिआणं" इत्यत्र "विज्जामरिआणं" इति पाठे—

मधु। अह किं-णिमित्तं ?। *

सार। जदा पहुदि सुदं, सेणापदिणा जसतुरंगरक्खणे णिउत्तो भट्टिदारओत्ति। तस्स आउसत्थं अट्ठसदसुवसपरिमाणा दक्खिणा एहिं पडिस्सा होदि। † (घ)

* अथ किं-निमित्तम्? इति स०।

† यदा प्रभृति श्रुतं, सेनापतिना यज्ञतुरङ्गरक्षणे नियुक्तो भर्तृदारकः इति; तस्यायुष्यार्थमष्टशतसुवर्णपरिमाणा दक्षिणेभ्यः प्रतिज्ञा भवति इति स०।

विद्याभरितानाम् इति स०। ब्राह्मणानामिति चतुर्थ्यर्थे षष्ठी, विद्वद्भ्यो ब्राह्मणेभ्यः इत्यर्थः, सम्बन्धे षष्ठी वा। मासिकीं मासं व्याप्य देयाम्। नित्यदक्षिणा प्रात्यहिकीं दक्षिणां, मासैकं व्याप्य प्रत्यहं देयां दक्षिणामित्यर्थः।

(घ) श्रुतम् आकर्णितं, देव्या इति शेषः। किं श्रुतम्? इत्याह, सेनापतिनेति।—सेनापतिना प्राचीनमौर्य्यभूपानां सेनाध्यक्षेण अस्माकं महाराजस्य पिता इदानीन्तनमगधाधिपेन पुष्पमित्रेणेत्यर्थः। यज्ञतुरङ्गरक्षणे अश्वमेधीयाश्वस्य रक्षणार्थं तदनुगमनविषये, अस्माकं महाराजस्य पितुः पुष्पमित्रस्येति भावः, भर्तृदारकः भर्तुः महाराजस्य अग्निमित्रस्य, दारकः पुत्रः, वसुमित्र इति शेषः, नियुक्तः व्यापारितः, अनुबद्ध इति यावत्। तस्य वसुमित्रस्य, आयुष्यार्थम् आयुषो हितार्थं, दीर्घजीवनार्थमित्यर्थः, अष्टशतसुवर्णपरिमाण सुवर्णः कर्षपरिमितं स्वर्णं, तोलकद्वयपरिमितं स्वर्णमित्यर्थः, "सुवर्णो ना स्वर्णकर्षे" इति मेदिनी; अष्टशतसुवर्णः षोड़शशततोलकं स्वर्णं, विंशतिशरावपरिमितं स्वर्णमित्यर्थः, परिमाणं यस्यास्तादृशी, दक्षिणा व्रतसमाप्तौ देयः द्रव्यविशेषः, एभ्यः विद्याचरितेभ्यः ब्राह्मणेभ्यः, प्रतिज्ञा प्रतिश्रुता, दानार्थमिति भावः; पुत्रस्य दीर्घजीवनार्थं मासमेकं यावत् प्रत्यहं देवी एभ्यः विंशतिशरावपरिमितं स्वर्णं दातुं प्रतिज्ञां कृतवतीति निष्कर्षः। "जदा -होदि" इत्यत्र "जदप्पहुदि सेणावदी जसतुरंगरक्खणे णिउत्तो भट्टिदारओ वसुमित्तो, तदप्पहुदि तस्स आउसणिमित्त णिक्कसदसुवसपरिमाणं दक्खिणं

मधु। अह कहिं देवी ? किं वा अणुचिट्ठदि ? *

सार। मंगलगेहके आसणत्था विदब्भविसआदो भादुणा वीरसेणेण पेसिदं लेहं लिपिअरेहिं वाचीअमाणं सुणादि। † (ङ)

मधु। को उण विदब्भराअवुत्तंता सुणीअदि ?। ‡ (च)

सार। वसीकिदो किल वीरसेणप्पमुहेहिं दंडचक्केहिं भट्टिणो विदब्भणाहो। मोइदो अ किल से दाआदो माहवसेणो। दूदो अ महासाराणि रअणवाहणाणि सिप्पिदारिआभूइट्ठं परिअणं अ उवाअणीकरिअ भट्टिणो सआसं पेसिदो। सो किल भट्टारअं पेक्खिस्सदि। § (छ)

* अथ कुत्र देवी ? किं वा अनुतिष्ठति ? इति सं०।

† मङ्गलगृहके आसनस्था विदर्भविषयात् भ्रात्रा वीरसेनेन प्रेषितं लेखं लिपिकरैर्वाच्यमानं शृणोति इति सं०।

‡ का. पुनर्विदर्भराजवृत्तान्तः श्रूयते ? इति सं०।

§ वशीकृतः किल वीरसेनप्रमुखैर्दण्डचक्रैर्भर्त्तुर्विदर्भनाथः। मोचितश्च किलास्य दायादो माधवसेनः। दूतश्च महासाराणि रत्नवाहनानि

देवी दक्खिणीएहि परिग्गाहेदि" इति पाठे—यदा प्रभृति सेनापतिः अश्वतुरङ्गरक्षणे नियुक्तो भर्तृदारको वसुमित्र., तदा प्रभृति तस्य आयुर्निमित्तं निष्कशतसुवर्णपरिमाणां दक्षिणां दक्षिणीये. परिग्राहयति इति सं०।

(ङ) मङ्गलगृहके भर्तृ-पुत्रादीनां मङ्गलप्रार्थनार्थं निर्दिष्टगृहविशेषे। विदर्भविषयात् विदर्भदेशात् विदर्भजनपदात् वा, "विषयो गोचरे देशे तथा जनपदेऽपि च" इति मेदिनी। "आसणत्था" इत्यनन्तरं "भविअ" इत्यधिक. पाठ. क्वचित् दृश्यते, भूत्वा इति तस्य सं०। लेखं लिपिम्। लिपिकरै. पत्रलेखकैः। "लिपिअरेहि" इत्यत्र "लेहकरेहिं" इति पाठे—लेखकरैः इति सं०। वाच्यमानं पठ्यमानम्।

( च ) का: ? कीदृशः ? इत्यर्थ.।

( छ ) वशीकृतः अधीनीकृतः, पराजितः इत्यर्थः.। दण्डचक्रैः सैन्य-

सख। गच्छ, अनुचिट्ठ अत्तणो णिओअं। अहंपि देवीं पेक्खिस्सं। * (ज)

[इति निष्क्रान्तौ]।

[प्रवेशकः]। (झ)

---

शिल्पिदारिकाभूयिष्ठं परिजनं चोपायनीकृत्य भर्त्तुः सकाशं प्रेषितः। स किल भट्टारकं प्रेक्षिष्यते इति सं०।

* गच्छ, अनुतिष्ठात्मनो नियोगम्। अहमपि देवीं प्रेक्षिष्ये इति सं०।

---

समूहे', "दण्डः सैन्ये दमे यमे" इति हैमः। अस्य विदर्भनाथस्य। दायं विभक्तव्यपितृद्रव्यं, पैतृकधनमित्यर्थः, "दायः सोल्लुण्ठभाषणे। विभक्तव्य-पितृद्रव्ये तथा हरणदानयोः" इति मेदिनी; आददाति गृह्णातीति दायादः बान्धवः, ज्ञातिरित्यर्थः, "दायादौ सुत-बान्धवौ" इत्यमरः। "दूतो च" इत्यनन्तरं "तेण" इत्यधिकः पाठः कुत्रचित् दृश्यते। महा-साराणि प्रवराणि, बहुमूल्यानीत्यर्थः। रत्नवाहनानि रत्नानि हस्त्यश्वा-दीनि च। शिल्पेति।—शिल्पिदारिका शिल्पकार्य्यनिपुणा बालिका; यद्वा—शिल्पिनः कारवः, कारुकार्य्याभिज्ञा इत्यर्थः, दारिकाश्च कन्यकाश्च, भूयिष्ठा बहुला यत्र तादृशं, "सिप्पिदारिआभूइट्ठ'"इत्यत्र "सिप्पकारिआ-भूइट्ठ'" इति पाठे—शिल्पकारिकाभूयिष्ठम् इति सं०। परिजनं परिचारकं, विजितलोकसमूहमिति यावत्। उपायनीकृत्य उपहारीकृत्य, उपहारत्वेन इत्यर्थः। स दूतः।

(ज) अनुतिष्ठ सम्पादय। नियोगम् आदेशं, देव्या आज्ञामित्यर्थः।

(झ) प्रवेशकः एतस्य लक्षणादिकं प्रागेव उक्तम्। अत्र च वृत्तस्य अशोकमुकुलोद्गम-वीरसेनकृत-विदर्भनाथवशीकरणादिरूपकथा-ऽंशस्य वर्त्तिष्यमाणस्य च शिल्पिदारिकादिप्रेक्षणरूपकथांऽशस्य निदर्शनात् तल्लक्षणसङ्गतिरिति बोध्यम्।

[ ततः प्रविशति प्रतिहारी ]।

प्रती। आणत्तम्हि देवीए असोअसक्कारव्वाविदाए, विस्सवेहि अज्जउत्तं, "इच्छामि अज्जउत्तेण सह असोअरुक्खस्स पसुणलच्छिं पच्चक्खीकादुं" त्ति। ता जाव धम्मासणगदं देवं पडिवालेमि।
[ इति परिक्रामति ]। * (ञ)

[ नेपथ्ये ]।

वैता। दिष्ट्या दण्डेनैवारिशिरःसु वर्त्तते देवः। (ट)

प्रथम'।—

परभृतकलव्याहारेषु त्वमात्तरतिर्मधुं
　नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान्।

---

* आज्ञप्ताऽस्मि देव्याऽशोकसत्कारव्यापृतया, विज्ञापयार्य्यपुत्रम्, "इच्छाम्यार्य्यपुत्रेण सहाशोकवृक्षस्य प्रसूनलक्ष्मीं प्रत्यक्षीकर्त्तुम्" इति। तत् यावद्धर्मासनगतं देवं प्रतिपालयामि इति स०।

---

(ञ) अशोकेति।—अशोकस्य तपनीयाशोकवृक्षस्य, सत्कारे परिचर्य्यायां, जलसेचनादिना उत्कर्षसम्पादनव्यापारे इत्यर्थः, व्यापृतया नियुक्तया। प्रसूनलक्ष्मीं पुष्पोद्गमजनितां शोभाम्। धर्मासनगतम् अर्थिप्रत्यर्थिप्रजानाम् अभियोगनिष्पत्त्यर्थं विचारासनोपविष्टम्। प्रतिपालयामि प्रतीक्षे, यावत् स धर्मासनात् नोत्तिष्ठेत् तावदत्रैव अवतिष्ठे इत्यर्थः।

(ट) दिष्ट्या हर्षेण, राज्ञः विजयलाभात् हर्षः इति। दण्डेनैव उपायचतुष्टयेषु चतुर्थोपायेनैव, अरिशिरःसु शत्रूणां मूर्द्धसु, शत्रून् विजित्य इत्यर्थः, महाप्रभावो महावीरश्च देव इति भावः। "दण्डेनैव" इत्यत्र "दण्डैरेव" इति पाठान्तरम्।

"दण्डेनैव" इति यदुक्तं, तत् समर्थयितुमाह, परभृतेति।—आत्ता गृहीता, सदैव सहगामिनीत्यर्थः, प्राप्ता च, रतिः तन्नाम्नी पत्नी, शत्रुविजयात् सन्तोषश्च येन तथाभूतः, तथा अङ्गवान् शरीरी, मूर्त्तिमान्

विजयकरिणामालानाङ्कैरुपोढबलस्य ते
वरद ! वरदारोधोवृक्षैः सहावनतो रिपुः ॥ १ ॥

इत्यर्थः, हस्त्यश्व-रथ-पादातरूपसेनाङ्गचतुष्टयसमन्वितश्च, त्वम् अनङ्गः इव काम इव, परभृतानां कोकिलानां, "वनप्रियः परभृतः कोकिलः पिक इत्यपि" इत्यमरः; परान्नपुष्टानां वैतालिकादीनाञ्च, कलाः मधुरास्फुटाः, व्याहाराः ध्वनयः, स्तुतिवादरूपवचनानि च यत्र तादृशेषु, विदिशातीरोद्यानेषु विदिशाख्यनदीकूलस्थोपवनेषु, मधुं वसन्तं, माधुर्यञ्च, "मधु-र्मद्ये वसन्ते च माधुर्ये द्रुम दैत्ययोः" इति व्याडिः; नयसि प्रापयसि, प्रकाशयसीत्यर्थः, उभयत्रापि तुल्यम्; सदा रतिसहचरः शरीरी कामो यथा कोकिलकूजितमुखरेषु विदिशातीरोद्यानेषु वसन्तमाविर्भावयति, तथा विजितसर्वशत्रुत्वात् सदा आनन्दितचित्तः सेनाङ्गचतुष्टयसमन्वितः त्वमपि अस्मद्विधानामाश्रितानां स्तुतिवचनमुखरेषु विदिशातीरस्थोद्यानेषु विहरन् उद्यानस्य सौन्दर्यं वर्द्धयसीति पिण्डार्थः। वरद ! हे अभीष्टद ! प्रार्थिनां प्रार्थनापूरक ! इत्यर्थः, उपोढबलस्य प्रवृद्धसैन्यस्य, पराक्रान्तस्येत्यर्थः, ते तव, रिपुः शत्रुः, विजयकरिणां शत्रुपराजयसाधनानां हस्तिनाम्, आलानाङ्कैः बन्धनसाधनैः, बन्धनस्तम्भस्वरूपैरित्यर्थः, "आलानाङ्कैरुपोढबलस्य" इत्यत्र "आलानत्वं गतैः प्रबलस्य" इति पाठान्तरम्; वरदारोधोवृक्षैः वरदानाम्नी काचिन्नदी, तस्याः रोधसि तीरदेशे, "कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु" इत्यमरः; ये वृक्षाः तरवः तैः, सह अवनतः नम्रतां गतः, वशीभूततां गतश्च, महावीरः अरातिनिसूदनश्च भवानिति भावः। श्लोकेऽस्मिन् प्रथमार्द्धे अनङ्ग इव इत्युपमा, तथा अङ्गवान् अनङ्ग इति विरोधश्च, उत्प्रेक्षावशात् तत्परिहार इति विरोधाभासः, एतयोरेकाश्रयावस्थानात् सङ्करः; द्वितीयार्द्धे सहोक्तिः, वरद वरद इति व्यञ्जनसङ्घानां सकृत् साम्याच्छेकानुप्रासश्च, प्रथमार्द्ध-प्रदर्शितसङ्करेण एतयोः नैरपेक्ष्यात् संसृष्टिः। हरिणी वृत्तम् ॥ १ ॥

द्वितीय।—

विरचितपदं वीरप्रीत्या सुरोपमसूरिभि-
श्चरितमुभयोर्मध्येकृत्य स्थितं क्रथकैशिकान्।
तव हृतवतो दण्डानीकैर्विदर्भपतेः श्रियं
परिघगुरुभिर्दोर्भिर्विष्णोः प्रसह्य च रुक्मिणीम्॥ २॥

अन्यच्चाह, विरचितेति।—दण्डानीकैः दण्डाय रिपुदमनाय. अनीकैः सैन्यैः, शत्रुदमनार्थं प्रेरितैः सैनिकैरित्यर्थः, विदर्भपतेः विदर्भराजस्य यज्ञसेनस्य, श्रियं सम्पदं, राजलक्ष्मीमित्यर्थः, हृतवतः आत्मसात् कृतवतः, तव, तथा परिघगुरुभिः परिघवत् लौहवज्रलगुडास्त्रवत्, गुरुभिः महद्भिः, सुदृढैरिति विशालैरिति वा अर्थः, दोर्भिः बाहुभिः, बाहुचतुष्टयैरित्यर्थः, "भुजबाहू प्रवेष्टो दोः" इत्यमरः; प्रसह्य बलमाश्रित्य, रुक्मिणीं विदर्भाधिपतिभीष्मकतनयां, हृतवतः आत्मसात् कृतवतः, विष्णोश्च कृष्णस्य च, उभयोः एतयोर्द्वयोः, चरितं चरित्रं, सुरोपमसूरिभिः देवतुल्यपण्डितमण्डलीभिः, सुरोपम इति पदं राज्ञ आमन्त्रणपदं वा, सुरोपम! हे देवोपम राजन्!; वीरप्रीत्या शूरजनं प्रति श्रद्धया, विरचितपदं विरचितानि कीर्त्तितानि, पदानि कीर्त्ति-सूचकवाक्यानि यस्य तत् तादृशं सत्, श्लोकाकारेण ग्रथितं वर्णितञ्च सदित्यर्थः, क्रथकैशिकान् विदर्भदेशान्, मध्येकृत्य अवलम्ब्य, स्थितं वर्तमानं, वर्त्तते इत्यर्थः, वीरानुरागिभिः विद्वद्भिः कविभिः विरचिता रुक्मिणीं हृतवतः श्रीकृष्णस्य वीरत्वगाथा यथा अद्यापि विदर्भदेशे प्रचरति, तथा यज्ञसेनस्य राज्यसम्पदं हृतवतः तवापि वीरत्वगाथा विदर्भदेशे प्रचर-तीति निष्कर्षः, एतेन श्रीकृष्णस्य रुक्मिणीहरणमिव तवापि विदर्भाधि-पश्रीहरणमतीव यशस्करमिति भावः। अत्र अप्रस्तुतस्य विष्णोः प्रस्तुतस्य अग्निमित्रस्य च "हृतवतः" इत्येकक्रियया अन्वयात् दीपकालङ्कारः, स च सुरोपमसूरिभिः परिघगुरुभिरित्युपमाद्वयेन संसृज्यते। हरिणी वृत्तम्॥ २॥

प्रती। एसो जअसद्दसूइदप्पत्थाणो भट्टा इदो ज्जेव्व आअच्छदि, अहंबि दाव इमस्स मुहादो अवसरिअ एदं मुहालिंद-तोरणं समस्सिदा होमि। * [ इत्येकान्ते स्थिता ]। (ठ)

[ प्रविश्य सवयस्यो राजा ]।

राजा।—

कान्तां विचिन्त्य सुलभेतरसम्प्रयोगां
श्रुत्वा विदर्भपतिमानमितं बलैश्च।
धाराभिरातप इवाभिहतं सरोजं
दुःखायते च हृदयं सुखमश्नुते च ॥ ३ ॥

---

* एष जयशब्दसूचितप्रस्थानो भर्त्ता इत एवागच्छति, अहमपि तावदस्य मुखात् अपसृत्यैतन्मुखालिन्दतोरणं समाश्रिता भवामि इति सं०।

---

(ठ) जयेति।—जयशब्देन "विजयतां राजन्!" इति निनादेन, सूचितं प्रकटितं, प्रस्थानं धर्मासनात् स्थानान्तरगमनं यस्य तादृशः। अस्य भर्त्तुः, मुखात् सम्मुखदेशात्। "मुहादो अवसरिअ" इत्यत्र "पमुहादो लोआदो ओसरिअ" इति पाठे—प्रमुखात् लोकादपसृत्य इति सं०। मुखालिन्दतोरणं मुखे निःसरणमार्गे इत्यर्थः, "मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि" इति मेदिनी; य अलिन्दः वहिर्द्वारप्रकोष्ठं, "प्रघाण-प्रघणालिन्दा वहिर्द्वारप्रकोष्ठके" इत्यमरः; तत्र यत् तोरणं वहिर्द्वारं, समाश्रिता तदन्तराले अवस्थिता इत्यर्थः। "एदं मुहालिंदतोरणं" इत्यत्र "खंभंतरिदा" इति पाठे—स्तम्भान्तरिता इति सं०। एकान्ते एकस्मिन् पार्श्वे, तोरणान्तराले इत्यर्थः।

कान्तामिति।—कान्तां प्रियां, मालविकामिति शेषः, सुलभेतरः असुलभः, दुर्लभ इत्यर्थः, सम्प्रयोगः समागमोपायः यस्यास्तादृशीम्, इरावत्यादिभिः नियतप्रतिबन्धकाचरणात् दुरधिगमामित्यर्थः, विचिन्त्य विभाव्य, तथा विदर्भाधिपतिं विदर्भराजं यज्ञसेनं, बलैः सैन्यैः, आनमितञ्च वशीकृतञ्च, श्रुत्वा आकर्ण्य, स्थितस्य ममेति शेषः, हृदयं चेतः, ( कर्त्तृ )

विदू। इह पेक्खामि, एक्कंतसुहिदो भवं भविस्सदित्ति। *(ड)

राजा। कथमिव ?।

विदू। अज्ज किल देवीए धारिणीए पण्डिदकोसिइ भणिदा—"भअवदि। तुमं जदि सच्चं पसाहणगव्वं वहेसि, दंसेहि दाव मालविआए सरीरे विवाहणेवत्थं" त्ति। तदो सविसेसकोदुहलं अलंकिदा मालविआ तत्तभोदीए। कदावि पूरए भवदो मणोरहं। † (ढ)

---

* इह प्रेचे, एकान्तसुखितो भवान् भविष्यतीति इति स०।

† अद्य किल देव्या धारिण्या पण्डितकौशिकी भणिता—"भगवति! त्वं यदि सत्यं प्रसाधनगर्वं वहसि, दर्शय तावत् मालविकायाः शरीरे विवाहनेपथ्यम्" इति। ततः सविशेषकौतूहलमलङ्कृता मालविका तत्रभवत्या। कदाऽपि पूरयेत् भवतो मनोरथम् इति स०।

---

आतपे रौद्रे, अवस्थितमिति शेषः, तथा धाराभिः वृष्टिप्रवाहैः, अभिहतं ताडितम्, आप्लुतमिति यावत्, सरोजमिव कमलमिव, दुःखायते च दुःखमनुभवति च, सुखम् आनन्दम्, अश्नुते च अनुभवति च, मालविकया समागमः दुर्लभ इति चिन्ता दुःखहेतु, विदर्भाधिपतिपराजयश्रवणञ्च सुखहेतुरिति मन्तव्यम्। उपमाऽलङ्कारः, तथा एकस्य "हृदयम्" इति कर्तृकारकस्य दुःखायते सुखमश्नुते इत्यनेकक्रिययाऽन्वयात् दीपकालङ्कारस्य, किञ्च सुख दुःखयोः विरूपयोरेकस्मिन्नेवाधारे सङ्घटनात् विषमालङ्कारस्य, इत्येतेषां सङ्करः। वसन्ततिलक वृत्तम् ॥ ३ ॥

(ड) प्रेचे पश्यामि, अनुमिनोमीति यावत्। "इह पेक्खामि" इत्यत्र "जह अहं पेक्खामि तह" इति पाठे—यथा अहं प्रेचे तथा इति स०। एकान्तम् अत्यर्थं, निश्चितमित्यर्थो वा; सुखं सञ्जातमस्य इति एकान्तसुखितः, मालविकां लब्ध्वा अत्यर्थं सुखीत्यर्थः। तारकादित्वादितच्।

(ढ) प्रसाधनगर्वं वेशकरणविषयकाभिमानम्, अहं भूषणादिना परेषां वेशकरणे अत्यर्थं निपुणा इत्याकारावहङ्कारमित्यर्थः, "सिद्धो वेशे

राजा। सखे! मदपेक्षामनुवृत्य अनया धारिण्या पूर्वचरितैः सम्भाव्यत एवैतत्। (ण)

प्रती। [उपगम्य]। जेदु जेदु देवो। देवी विण्णवेदि—"तवणीआसोअस्स कुसुमोग्गमसिरिं अज्जउत्तेण सह पच्चक्खीकादुं इच्छामि"त्ति। * (त)

राजा। ननु तत्रैव देवी?। (थ)

---

* जयति जयति देवः। देवी विज्ञापयति—"तपनीयाशोकस्य कुसुमोद्गमश्रियमार्यपुत्रेण सह प्रत्यक्षीकर्तुमिच्छामि" इति इति स०।

---

प्रसाधनम्" इति मेदिनी। विवाहनेपथ्य परिणयकालिकप्रसाधनम्, "आकल्पवेशौ नेपथ्यं प्रतिकर्म प्रसाधनम्" इत्यमरः। सविशेषकौतूहलं सविशेषम् अत्यर्थं, कौतूहलम् औत्सुक्यं यस्मिन् अलङ्करणकर्मणि तद्यथा तथा, "अलंकिदा" इत्यस्य विशेषणम्। तत्रभवत्या पूजनीयया पण्डितकौशिक्या। पूरयेत् इत्यत्र देवीति शेषः।

(ण) मदपेक्षां ममाभिलाषमित्यर्थः, अनुवृत्य अनुसृत्य, मम सुखविधानमुद्दिश्य इत्यर्थः। "अनुवृत्य" इत्यत्र "अनुसृत्य" तथा "अनुप्राप्य" इति च पाठान्तरद्वयम्। पूर्वचरितैः पूर्वकृतव्यवहारैः, एतत् मालविकायाः शरीरे विवाहनेपथ्यकरणं, सम्भाव्यते एव सङ्गच्छते एव, मम चित्तभावम् अनुमाय तत्पूरणाय देव्या इतःपूर्वं यत् यदाचरितं तत् स्मृत्वा अहमेतदनुमिनोमि यत्, मह्यं मालविकां समर्पयितुं सा तस्याः नेपथ्यविधानं समादिष्टवतीति निष्कर्षः।

(त) "जेदु जेदु देवो" इत्यत्र "जेदु भट्टा" इति पाठान्तरे—जयतु भर्त्ता इति स०। कुसुमोद्गमश्रियं पुष्पविकाशजनितशोभाम्। "कुसुमोग्गम - इच्छामि" इत्यत्र "कुसुमसद्दंसणेण मह आरंभो सफलो करीअदु" इति पाठे—कुसुमशोभादर्शनेन मम आरम्भः सफलः क्रियताम् इति स०।

(थ) ननु प्रश्ने। तत्रैव प्रमदवने एव, वर्त्तते किम्? इति शेषः। "देवी" इत्यत्र "तिष्ठति" इति पाठान्तरम्।

प्रती। अधइं। जहा तुह सम्माणसुहं, अंतेउरं विसज्जिअ मालविआपुरोएण अत्तणो परिअणेण सम देवं पडिवालेदि।* (ट)

राजा। [सहर्षं विदूषकं विलोक्य]। जयसेने! गच्छाग्रतः। (ध)

प्रती। एदु एदु देवो।† [इति परिक्रामति]।

विदू। [विलोक्य]। भो वअस्स! किंचि परिवुत्तजोव्वणो विअ वसंतो पमदवणे लक्खीअदि।‡ (न)

* अथ किम्। यथा तव सम्मानसुखम्, अन्तःपुरं विसृज्य मालविकापुरोगेण आत्मनः परिजनेन समं देवं प्रतिपालयति इति सं०।

† एतु एतु देवः इति सं०।

‡ भो वयस्य! किञ्चित्परिवृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते इति सं०।

(ट) यथा तव सम्मानसुखं सम्मानः समादरः, सुखम् आनन्दश्च, भवेत् तथा इति शेषः। "जहा तुह सम्माणसुहं" इत्यत्र "जहरिअसम्माणसुहिअं" इति पाठे—यथार्हसम्मानसुखितम् इति सं०। मालविकापुरोगेण मालविका पुरोगा अग्रवर्त्तिनी यस्य तथाभूतेन। "परिअणेण" इत्यनन्तरं "पंडिअकोसिआए अ" इत्यधिकः पाठः क्वचित् दृश्यते; पण्डितकौशिक्या च इति तस्य सं०; सम सह। देवं भवन्तं राजानम्। प्रतिपालयति प्रतीक्षते। अत्र तव सम्मानसुखमित्युक्त्या मालविकापुरोगेण इत्युक्त्या च एवं प्रतीयते यत्, भवान् मालविकायामनुरागी इत्यनुमाय देवी भवन्तं सुखयितुं सर्वपरिजनसमक्षमेव मालविकां तुभ्यं दास्यतीति। अन्तःपुरम् अन्तःपुरस्थस्त्रीजनम्। विसृज्य प्रेषयित्वा, प्रमदवनमिति शेषः।

(ध) मालविकालाभसम्भावनया हर्षः, तवानुमानं सत्यमेव इति ज्ञापनार्थं विदूषकविलोकनञ्च इति बोध्यम्।

(न) विलोक्य, प्रमदवनशोभामिति शेषः। किञ्चित् ईषत्, परिवृत्तं परिवर्त्तनं गतं, पूर्वावस्थातः अवस्थान्तरं प्राप्तमित्यर्थः, किञ्चित् प्रकर्षतां गतमिति यावत्; यद्वा—परिवृत्तं प्रत्यावृत्तं, पुनरागतमित्यर्थः, यौवनं

राजा। यदाह भवान्—(प)

अग्रे विकीर्णकुरुवकफलजालकभिद्यमानसहकारम्।
परिणामसुखसिदमृतोरुत्सुकयति यौवनं चेतः॥ ४॥

विदू। भो। अअं सो दिण्णणेवत्थो विअ कुसुमत्थवएहिं तवणीआसोओ। आलोएदु भवं।* (फ)

* भोः! अयं स दत्तनेपथ्य इव कुसुमस्तवकैस्तपनीयाशोकः। आलोकयतु भवान् इति स०।

तारुण्यं, शोभा इति यावत् यस्य तथाभूतः, पूर्वावस्थातः अधुना किञ्चित् अधिकशोभासमन्वित इत्यर्थः।

(प) भवान् यत् आह, तत् सत्यमिति शेषः। "यदाह" इत्यत्र "यथाऽऽह" इति पाठान्तरम्।

विदूषकोक्तिं समर्थयितुं वसन्तस्य साम्प्रतिकीं शोभां वर्णयति, अग्रे इति।—अग्रे पुरोभागे, विकीर्णानां व्याप्तानां, प्रभूतस्थानं व्याप्य अवस्थितानामित्यर्थः, कुरुवकाणां रक्तपुष्पझिण्टीनां, "सैरीयकस्तु झिण्टी स्यात् तस्मिन् कुरवकोऽरुणे" इत्यमरः; फलजालकैः फलसमूहैः, भिद्यमानः अवलम्ब्यमानः, आश्लिष्यमाण इति यावत्, सहकारः आम्रवृक्षः यत्र तादृशं, परिणामसुखं परिणामस्य परिणतेः, पूर्णतां प्राप्तेरित्यर्थः, सुखं प्रारम्भ, पूर्णताप्राप्तुन्मुखमिति यावत्, "सुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि" इति मेदिनी; "परिणामसुखमिदम्" इत्यत्र "परिणामाभिमुखम्" इति पाठान्तरम्; ऋतोः वसन्तस्य, इदम् अनुभवगम्यं, यौवन तारुण्य, (कर्त्तृ) चेतः चित्तं, दर्शकानामिति भावः, उत्सुकयति उत्कण्ठयति, उत्कण्ठितं करोतीत्यर्थः, यौवनशोभादर्शने साग्रहं करोतीति यावत्; प्राक् प्रमदवनभ्रमणकाले (तृतीयाङ्के) कुरुवकाणां पुष्पमात्रं सञ्जातं, साम्प्रतन्तु तेषु फलोत्पत्त्या "किंचि परिवुत्तजोव्वणो विअ" इत्यादि यत् त्वया उक्तं तत् सत्यमेवेति भावः। अत्र चेतस औत्सुक्यसम्पादने ऋतोः परिणामोन्मुखयौवनस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्। आर्य्या जातिः॥ ४॥

(फ) अयं पुरतो दृश्यमानः, सः मालविकादत्तदोहदः, तपनीया-

राज। स्थाने खलु प्रसवमन्थरोऽभूत्, यदयमिदानीमनन्य-साधारणीं शोभां पुष्यति। (ब) पश्य—

सर्वाशोकलतानां प्रथमं सूचितवसन्तविभवानाम्।
निर्वृत्तदोहदेऽस्मिन् सङ्क्रान्तानीव मुकुलानि॥ ५॥

---

शोकः कुसुमस्तवकैः पुष्पगुच्छैः, दत्तनेपथ्य इव दत्तं विहितं, नेपथ्यं प्रसाधनम्, अलङ्करणमित्यर्थः यस्य स तादृशः, परिदृश्यते इति शेषः, "आकल्पवेशौ नेपथ्यं प्रतिकर्म प्रसाधनम्" इत्यमरः।

(ब) अयं तपनीयाशोकः, प्रसवे कुसुमे, पुष्पोत्पादने इत्यर्थः, "प्रसवो गर्भमोचने। उत्पादे स्यादपत्येऽपि फले च कुसुमेऽपि च॥" इति मेदिनी; मन्थरः मन्दः, पराङ्मुख इति यावत्, "मन्थरः कोषफलयोर्बाध-मन्थानयोः पुमान्। कुसुम्भां न द्वयोर्मन्दे पृथौ वक्रेऽभिधेयवत॥" इति मेदिनी; अभूत् इति यत् तत् स्थाने खलु युक्तमेव, "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः; यत् यस्मात्, इदानीम् अधुना, अनन्यसाधारणीम् असामान्यां, सर्वाभ्यः शोभाभ्यः अधिकामित्यर्थः, शोभां पुष्यति धारयतीत्यर्थः, अनुपमां शोभां धारयितुमेवायं तपनीयाशोकः एतावन्तं कालं प्रसवपराङ्मुखोऽभू-दिति समुदितार्थः। "पुष्यति" इत्यत्र "उद्वहति" इति पाठान्तरम्।

अनन्यसाधारणीं शोभां वर्णयितुमाह, सर्वेति।—प्रथमम् आदौ, वसन्तप्रारम्भे एवेत्यर्थः, सूचितः प्रकटितः, वसन्तस्य वसन्तर्त्तोः, विभवः सम्पत, पुष्पप्रसवरूपा शोभा इत्यर्थः याभिः तथोक्तानां, सर्वासाम् अशोक-लतानाम् अशोकवृक्षस्य शाखानाम्, अशोकवृक्षाणामिति यावत्. "लता-नाम्" इत्यत्र "तरूणाम्" इति पाठान्तरम्; मुकुलानि कुड्मलानि, "मुकु-लानि" इत्यत्र "कुसुमानि" इति पाठान्तरम्; निर्वृत्तं सम्पन्नं, दोहदम् अकाले पुष्पोत्पादनसाधनं, कामिनीपादाघातरूपसंस्कारमिति यावत् यस्य तस्मिन्, प्राप्तमालविकापादप्रहारे इति भावः, "तरुगुल्मलतादीनामकाले कुशलैः कृतम्। पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रिया॥" इति शब्दार्णवः; अस्मिन् तपनीयाशोके, सङ्क्रान्तानीव संलग्नानीव, समा-गतानीवेत्यर्थः; अस्य पुष्पबाहुल्येन एवं मन्ये यत्, वसन्तप्रारम्भे एव

विदू। तह। भो। वीसद्धो होहि; अम्हासु उवगदेसु वि धारिणी पासपरिवत्तिअं मालविअं अणुमण्णेदि। * (भ)

राजा। [सहर्षम्] पश्य पश्य सखे।—

मामियमभ्युत्तिष्ठति देवी विनयादनूत्थिता प्रियया।
विस्तृतहस्तकमलया नरेन्द्रलक्ष्म्या वसुमतीव ॥ ६ ॥

---

* तथा। विस्रब्धो भव; अस्मासु उपगतेष्वपि धारिणी पार्श्वपरिवर्त्तिकां मालविकामनुमन्यते इति स०।

---

मुकुलितानां सर्वासामेवाशोकलतानां मुकुलानि प्राप्तदोहदे अस्मिन् सङ्क्रान्तानि, कथमन्यथा ईदृशं कुसुमबाहुल्यम्? एवञ्च मालविकाचरण-स्पर्शसुखलाभाशयैव अस्य प्रसवमन्थरत्वं युक्तमेवेति निष्कर्षः। श्लोकेऽस्मिन् वाच्या-क्रियोत्प्रेक्षाऽलङ्कारः। आर्या जातिः ॥ ५ ॥

(भ) तथा भवता यदुक्तं तत् तथैवेत्यर्थः। विस्रब्धो भव विश्वस्तो भव, मालविकालाभे विश्वासं कुरु इत्यर्थः, "समौ विस्रम्भ विश्वासौ" इत्यमरः। तत्र कारणं प्रदर्शयति, अस्मासु इत्यादि।—उपगतेषु समीपमागतेषु। "अम्हासु उवगदेसु" इत्यत्र "अम्हेसु सण्णिहिदेसु" इति पाठान्तरम्। पार्श्वपरिवर्त्तिकां पार्श्वावस्थितां, "पासपरिवत्तिअं" इत्यत्र "पासपरिवट्टिणीं" इति पाठे—पार्श्वपरिवर्त्तिनीम् इति स०। अनुमन्यते स्वीकरोति, अस्मत्समक्षमपि मालविकाया अवस्थानमनुमोदते, पूर्ववत् अस्मद्दृष्टिगोचरात् न अपसारयतीत्यर्थः, एतेन मालविकां प्रति देव्याः प्रसादः, ततश्च भवतोऽपि मालविकालाभाशा सफलीभविष्यतीति व्यज्यते।

मामिति।—विस्तृते प्रसारिते, मामभिवादयितुमिति भावः, हस्त-कमले पाणिपङ्कजयुगलं यया तया, प्रियया दयितया, सौन्दर्य्याधिक्यात् ईप्सिततमत्वाच्च अन्याभ्यः प्रेमास्पदया इत्यर्थः, मालविकयेति शेषः, विनयात् विनीतस्वभावत्वात्, यद्वा—विनयात् प्रणतिहेतोः, प्रणाम-करणार्थमित्यर्थः, "विनया तु बलायां स्त्री शिक्षायां प्रणतौ पुमान्" इति मेदिनी; विस्तृतहस्तकमलया प्रियया अनूत्थिता पश्चादुद्गता, अनुगतेति

[ ततः प्रविशति धारिणी मालविका परिव्राजिका विभवतश्च परिवारः ]। (म)

माल। [ आत्मगतम् ]। जाणामि णिमित्तं मह कोदुआलं-आरस्स, तहवि मे हिअअं विसिणीपत्तगदं विअ सलिलं वेवदि, दक्खिणेदरं णअणं अ बहुसो फुरइ। * (य)

* जानामि निमित्त मम कौतुकालङ्कारस्य, तथाऽपि मे हृदयं विसिनीपत्रगतमिव सलिलं वेपते, दक्षिणेतरं नयनञ्च बहुशः स्फुरति इति सं०।

यावत्, इयं परिदृश्यमाना, देवी धारिणी, विस्तृतहस्तकमलया प्रसारित-करस्थितपङ्कजया, नरेन्द्रलक्ष्म्या राजश्रिया, अनूत्थिता वसुमतीव वसुन्धरेव, माम् अभ्युत्तिष्ठति अभ्युद्गच्छति, मदभ्यर्थनार्थं प्रत्युद्गमनं करोतीत्यर्थः। अनूत्थितेति अनुपूर्वकात् स्थाधातोः कर्मणि क्तः। "अन्वासितमरुन्धत्या" इत्यत्र अन्वासितपदवत् अनूत्थिता इत्यस्य सकर्मकत्व-मुन्नेयम्। उपमाऽलङ्कारः, किञ्च, हस्तकमलया इत्यत्र हस्तौ कमले इव इति उपमा, उत हस्तावेव कमले इति रूपकम् इति सन्देहात् उपमारूपकयोः सन्देहसङ्करः इति; अस्य च पूर्वोक्तोपमया सह अङ्गाङ्गिभावेनावस्थानात् सङ्करः। आर्य्या जातिः॥ ६॥

(म) विभवतः ऐश्वर्य्यानुरूपम्, अधिकारानुरूपं पौर्वापर्य्यक्रम-मवलम्ब्य इत्यर्थः। परिवारः परिजनः, स्वजन-परिचारिकादिकमित्यर्थः।

(य) मम कौतुकालङ्कारस्य कौतुकात् उत्सवाद्धेतोः हर्षहेतोर्वा, मत्कर्त्तृकदोहददानानन्तरं पञ्चरात्राभ्यन्तरे तपनीयाशोकस्य पुष्पोद्गम-जनितोत्सवात् तज्जनितहर्षात् वा इत्यर्थः, "कौतुकन्त्वभिलाषे स्यादुत्सवे नमहर्षयोः।" इति मेदिनी; अलङ्कारस्य भूषणस्य, देवीकर्त्तृकालङ्कार-परिधापनस्येत्यर्थः, निमित्तं कारणं, देव्याः प्रसादरूपं हेतुमित्यर्थः, राज्ञा सह प्रसन्नदेवीकर्त्तृकपरिणयसम्पादनरूपं निमित्तमित्यर्थो वा, जानामि। तथाऽपि निमित्तावगमे सत्यपि, विसिनीपत्रगतं नलिनीदलस्थितं, "नलिन्यान्तु विसिनी पद्मिनीमुखाः" इत्यमरः; सलिलमिव जलमिव, मे हृदयं वेपते कम्पते, दुर्भाग्यवशात् पुनरपि देवी यदि कुपिता भवेदिति शङ्कयेति भावः। च किञ्च, दक्षिणेतरं वामं, नयनम् अक्षि, बहुशः वारवारं,

विदू। भो वअस्स ! विवाहणेवत्थेण सविसेसं क्खु सोहदि अत्तभोदी मालविआ। * (र)

राजा। पश्यास्येनाम्। एषा—(ल)

अनतिलम्बिदुकूलनिवासिनी
लघुभिराभरणैः प्रतिभाति मे।
उडुगणैरुदयोन्मुखचन्द्रिका
हतहिमैरिव चैत्रविभावरी ॥ ७ ॥

* भो वयस्य ! विवाहनेपथ्येन सविशेषं खलु शोभतेऽत्रभवती मालविका इति सं०।

स्फुरति स्पन्दते, स्त्रीणां वामाक्षिस्पन्दनस्य शुभसूचकत्वात् कोऽपीष्टलाभो मे भविष्यतीति एतेनानुमितो भवतीति भावः। तथा च वसन्तराज-शाकुने—"भ्रूभागमध्ये प्रियसङ्गमः स्यात् नासाक्षिमध्ये च सहायलाभः। दृगन्तमध्यस्फुरणेऽर्थलाभोत्कण्ठे क्रमाद्विस्फुरिते दृगादौ॥ पुंसां सदा दक्षिणदेहभागे स्त्रीणाञ्च वामावयवे प्रजातः॥" इति। एतेन स्मृति-शङ्का-हर्षाख्यास्त्रयो भावाः प्रदर्शिताः कविनेति मन्तव्यम्।

(र) विवाहनेपथ्येन परिणयवेशेन, विवाहोपयोगिवस्त्रालङ्कारादि-प्रसाधनेनेत्यर्थः, "आकल्पवेशौ नेपथ्यं प्रतिकर्म प्रसाधनम्" इत्यमरः। सविशेषम् अत्यर्थम्। क्वचित् "अत्तभोदी" इति पाठो नास्ति।

(ल) "एषा" इत्यत्र "येषा" इत्यधिकः पाठः क्वचित्।

मालविकायाः विवाहनेपथ्यशोभां वर्णयति, अनतीति।—अनति-लम्बि नातिदीर्घं, दुकूलं क्षौमवस्त्रं, "क्षौमं दुकूलं स्यात्" इत्यमरः; निवस्ते परिदधाति या सा अनतिलम्बिदुकूलनिवासिनी परिहितानति-दीर्घक्षौमवसना, एषा मालविका, लघुभिः स्वल्पैः, आभरणैः भूषणैः, "लघुभि" इत्यत्र "बहुभिः" इति पाठान्तरम्; उदयोन्मुखी प्रकाशो-द्यता, उदेतुमारब्धा इत्यर्थः, चन्द्रिका ज्योत्स्ना यस्यां तादृशी, शुक्लपक्षीये-त्यर्थः, चैत्रविभावरी मधुयामिनी, चैत्रशुक्लपक्षीयरात्रिरित्यर्थः, हतहिमैः हतानि विनष्टानि, हिमानि तुषाराः येषां तैः, अपसारितदीप्तिप्रति-

धारि। [उपेत्य]। जेदु जेदु अज्जउत्तो। *

विदू। वड्ढदु भोदी। †

परि। विजयतां देवः।

राजा। भगवति। अभिवादये।

परि। अभिप्रेतसिद्धिरस्तु। (व)

देवी। [सस्मितम्]। अज्जउत्त। एस दे अम्हेहिं तरुणीजणसहाअस्स असोओ संकेदगेहओ संकप्पिदो। ‡ (श)

* जयति जयति आर्य्यपुत्रः इति सं०।

† वर्द्धतां भवती इति सं०।

‡ आर्य्यपुत्र! एष तेऽस्माभिस्तरुणीजनसहायस्याशोकः सङ्केतगेहकः सङ्कल्पितः इति सं०।

बन्धकतुषारैः, उडुगणैः नक्षत्रपुञ्जैरिव, "नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्" इत्यमरः; मे मम, प्रतिभाति प्रकाशते, अत्र उदयोन्मुखचन्द्रिकया अनतिलक्ष्यिकुलस्य, उडुगणैः आभरणानां, चैत्रविभावर्य्याश्च मालविकायाः साम्यबोधनात् उपमाऽलङ्कारः। इतहिमैरिति विशेषणेन दीप्तिप्रतिबन्धकतुषारापगमात् उडुगणानाम् औज्ज्वल्यमिव आभरणानामपि संस्कारादिना औज्ज्वल्याधिक्यं प्रतिपादितम्। चैत्रविभावर्य्यामिव सर्वथा तुषाराभावात, शुक्लपक्षीयायाश्च तस्या विशेषतः प्रीतिप्रदत्वात् उद्दीपकत्वाच्च तया सह मालविकायाः साम्यं प्रदर्शितमिति। द्रुतविलम्बितं वृत्तम॥७॥

(व) अभिप्रेतसिद्धिः मनोरथसाफल्यम्, एतेन ते मालविकालाभो भवतु इति व्यज्यते।

(श) तरुणीजनसहायस्य युवतीजनसहचरितस्य। अत्र तरुणीशब्देन मालविका एव व्यज्यते। सङ्केतगेहकः सङ्केतगृहमिव, प्रियजनेन सह समागमार्थं सङ्केतस्थानमिवेत्यर्थः, इवार्थे कन्, प्रियजनेन सह अत्र सङ्गन्तुमर्हसीति भावः। सङ्कल्पितः निर्दिष्टः। "संकप्पिदो" इत्यत्र "कप्पिदो" इति पाठान्तरम्।

विदू। भो! आराहिदोसि। * (प)

राजा। [ सव्रीडमशोकमभित. परिक्रामन् ] ।—(फ)

नायं देव्या भाजनत्वं न नेयः
सत्काराणामीदृशानामशोकः।
यः सावज्ञो माधवश्रीनियोगे
पुष्पैः शंसत्यादरं त्वत्प्रयत्ने ॥ ८ ॥

---

* भोः! आराधितोऽसि इति सं०।

---

(प) आराधितोऽसि पूजितोऽसि, सम्मानितोऽसीत्यर्थः, देव्या इति शेषः। मालविकया सह सम्मेलनार्थं देवीकर्त्तृकासङ्केतग्रहकल्पनोक्तेः नर्मसूचकत्वात् राजानं लक्ष्यीकृत्य विदूषकस्य सोल्लुण्ठनोक्तिरियम्।

(फ) सव्रीडं सलज्जं, मालविकां प्रति राज्ञः अनुरागं लक्ष्यीकृत्य देव्या तथोक्तत्वात् राज्ञः सलज्जत्वमिति। अभितः समन्तात्। अशोकमिति अभितः-शब्दयोगात् द्वितीया।

नायमिति।—अयम् एषः, अशोकः देव्या त्वया, ईदृशानाम् एवंविधानां, सत्काराणां सम्मानानां, भाजनत्वम् आस्पदत्व, न नेयः न प्रापणीयः, इति न, अपि तु नेय एव इत्यर्थः, अशोकोऽय भवत्या ईदृशीं सम्माननामर्हत्येवेति भावः। "सम्भाव्यनिषेधनिवर्त्तने नञ्द्वयम्" इति वामनसूत्रात् जड़ोऽयमशोकतरुः देव्याः सम्मानं नार्हति इति सम्भाव्यनिषेधनिवर्त्तनार्थं नञ्द्वयं कविना प्रयुक्तमिति बोध्यम्। कथमेष सत्कारार्हः? इति चेदाह, य इति।—यः अशोकः, माधवश्रीनियोगे माधवस्य मधोः, वसन्तर्त्तोरित्यर्थः, "माधवोऽजे मधौ राधे" इति मेदिनी; या श्रीः लक्ष्मीः, तस्याः नियोगे आदेशे, कुसुमितो भव इत्येवमाज्ञायामित्यर्थः, सावज्ञः सावहेलः सन्, प्रदर्शितोपेक्षः सन्नित्यर्थः, त्वत्प्रयत्ने तव प्रयासे, मालविकापादाघातप्रापणरूपे त्वदीयोद्यमे

विदू। भो। वीसद्धो भविअ जोव्वणवदिं पेक्ख। * (ङ)
धारि। कं? † (क)
विदू। तवणीआसोअस्स कुसुमसोहं। ‡ (ख)

* भोः! विस्रब्धो भूत्वा यौवनवतीं प्रेक्षस्व इति सं०।
† काम्? इति सं०।
‡ तपनीयाशोकस्य कुसुमशोभाम् इति सं०।

इति यावत्, पुष्पैः कुसुमैः, कुसुमविकाशनैरिति यावत्, आदरम् आस्था, सम्मानमिति यावत्, शंसति सूचयति, प्रदर्शयतीत्यर्थः, यो हि वसन्तलक्ष्म्या आदेशमनादृत्यापि त्वदीयप्रयत्ने आदरवान् सन् पुष्पितोऽभूत्, स मद्विहरणस्थानकल्पनरूपं त्वदीय सम्मानमर्हत्येवेति भावः। अत्र प्रथमार्द्धवाक्यं प्रति उत्तरार्द्धवाक्यस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। शालिनी वृत्तं,—"मात्तौ गौ चेच्छालिनी वेदलोकैः" इति लक्षणात्॥ ८॥

(ङ) विस्रब्धः विश्वस्तः, देव्या मालविकायाः स्थानान्तरप्रेषण-रूपानुमोदनलाभात् निःशङ्कः इत्यर्थः। यौवनवतीं तरुणीं, मालविका-मिति भावः। कुसुमशोभापक्षे—यौवनवतीं प्रस्फुटितामित्यर्थः। प्रेक्षस्व अवलोकय।

(क) विदूषकवाक्यस्याभिप्रायं बुध्यमानाऽपि देवी अबुध्यमाना इव पृच्छति, कामिति।—कां यौवनवतीं राजा प्रेक्षिष्यते? "कं" इत्यत्र "कं विअ" इति पाठे—कामिव? इति सं०।

(ख) देव्याः समक्षमेव मालविकामुद्दिश्य एवं शिष्टविगर्हितवाक्य-प्रयोगस्य देव्या असम्मानकरत्वात् भीतो लज्जितो वा विदूषकः स्वोक्तं यौवनवतीमिति मालविकाविशेषणमन्यत्र कुसुमशोभायां योजयति—तपनीयेति। "तवणीआसोअस्स" इत्यत्र "भोदि! तवणीआसोअस्स" इत्यधिकः पाठः क्वचित् दृश्यते।

[ सर्वे उपविशन्ति ]।

राजा। [ मालविका विलोक्यात्मगतम् ]। कष्टः खलु सन्निधि-वियोगः,—(ग)

अहं रथाङ्गनामेव प्रिया सहचरीव मे।
अननुज्ञातसम्पर्का धारिणी रजनीव नौ ॥ ९ ॥

[ प्रविश्य कञ्चुकी ]।

कञ्चु। जयति जयति देवः। अमात्यो विज्ञापयति—"तस्मिन् काले विदर्भराजोपायने द्वे शिल्पिदारिके मार्गपरिश्रमाद-

---

(ग) सन्निधिवियोगः सन्निधौ समीपेऽपि, वियोगः विच्छेदः, कष्टः क्लेशकरः, प्रियायाः समीपे स्थितस्यापि मे तया सह वियोगः दुःसहक्लेश-जनक इत्यर्थः, खलु निश्चये।

ननु सन्निधिवियोगः कष्टः इति सत्यं, किन्तु एतन्निवारणोपायः त्वदायत्तोऽपि कथं तमुपेक्षसे ? इत्याह, अहमिति।—अहं रथाङ्गनामेव चक्रवाक इव, "कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः" इत्यमरः ; मे मम, प्रिया दयिता मालविका, सहचरीव रथाङ्गसहचारिणी चक्र-वाकीव इत्यर्थः, सहचरीव इत्यनेन समीपस्थेव इति ध्वन्यते, अननु-ज्ञातः न अनुमोदितः, सम्पर्कः संयोगः, उभयोः सम्मेलनमिति यावत् यया सा तादृशी, धारिणी तन्नाम्नी देवी, नौ आवयोः, अननुज्ञातः अस्वीकृतः, मुनिशापात् प्रतिषिद्ध इत्यर्थः, सम्पर्कः यस्यां तादृशी, रजनीव रात्रिरिव, प्रतिबन्धिका वर्त्तते इति शेषः, रजनी यथा चक्रवाकमिथुनयोरनतिदूरवर्त्तिनोरपि मिलनप्रतिबन्धिका, धारिणी अपि तद्वदावयोः समीपस्थयोरपि मिलनप्रतिबन्धिका जाता, अत एव कष्टं सन्निधिवियोगम् आवामनुभवाव इति भावः। श्लोकेऽस्मिन् उपमालयाणां सङ्करः। पथ्यावक्त्रं वृत्तं, "युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम्" इति लक्षणात् ॥ ९ ॥

(घ) तस्मिन् काले यदा इमे आगते तस्मिन् समये इत्यर्थः। विदर्भराजस्य यज्ञसेनस्य, उपायने उपहारीभूते, विदर्भराजेन उप-

लघुशरीरे इति ज्ञात्वा न प्रवेशिते। सम्प्रति देवोपस्थानयोग्ये; तदाज्ञां देवो दातुमर्हति" इति। (घ)

राजा। प्रवेशय ते। (ङ)

कञ्चु। यदाज्ञापयति देवः। [इति निष्क्रम्य ताभ्यां सह प्रविश्य]।

इत इतो भवत्यौ।

प्रथ। [जनान्तिकम्]। हला रसणीए! अपुव्वं विअ इमं राअउलं पविसंतीए मे पसीददि हिअअब्भंतरसंगदो अप्पा। * (च)

---

* हला रमणीये! अपूर्वमिवेदं राजकुलं प्रविशन्त्या मे प्रसीदति हृदयाभ्यन्तरसङ्गत आत्मा इति सं०।

---

उपहारत्वेन प्रेरिते इत्यर्थः, "उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरः। "विदर्भराजोपायने" इत्यत्र "विदर्भविषयोपायने" इति पाठान्तरम्। शिल्पिदारिके शिल्पकारकन्याद्वयम्। "शिल्पिदारिके" इत्यत्र "शिल्प-कारिके" इति पाठान्तरम्। मार्गपरिश्रमात् दीर्घपथपर्य्यटनजनित-क्लान्तिवशात्, अलघु गुरु, सवेदनमिति यावत्, शरीरं देहः ययोस्ते, इति ज्ञात्वा इति हेतोः, न प्रवेशिते न अन्तःपुराभ्यन्तरमानीते इत्यर्थः। "ज्ञात्वा" इत्यत्र "पूर्वम्" इति पाठान्तरम्; देवोपस्थानयोग्ये देवस्य भवतः, उपस्थानयोग्ये राजोपासनक्षमे, विश्रामकारणेन लघु-देहत्वादिति भावः। "देवोपस्थानयोग्ये" इत्यनन्तरं 'संवृत्ते" इत्यधिकः पाठः क्वचिद्दृश्यते। आज्ञाम् आदेशं, प्रवेशनाय इति शेषः।

(ङ) ते शिल्पिदारिके द्वे इत्यर्थः।

(च) "रमणीए" इत्यत्र "मदणीए इति पाठान्तरे—मदनिके इति सं०। अपूर्वमिव अदृष्टपूर्वमिव, निर्माणसौष्ठवात् विस्मयकरमिति यावत्। क्वचित् "विअ" इति पाठो नास्ति। राजकुलं राजभवनम्। प्रसीदति प्रसन्नो भवति, प्रफुल्लो भवतीत्यर्थः, इतः पूर्वं कदाऽपि ईदृग्भवनादर्श-नादिति भावः। हृदयाभ्यन्तरसङ्गतः अन्तःकरणाधिष्ठितः। "हिअअ-ब्भंतरसंगदो अप्पा" इत्यत्र केवलं 'हिअअ" इति पाठः क्वचित् दृश्यते।

विदू। जोसिणिए! मह्मवि एव्वं। अत्थि क्खु लोअ-प्पवादो "आआमि सुहं दुक्खं वा हिअअसमवत्था कधेदि" त्ति।* (छ)

प्रथ। सच्चो दाणिं होदु।† (ज)

कञ्चु। एष देव्या सह देवस्तिष्ठति। उपसर्पतां भवत्यौ।

[ उभे उपसर्पतः। मालविका परिव्राजिका च देव्यौ दृष्ट्वा परस्परमवलोकयतः ]। (झ)

उभे। [प्रणिपत्य]। जेदु जेदु भट्टा, जेदु जेदु भट्टिणी।‡

राजा। निषीदतम्। (ञ)

[ उभे राजाज्ञया उपविष्टे ]।

राजा। कस्यां कलायामभिविनीते भवत्यौ? (ट)

---

* ज्योत्स्निके! ममाप्येवम्। अस्ति खलु लोकप्रवादः "आगामि सुखं दुःखं वा हृदयसमवस्था कथयति" इति इति सं०।

† सत्य इदानीं भवतु इति सं०।

‡ जयति जयति भर्त्ता, जयति जयति भट्टिनी इति सं०।

---

(छ) ममापि एवं, प्रसीदति आत्मा इति शेषः। लोकप्रवादः जनसमाजे प्रसिद्धं वाक्यम्। हृदयसमवस्था हृदयस्य अन्तःकरणस्य, समवस्था भावः, सौमनस्यं दौर्मनस्यं वा इत्यर्थः, सौमनस्यं भाविसुखं दौर्मनस्यं भाविदुःखं सूचयति, एवञ्च अत्र प्रवेशारम्भे आत्मप्रसादेन किमपि सुखमेव भविष्यतीति अनुमिमीमहे इति भावः।

(ज) सत्यः इदानीं भवतु, लोकप्रवाद इति शेषः। "सच्चो" इत्यत्र "सो सच्चो" इत्यधिकः पाठः क्वचित् दृश्यते।

(झ) "मालविका परिव्राजिका च देव्यौ दृष्ट्वा" इत्यत्र "मालविकां परिव्राजिकाञ्च दृष्ट्वा" इति पाठान्तरम्।

(ञ) निषीदतम् उपविशत, युवामिति शेषः।

(ट) अभिविनीते शिक्षिते। कञ्चुकिप्रयुक्तेन शिल्पिदारिके इति

उभे। भट्टा! संगीदए अब्भतरम्ह।* (ठ)

राजा। देवि! गृह्यतामनयोरन्यतरा। (ड)

धारि। मालविए! इदो दक्खदरा संगीदसहाइणी दे का रुच्चदि ?† (ढ)

उभे। [मालविकां दृष्ट्वा]। अम्मो!! भट्टिदारिआ!! जेदु जेदु भट्टिदारिआ।‡ [इति प्रणिपत्य तया सह वाष्पं विसृजत ]। (ण)

[सर्वे सविस्मयमवलोकयन्ति ]। (त)

* भर्त्त:! सङ्गीतके अभ्यन्तरे स्व: इति सं०।

† मालविके! इत: दक्षतरा सङ्गीतसहायिनी ते का रोचते? इति सं०।

‡ अहो!! भर्त्तृदारिका!! जयति जयति भर्त्तृदारिका इति सं०।

वचनेनैव समागते ते कलाविद्यायां शिक्षिते इति सामान्येनावगमात् विशेषावगमार्थं "कस्यां कलायाम्" इत्यादि प्रश्न: युज्यते एवेति बोध्यम्।

(ठ) सङ्गीतके सङ्गीतकलायाम्, अभ्यन्तरे कृतप्रवेशे इत्यर्थः, अभिविनीते इति यावत्। स्व: भवाव:, आवामिति शेष.।

(ड) अन्यतरा एका काचित्।

(ढ) इत: अनयोर्मध्ये। दक्षतरा पटुतरा, शिक्षानैपुण्येन श्रेष्ठा इत्यर्थ:। सङ्गीतसहायिनी सङ्गीतविद्यायां साहाय्यकारिणी। ते तुभ्यं, रोचते मनोनीता भवतीत्यर्थ:, या ते मनोनीता भवेत् तामेवाहं गृह्णामीति भाव:। "इदो रुच्चदि" इत्यत्र "इदो पेक्ख, कदरा ते संगीदसह-आरिणी रुच्चदि" इति पाठान्तरे—इत: प्रेक्षस्व, कतरा ते सङ्गीत-सहकारिणी रोचते इति सं०।

(ण) तया मालविकया। वाष्पं नेत्रवारि। विसृजत. विमुञ्चत'। चिरदृष्टस्वजनस्य आकस्मिकदर्शनात् शोकावेगेन हर्षावेगेन वा अश्रुमोचनं बोध्यम्।

(त) "सविस्मयमवलोकयन्ति" इत्यत्र "विलोकयन्ति" इति माल॰ पाठ: क्वचित् दृश्यते।

राजा। के भवत्यौ ? का वेयम् ?। (य)

उभे। अम्हाणं भट्टिदारिआ। * (द)

राजा। कथमिव ?

उभे। सुणादु भट्टा। जो सो भट्टिणा विजअदंडेहिं विदब्भणाहं वसीकरिअ बंधणादो मोइदो कुमारो माहवसेणो णाम, तस्स इअं कणीअसी बहिणिआ मालविआ णाम। † (ध)

धारि। कहं !! राअदारिआ इअं !! चंदणं क्खु मए पादुआउवदेसेण दूसिदं। ‡ (न)

---

* आवयोर्भर्तृदारिका इति सं०।

† शृणोतु भर्ता। यः स भर्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनो नाम, तस्येयं कनीयसी भगिनी मालविका नाम इति सं०।

‡ कथम् !! राजदारिकेयम् !! चन्दनं खलु मया पादुकाऽपदेशेन दूषितम् इति सं०।

---

(य) इयं मालविका।

(द) "अम्हाणं" इत्यस्य प्राक् "भट्टा ! एसा" इत्यधिकः पाठः क्वचिद् दृश्यते। भर्तृदारिका राजनन्दिनी, "राजा भट्टारको देवस्तत्सुता भर्तृदारिका" इत्यमरः।

(ध) भर्त्रा प्रभुणा भवता। विजयदण्डैः जयसाधनैः सैन्यैः, "दण्डः सैन्ये दमे यमे" इति हैमः। विदर्भनाथं यज्ञसेनम्। वशीकृत्य अधीनीकृत्य, पराजित्य इत्यर्थः। कनीयसी कनिष्ठा।

(न) राजदारिका राजबाला, राजकुमारीत्यर्थः। इयं मालविका। पादुकाऽपदेशेन उपानद्व्याजेन, पादुका इति खड़ाम इत्यर्थः, "पादुआवदेसेण" इत्यत्र "पादुओवओएण" इति पाठे—पादुकोपयोगेन इति सं०। चन्दनं देवपूजार्हमिति भाव.। दूषितं कलुषीकृतं, पादुकाखनेन चन्दनकाष्ठस्य पदावमर्दनमिव सामान्यनारीभावेन

राजा। अथात्रभवती कथमित्थम्भूता? (प)

माल। [निःश्वस्यात्मगतम्]। विहिणिओएण। * (फ)

दिती। सुणादु भट्टा। दाआदवसं गदे भट्टिदारए माहव-सेणे तस्स अमच्चेण अज्जसुमदिणा अम्हारिसं परिअणं उज्झिअ गूढं आणीदा एसा। † (ब)

राजा। श्रुतपूर्वं मयैतत्। (भ) ततस्ततः?

---

* विधिनियोगेन इति सं०।

† शृणोतु भर्त्ता। दायादवशंगते भर्त्तृदारके माधवसेने तस्या-मात्येन आर्य्यसुमतिना अस्मादृशं परिजनमुज्झित्वा गूढमानीतैषा इति सं०।

---

राजदारिकाया अस्या मालविकायाः परिचारिकाकर्मणि नियोगं कारागारे निवेशादिरूपनिग्रहञ्च कृत्वा मया अतीव अन्याय्यमाचरित-मिति भावः।

(प) अथ प्रश्ने, "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः। अत्रभवती सम्मानार्हा मालविका, कथं केन प्रकारेण, इत्थम्भूता? ईदृशीं विषमामवस्थां गता? परिचारिकात्वं प्राप्ता? इति यावत्।

(फ) विधिनियोगेन विधेः दैवस्य, नियोगेन आदेशेन, दुरदृष्ट-वशेनेत्यर्थः, इत्थम्भूताऽस्मीति शेषः।

(ब) दायादवशं गते दायं पैतृकधनम्, आददाति गृह्णातीति दायादः पैतृकधनभागी, सपिण्ड इत्यर्थः, ज्ञातिर्वंशसेन इति यावत्, "दायादस्तु भवेत् पुंसि सपिण्डे तनयेऽपि च" इति मेदिनी; तस्य वशम् अधीनतां, गते प्राप्ते, यज्ञसेनेन पराभूते वन्दीकृते चेत्यर्थः। तस्य माधवसेनस्य। अस्मादृशम् अस्मद्विधम्। उज्झित्वा परित्यज्य। गूढम् अप्रकाशं यथा तथा, गुप्तभावेनेत्यर्थः। एषा भर्त्तृदारिका मालविका।

(भ) श्रुतपूर्वं पूर्वं श्रुतम्।

द्विती। भट्टा। अदो अवरं ण आणामि। * (म)

परि। अतः परमहं मन्दभागिनी कथयिष्यामि। (य)

उभे। भट्टिदारिए। अज्जकोसिईए विअ सरसंजोओ, णं सा ज्जेव्व ? । † (र)

माल। अह इम्। ‡ (ल)

उभे। जदिवेसधारिणी अज्जकोसिई दुक्खेण विभावीअदि। भअबदि। णमो दे। § (व)

---

* भर्त्तः! अतोऽपरं न जानामि इति सं०।

† भर्त्तृदारिके! आर्य्यकौशिक्या इव स्वरसंयोगः, ननु सैव? इति सं०।

‡ अथ किम् इति सं०।

§ यतिवेशधारिण्यार्य्यकौशिकी दुःखेन विभाव्यते। भगवति! नमस्ते इति सं०।

---

(म) अतः अस्मात्, अपरम् अन्यं, कथितवृत्तान्तात् परमित्यर्थः। "अवरं" इत्यत्र "वर" "आणामि" इत्यत्र "आणीमो" इति च पाठान्तरद्वयम्; तत्र—परं, जानीम' इति क्रमात् सं०।

(य) "अतः परमहम्" इत्यत्र "ततः परम्" इति पाठान्तरम्।

(र) "भट्टिदारिए!" इति पाठ' क्वचित् न दृश्यते। स्वरसयोगः स्वरस्य ध्वनेः, सयोगः सम्बन्धः, कण्ठध्वनिसम्बन्ध इत्यर्थः। ननु इति प्रश्ने, सा एव किम्? इत्यर्थः। "णं सा ज्जेव्व" इति पाठस्तु पुस्तकविशेषे शिल्पिदारिकयोः प्रश्ने मालविकायाः प्रत्युत्तरत्वेन विन्यस्तो दृश्यते।

(ल) "अह इं" इत्यत्र "णं सा ज्जेव्व" इति पाठान्तरम्।

(व) यतिवेशधारिणी यतेः जितेन्द्रियस्य, वेशं परिच्छदं, धरतीति तादृशी, परिव्राजिकोचितकाषायवसनधारिणीत्यर्थ', "ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते" इत्यमरः। दुःखेन क्लेशेन, विभाव्यते लक्ष्यते,

परि। स्वस्ति भवतीभ्याम्। (श)

राजा। कथम्॥ आप्तवर्गोऽयं भगवत्याः॥ ? (प)

परि। एवमेतत्। (स)

विदू। तेण कहेदु दाणिं भअवदी अत्तभोदीवुत्तंतं टाव असेस। * (ह)

---

* तेन कथयत्विदानीं भगवत्यत्रभवतीवृत्तान्तं तावदशेषम् इति सं०।

---

परिचीयते इत्यर्थः, यतिवेशधारणात् बहुशो दृष्टपूर्वैरपि इयम् "इयमेव सा आर्य्यकौशिकी" इति सहसा निर्णेतुं न शक्यते, किन्तु कण्ठस्वर-श्रवणादिना सावहितदर्शनादिना च कथञ्चित् "इयमेव सा" इति निर्णेतुं शक्यते, अत एव आवां दर्शनमात्रेणैव आर्य्यां परिचेतुमसमर्थे अभूव इति भावः। अत्र "विभावोअदि" इत्यन्त वाक्य मालविकां प्रति, "भअवदि! इत्यादि वाक्यन्तु कौशिकीं प्रति प्रयुक्तमिति बोध्यम्। "खमो दे" इत्यत्र "वंदामो" इति पाठान्तरे—वन्दावहे इति सं०।

(श) क्वचित् पाठोऽयं न दृश्यते। स्वस्ति क्षेमं, कुशलमित्यर्थः, "स्वस्त्याशीःक्षेमपुण्यादौ" इत्यमरः; अस्तु इति शेषः। भवतीभ्याम् इति "नमःस्वस्ति—" इत्यादिना चतुर्थी।

(प) कथमिति प्रश्नसूचकं सम्भावनासूचकं वा अव्ययम्; "कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे। प्रश्ने सम्भावनायाञ्च" इति मेदिनी; अयं मालविकादिजनसमूहः, भगवत्याः भवत्याः, आप्तवर्गः स्वगणः, स्वजनसमूह इत्यर्थ, किम्? "आप्तो लब्ध स्व-सत्ययोः" इति मेदिनी; यद्वा—अयं भगवत्या आप्तवर्ग इति सम्भावयामि।

(स) एतत् भवता यदुक्तं तत्, एवम् ईदृशमेव, सत्यमेवेत्यर्थः। "एवं प्रकारे स्यादङ्गीकारेऽवधारणे" इति मेदिनी।

(ह) तेन भगवत्या आप्तवर्गत्वेन हेतुना। अत्रभवतीवृत्तान्तम् अत्रभवत्याः सम्मानार्हाया मालविकायाः, वृत्तान्तं वार्त्तां, विवरणमिति यावत्। अशेषं सम्पूर्णम्।

परि। [सवैक्लव्यम्]। तावत् श्रूयताम्। माधवसेनसचिवं समाग्रजं सुमतिमवगच्छ। (क)

राजा। उपलक्षितः। (ख) ततस्ततः ?

परि। स इमां तथागतस्त्रातृकां मया सार्धमपवाह्य भवत्सम्बन्धापेक्षया पथिकसार्थं विदिशागामिनमनुप्रविष्टः। (ग)

राजा। ततस्ततः ?

परि। स च अटव्यन्तरे निविष्टो गताध्वा वणिग्गण इव विश्रमितुमारब्धः। (घ)

---

(क) सवैक्लव्य विक्लवः विह्वलः, शोकेनात्यर्थमधीर इत्यर्थः, तस्य भावः वैक्लव्यं, तेन सह वर्त्तमानं यथा तथा। तावत् साकल्येन, मालविकायाः कृत्स्नो वृत्तान्त इत्यर्थः, "यावत्तावच्च साकल्ये" इत्यमरः।

(ख) उपलक्षितः विदितः, भगवत्या शोककातर्यं दृष्ट्वा स कश्चित् परमात्मीयो भवेदिति प्रागेव मया अनुमित इत्यर्थः। "उपलक्षितः" इत्यत्र "उपलक्षितम्" इति पाठान्तरम्।

(ग) स मदग्रजः सुमतिः। तथागतस्त्रातृकां तथागतः तादृशी-अवस्थां प्राप्तः, दायादानां वशं गत इत्यर्थः, भ्राता सोदरो माधवसेनो यस्यास्तादृशीम्। इमां मालविकाम्। अपवाह्य निःसार्य्य, अन्तःपुरा-दिति शेषः। भवत्सम्बन्धापेक्षया भवता सह यः सम्बन्धः सम्पर्कः, परिणयसङ्घटनमित्यर्थः, तदपेक्षया तदनुरोधेन। विदिशागामिनं विदिशानाम्नीं भवत इमां नगरीमुद्दिश्य गच्छन्त, पाथिकसार्थं पान्थसमूहं, पथचारिवणिक्समूहमित्यर्थो वा, "सार्थो वणिक्समूहे स्यादपि सङ्घात-मात्रके" इति मेदिनी। अनुप्रविष्टः तेन सह मिलितः, विदिशा-मागन्तुमिति भावः।

(घ) स च मद्भ्राता पथिकसार्थो वा, अटव्यन्तरे वनमध्ये, निविष्टः उपस्थितः सन्, गताध्वा अतिक्रान्तपथः, पर्य्यटितसुदूरमार्ग इत्यर्थः, अत एव परिश्रान्त इति भावः, वणिग्गणः वणिक्समूह इव, वणिक्-समूहो यथा विश्रमितुमारब्धः तथा इत्यर्थः, विश्रमितुं विश्रामं कर्त्तुम्, आरब्धः प्रवृत्तः, कस्मिंश्चिद्वनमध्ये प्रविश्य वणिक्समूहैः सह

राजा। ततस्ततः ? (ङ)

परि। ततः किं चान्यत्—(च)

तूणीरपट्टपरिणद्धभुजान्तराल-
मापार्ष्णिलम्बिशिखिबर्हकलापधारि।
कोदण्डपाणि निनदत्प्रतिरोधकाना-
मापातदुष्प्रसहमाविरभूदनीकम्॥ १०॥

---

विश्रामार्थमुपविष्ट इत्यर्थः। "वणिग्गण इव विश्रमितुमारब्ध" इत्यत्र "वणिग्जन" इति मात्रः पाठः क्वचित्।

(ङ) "ततस्ततः ?" इत्यत्र "किञ्चान्यत् ?" इति पाठान्तरम्।

(च) ततस्तदनन्तरम्, अन्यत् अपर, किम् ? एष वक्ष्यमाणव्यापारः सञ्जात इत्यर्थ। "ततः किं चान्यत्" इत्यत्र "तत" इति मात्रः पाठः क्वचित्।

तदनन्तरं यत् भूतं तदेव वर्णयति, तूणीरेति।—तूणीरपट्टेन तूणबन्धनार्थं तत्सम्बद्धपट्टनिर्मितसूत्रविशेषेण, परिणद्धं सम्यगाबद्धं, भुजान्तरालं बाह्वोः मध्यप्रदेश', वक्षोदेश इत्यर्थः यस्य तादृशम्, पृष्ठदेशे विलम्बितस्य तूणीरस्य युद्धसम्भूमेण स्खलननिवारणार्थे वक्षोदेशेन सह आबद्धमिति भावः, आपार्ष्णि पार्ष्णिपर्य्यन्तं, पादमूलपर्य्यन्तमित्यर्थ, गुल्फाधोवर्त्तिपादपश्चाद्भागपर्य्यन्तमिति यावत्, "पार्ष्णिः स्त्रीपुंसयोः पादमूले स्यात् ध्वजिनीकटौ" इति रन्तिदेवः, "पाद' पदङ्घ्रिश्चरणोऽस्त्रियाम। तद्ग्रन्थी घुटिके गुल्फौ पुमान् पार्ष्णिस्तयोरधः॥" इत्यमरश्च, लम्बते दोदुल्यते इति तादृशं, शिखिनः मयूरस्य, बर्हकलाप पिच्छसमूहं, "शिखण्डश्च पिच्छबर्हे नपुंसके" इति, "कलापो भूषणे बर्हे तूणीरे संहतेऽपि च" इति चामरः; धारयति दधाति, शिरसा इति भाव.; तादृश, "शिखिबर्ह" इत्यत्र "शिखिपिच्छ" इति पाठान्तरम्; "परिणद्ध" इत्यत्र परिबद्ध इति पाठान्तरम्; तथा कोदण्ड धनुः, पाणौ हस्ते यस्य तादृशं धनुर्द्धरं, प्रतिरोधकानां दस्यूना, "चौरैकागारिकस्तेनदस्युतस्करमोषकाः। प्रतिरोधिपराक्कन्दिपाटच्चरमलिम्लुचाः॥" इत्यमरः;

[ मालविका भयं रूपयति ]। (छ)

विदू। भोदि! मा भाआहि, अदिक्कंतं क्खु अत्तभोदी कहेदि। * (ज)

राजा। ततस्ततः ?

परि। ततो मुहूर्त्तं बद्धायुधास्ते पराङ्मुखीभूताः सार्थवाहयोद्धारस्तस्करैः। (झ)

---

* भवति! मा विभीहि, अतिक्रान्तं खल्वत्रभवती कथयति इति सं०।

---

अनीकं सैन्यम्, आपातदुष्प्रसहम् आपातेन आगमनमात्रेण, कर्णकुहरयोरुपस्थितिक्षणेनेत्यर्थः, श्रवणसमकालमेवेति यावत्, दुष्प्रसहम् अतीवभैरवकर्कशत्वात् दुःखेन सोढुं शक्यं यथा स्यात् तथा, निनदत् शब्दायमानं सत, आविरभूत् प्रादुरासीत्, अस्माकं समीपे समागमदित्यर्थः। श्लोकेऽस्मिन् "शिखिबर्हकलापधारि" इत्यत्र बर्हकलापशब्दयोरेकार्थकत्वात् आपाततः पुनरुक्तवदाभासमानत्वेऽपि कलापशब्दस्य समूहार्थकतया पर्य्यवसानात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः, तथा चोक्तं दर्पणे—"आपाततो यदर्थस्य पौनरुक्त्याऽवभासनम्। पुनरुक्तवदाभासः स भिन्नाकारशब्दगः॥" इति। वसन्ततिलकं वृत्तम्॥ १०॥

(छ) रूपयति नाटयति, अभिनयेन प्रकटयतीत्यर्थः।

(ज) अतिक्रान्तम् अतीतं, भूतपूर्ववृत्तान्तमित्यर्थः। अत्रभवती पूजनीया पण्डितकौशिकी।

(झ) मुहूर्त्तं क्षणकालमात्रं, क्षणकालमध्ये इत्यर्थो वा। बद्धायुधाः गृहीतास्त्राः। "बद्धायुधाः" इत्यत्र "मुग्धयोद्धारः" इति पाठान्तरम्। पराङ्मुखीभूताः प्रतिनिवृत्ताः, पराजिताः सन्तः पलायिषत इत्यर्थः। सार्थवाहयोद्धारः सार्थवाहेषु वणिग्जनेषु, योद्धारः युद्धक्षमाः, सार्थवाहानां योद्धारः रक्षकसैन्यानीत्यर्थो वा, सार्थवाहाश्च ते योद्धारः इति वा।

राजा। भगवति! हन्त!! अतः कष्टतरमिदानीं श्रोतव्यम्। (ञ)

परि। ततः स मत्सोदर्य्यः,—(ट)

इमां परीप्सुर्दुर्जातिं पराभिभवकातराम्।
भर्त्तृप्रियः प्रियैर्भर्त्तुरानृण्यमसुभिर्गतः॥ ११॥

---

(ञ) हन्त खेदे। कष्टतरम् अतीव क्लेशप्रदम्। "भगवति! श्रोतव्यम्" इत्यत्र "हन्त! इतःपरं कष्टतर श्रोतव्यम्" इति पाठान्तरम्।

(ट) मत्सोदर्य्यः मम सहोदर, "भ्राता तु स्यात् सहोदरः। समानोदर्य्यसोदर्य्यसगर्भ्यसहजा अपि॥ सोदरश्च" इति नाममाला। सः अग्रजः सुमतिः। "स मत्सोदर्य्य" इत्यत्र "सुमतिः" इति पाठान्तरम्।

वर्णनीयमुपसंहरति, इमामिति।—भर्त्तृप्रियः भर्त्तुः स्वामिनः, प्रतिपालकस्य राज्ञ इत्यर्थः, प्रियः प्रीतिभाजनम्, अतीव विश्वस्तत्वादिति भावः, यद्वा—भर्त्ता प्रियो यस्य स भर्त्तृप्रियः प्रभुभक्त इत्यर्थ., स मत्सोदर्य्यः इति गद्यस्थेनान्वयः, दुर्जाते व्यसने, तस्यां विपदि इत्यर्थ', "दुर्जातं व्यसने क्लीबेऽसम्यग्जातेऽन्यलिङ्गकम्" इति मेदिनी; "दुर्जाते" इत्यत्र "दुर्जातिः" इति पाठे—निन्दितजातिसमुद्भवात् तस्करादित्यर्थः; पराभिभवकातरां परैः शत्रुभिः, अभिभवः पराभव, अवमाननमित्यर्थः, तस्मात् तेन वा कातराम् अधीरां, भयाभिभूतामित्यर्थः, इमां मालविकां, परीप्सुः पर्य्याप्तुमिच्छु, परित्रातुमिच्छु सन् इत्यर्थः, "पर्य्याप्तिः स्यात् परित्राणं हस्तवारणमित्यपि" इत्यमर.; प्रियैः इष्टैः, प्राणिमात्राणामतीव प्रियत्वात् अत्यन्तदुस्त्यजैरपीति भावः, असुभि' प्राणैः, प्राणविनिमयेनेति यावत्, भर्त्तुः प्रभोः, माधवसेनस्येति यावत्, आनृण्यम् ऋणाभावत्वम्, अन्नदातुः प्रभोः भगिन्याः शत्रुहस्तादुद्धारार्थं स्वजीवनदानरूपप्रत्युप-कारित्वमित्यर्थः, गतः प्राप्त', दस्युभिर्निहतः भर्त्तु ऋणपरिशोधं चकारेति निष्कर्षः। श्लोकेऽस्मिन् "असुभिरानृण्यं गतः" इति वचनभङ्ग्या गम्य-मानस्य मृत्योः अभिधानात् पर्य्यायोक्तालङ्कार., "पर्य्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते" इति लक्षणात्। पथ्यावक्त्रं वृत्तम्॥ ११॥

स्व। आं ॥ हा ॥ हदो सुमदी णं। * (ठ)

द्विती। तदो क्खु भट्टिदारिआए इअं समवत्था संवुत्ता। † (ड)

[ परिव्राजिका वाष्पं विसृजति ]।

राजा। भगवति। तनुत्यजामीदृशी लोकयात्रा। न शोच्यस्तत्रभवान् सफलीकृतभर्तृपिण्डस्तपस्वी। (ढ) ततस्ततः ?

---

* आः ॥ हा ॥ हत. सुमतिर्ननु इति सं०।

† तत. खलु भर्तृदारिकाया इयं समवस्था संवृत्ता इति सं०।

---

(ठ) आः इति पीड़ासूचक, हा इति च विषादसूचकमव्ययं, "आस्तु स्यात् कोपपीड़योः" 'हा विषादशुगर्त्तिषु" इति चामरः। "आः हा" इत्यत्र "अहो! हदो सुमदी" इति पाठान्तरम्।

(ड) भर्तृदारिकायाः मालविकायाः। इयम् अनुभूयमाना। "तदो" इत्यत्र "अदो" इति पाठान्तरम्।

(ढ) तनुत्यजां मरणधर्मिणां, मर्त्यानां प्राणिनामिति यावत्। ईदृशी एवंविधा, अकालमरणादिरूपा इत्यर्थः। लोकयात्रा लोके भुवने, परलोके इति यावत्, यात्रा गमनं, देहिनां लोकान्तरगमनस्य कोऽपि नियतो विधिर्नास्तीत्यर्थः; यद्वा—लोके इहलोके, यात्रा यापनम्, अवस्थितिप्रकार इत्यर्थः, देहिनां जीवनयापनमकालमरणादिरूपविघ्नकण्टकसङ्कुलमिति भावः। "अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवम् ॥" इति स्मरणात्। "यात्रा तु यापनेऽपि स्यात् गमनोत्सवयोः स्त्रियाम्" इति मेदिनी। तत्रभवान् माननीयः, भर्तुरुपकारार्थं जीवनदानेन श्लाघ्यजीवन इति भावः, सफलीकृतं सार्थकीकृतं, भर्तुर्माधवसेनस्य भगिन्याः, भर्तुर्माधवसेनजनकस्य दुहितुरिति वा रक्षणार्थं जीवनपरित्यागादिति भावः, भर्तुः माधवसेनस्य, तत्पितुर्वा, पिण्डः कवलः, भर्तृदत्तः अन्नग्रास इत्यर्थः, यद्वा—पिण्डं जीवनं, वेतनमित्यर्थः येन स तादृशः, "पिण्डो वृन्दे जवापुष्पे गोले बोलेऽङ्ग्रिलिङ्गयोः"।

परि। ततोऽहं मोहमुपागता यावत् संज्ञां प्रतिलभे, तावदियं दुर्लभदर्शना संवृत्ता। (ण)

राजा। महत् खलु कृच्छ्रमनुभूतं तत्रभवत्या। (त)

परि। ततो भ्रातुः शरीरमग्निसात् कृत्वा पुनर्नवीकृतदुःखया त्वदीयं देशमवतीर्य्य काषाये गृहीते। (थ)

---

कवले पिण्डन्तु वेश्मैकदेशे जीवनायसोः॥" इति हेमचन्द्रः। तपस्वी अनुकम्प्यः, कृपार्ह इत्यर्थः, "तपस्वी तापसे चानुकम्प्ये त्रिषु" इति मेदिनी। पुस्तकविशेषे "तपस्वी" इति पाठो नास्ति। क्वचित् "ततस्ततः?" इति पाठो नास्ति। "दंष्ट्रिभिः शृङ्गिभिर्वाऽपि हता म्लेच्छैश्च तस्करैः। ये स्वाम्यर्थं हता यान्ति राजन्! स्वर्गं न संशयः॥" इति रघुनन्दनधृताग्निपुराणोक्तवचनात् स्वाम्यर्थं तस्करैर्हतस्य सुमतेः स्वर्गसुखसम्भोगस्य अवश्यम्भावित्वात् शोच्यत्वाभावेन तदर्थं वाष्पमोचनं स्वर्गप्रतिबन्धकं न कर्त्तव्यमिति भावः।

(ण) यावत् यदा इत्यर्थः। संज्ञां चेतनाम्। प्रतिलभे प्राप्नोमि। "प्रतिलभे" इत्यत्र "लभे" इति क्वचित् पाठः। तावत् तदा इत्यर्थः। इयं मालविका। दुर्लभदर्शना दुर्लभं दुष्प्रापं, दर्शनं साक्षात्कारो यस्याः सा तादृशी, तस्करैरपह्रियमाणत्वात् मम चक्षुषोरगोचरीभूता इत्यर्थः।

(त) कृच्छ्रं कष्टम्। तत्रभवत्या पूजनीयया भवत्या। "तत्रभवत्या" इत्यत्र "भगवत्या" इति पाठान्तरम्।

(थ) अग्निसात् अग्नये देयं,कृत्वा विधाय,भस्मीकृत्येत्यर्थः। नवीकृतदुःखया अनवं नवं कृतं कालेन मन्दीभूतमपि भ्रातृवियोगेन पुनरुद्दीपितं, दुःखं माधवसेनबन्धनजनितं स्वदेशात् पलायनजनितञ्च मनःकष्टं यस्यास्तथाभूतया। "पुनर्नवीकृतदुःखया" इत्यत्र "पुनर्नवीभूतवैधव्यदुःखया" इति पाठान्तरम्। अवतीर्य्य समागम्य। काषाये कषायेण रक्ते इति वाक्येन गैरिकादिरञ्जितवसनयुगलमित्यर्थः। "अवतीर्य्य काषाये" इत्यत्र "अवतीर्य्य इमे काषाये" इत्यधिकः पाठः क्वचित्।

राजा। युक्तः सज्जनस्यैष पन्थाः। (द)

परि। सेयमाटविकेभ्यो वीरसेनं, वीरसेनाद्देवीं गता; देवीगृहे लब्धप्रवेशया मया चानन्तरं दृष्टा, इत्येवमवसानं कथायाः। (ध)

माल। [आत्मगतम्]। किं णु क्खु भट्टा संपदं भणादि। * (न)

राजा। अहो। परिभवोपहारिणो विनिपातः। (प) कुतः,—

* किं नु खलु भर्त्ता साम्प्रतं भणति इति सं०।

(द) एषः काषायग्रहणरूपः, पन्थाः मार्गः, निवृत्तिमार्गाश्रयण-मित्यर्थः। युक्तः उचितः। क्वचित् "पन्था." इत्यनन्तरं "ततस्ततः?" इत्यधिकः पाठो दृश्यते।

(ध) सा भ्रातृहस्तपतिता इत्यर्थः, इयं परिदृश्यमाना मालविका। आटविकेभ्य. वनचरेभ्यः, दस्युभ्य इति यावत्। वीरसेनं देव्या वर्णावरं भ्रातरं भवदीयसेनानायकं, गता इत्यनेनान्वयः। देवीं धारिणीम्। "वीरसेनाद्देवीम्" इत्यत्र "वीरसेनाच्च देवीम्" इति कुत्रचित् पाठः। लब्धप्रवेशया प्रविष्टया इत्यर्थः, प्राप्ताश्रयया इति यावत्। अनन्तरं प्रवेशानन्तरम्। दृष्टा प्रत्यक्षीकृता, इयमिति शेष.। अवसानं समाप्तिः। कथायाः मत्कथितवृत्तान्तस्येत्यर्थः। "लब्धप्रवेशया मया चानन्तरं दृष्टा इत्येवम्" इत्यत्र "लब्धप्रवेशया दृष्टेत्येतत्" इति क्वचित् पाठान्तरं दृश्यते।

(न) भर्त्ता प्रभुः, राजा इत्यर्थः, साम्प्रतम् अधुना। "मत्सम्बन्धा-पेक्षया आनीतामिमाम् अहमेव गृह्णामि" उत "मया विमुक्तबन्धनं भ्रातरमिदानीं गच्छतु" इत्येतयोः पक्षयोः किं साम्प्रतं कथयतीति न जाने इति भावः। एतेन राजार्थं मालविकायाः महती उत्कण्ठा व्यज्यते।

(प) अहो इति विषादे। परिभवोपहारिणः परिभवस्य तिरस्कारस्य, लोकसमाजे अवमाननाप्राप्तिरूपस्य दुःखस्येत्यर्थः, उपहारिणः उपहर्त्तुः, दातुरित्यर्थः, दैवस्येति शेषः, विनिपातः अतर्कित-समागमः। "विनिपातः" इत्यत्र "विनिपाताः" इति पाठान्तरम्।

प्रेष्यभावेन नामेयं देवीशब्दक्षमा सती ।
स्नानीयवस्त्रक्रियया पत्त्रोर्णं वोपयुज्यते ॥ १२ ॥

धारि । भअवदि । तुए अहिजणवदिं मालविअं अणाचक्खंतीए असंपदं किदं । * (फ)

---

* भगवति ! त्वया अभिजनवती मालविकामनाचक्षाणया असाम्प्रतं कृतम् इति स० ।

---

दुर्दैवस्य अतर्कितागमनं समर्थयितुमाह, प्रेष्यभावेनेति ।—इयं मालविका, देवीशब्दक्षमा कृताभिषेकाया राजपत्न्या वाचकशब्देन निर्देशयोग्या, सती, अपीति शेषः, प्रेष्यभावेन परिचारककार्य्येण, स्नानीयवस्त्रक्रियया स्नानकाले परिधेयवस्त्रकार्य्येण गात्रमार्जनीवस्त्र-कार्य्येण वा, पत्त्रोर्णं वा धौतकौषेयवस्त्रमिव, "पत्रेषु वट-लकुचादिपत्रेषु क्रिमिभिरूर्णायाः कृतत्वात् पत्रसम्बन्धिनी ऊर्णा अस्येति पत्त्रोर्णम्" इति भरतव्याख्यानात्, "पत्त्रोर्णं धौतकौषेयम्" इत्यमरः ; "इववत्वा-यथाशब्दः" इति केशवः ; उपयुज्यते सम्बध्यते, व्यवह्रियते इति यावत्, दुर्दैवेनेति शेषः, इति नाम सम्भावयामि । सुपवित्रस्य महामूल्यस्य पत्त्रोर्णस्य स्नानीयवस्त्रक्रियया उपयोगो यथा अनुचितः वस्त्रस्य अवमाननाकरश्च तथा देवीशब्दार्हाया अस्या मालविकाया दासत्वेनोपयोग अतीवानुचितः अवमाननाकरः सम्भावनाऽनर्हश्च, किन्तु दुर्दैवेन अत्यन्तासम्भवमपि तदस्या आपतितमित्यहो ! दैवविपत्तिरिति भावः । उपमाऽलङ्कारः । पथ्यावक्त्रं वृत्तम् ॥ १२ ॥

(फ) अभिजनवती प्रशस्तवंशोद्भूतां राजवंशोत्पन्नामित्यर्थः, प्रशंसायां मतुप् । "सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ । वंशोऽन्ववायः सन्तानः" इत्यमरः । अनाचक्षाणया अकथयन्त्या, अस्याः परिचय-मददानया इत्यर्थः । असाम्प्रतम् अयुक्तम् । मालविका राजनन्दिनी इति भवतो यदि अवदिष्यत् तदा अस्या ईदृशी दुरवस्था नाभविष्यत्, अतः परिचयं गोपायन्त्या भवत्या महदन्याय्यं कृतमिति भावः ।

परि। शान्तं पापम्। कारणेन खलु मया नैर्घृण्यमवलम्बितम्। (ब)

धारि। किं विअ तं कारणं ? * (भ)

परि। इयं पितरि जीवति केनापि देवयात्रागतेन शिवादेशकेन साधुना मत्समक्षं व्यादिष्टा—"वत्सरमात्रमियं प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यति"। तदेवं भाविनमादेशमस्यास्त्वत्पादशुश्रूषया परिणमन्तमवेक्ष्य कालप्रतीक्षया मया साधु कृतमिति पश्यामि। (म)

---

* किमिव तत् कारणम् ? इति सं०।

(ब) शान्तमिति वारणार्थकमव्ययम्, "अव्ययं वारणे शान्तम्" इति मेदिनी; पापम् अनिष्टम्, अनिष्टं प्रतिहत भवतु इत्यर्थ. अनिष्टकरणाभिप्रायेण मया नास्याः प्रकृतपरिचयो गोपित इति भावः। कारणेन निमित्तेन, केनचित् हेतुना इत्यर्थः। "कारणेन खलु" इत्यत्र "केन च कारणेन" इति पाठान्तरम्। नैर्घृण्य निष्करुणत्वम्, अस्या इत्यवस्थादर्शनेनापि तन्मोचनार्थं चेष्टाऽकरणात् निर्दयत्वमित्यर्थ., "कारुण्यं करुणा घृणा। कृपा दयाऽनुकम्पा स्यादनुक्रोशः" इत्यमरः।

(भ) किमिव ? किम्प्रकारम् ?

(म) इयं मालविका। पितरि अस्या एव जनके। देवयात्रागतेन देवस्य अस्मद्देशे प्रतिष्ठितस्य देवताविशेषस्य, यात्रायाम् उत्सवे, "यात्रा तु यापनेऽपि स्यात् गमनोत्सवयोः स्त्रियाम्" इति मेदिनी; आगतेन समुपस्थितेन। शिवादेशकेन शुभनिर्णायकेन, शिवशब्दोऽत्र अशिवशब्दस्यापि उपलक्षणं, तेन च, शिवादेशकेन—शिवाशिवादेशकेन, कररेखादिदर्शनेन शुभाशुभनिर्देशकारिणा इत्यर्थः। "शिवादेशकेन" इत्यत्र "सिद्धादेशकेन" इति पाठान्तरम्। साधुना सज्जनेन, सन्न्यासिनेति दैवज्ञेनेति वा यावत्। व्यादिष्टा कथिता इत्यर्थः; "व्यादिष्टा" इत्यत्र "समादिष्टा" इति पाठान्तरम्। प्रेष्यभावं दासभाव, परिचारिकायाः वृत्तिमित्यर्थः। सदृशभर्तृगामिनी रूपगुणाद्यनुरूपपतिसङ्गता।

राजा। युक्ता प्रतीक्षा। (य)

कञ्चु। देव। कथान्तरेणान्तरितम्। अमात्यो विज्ञापयति—"विदर्भगतमनुष्ठेयमवधारितमस्माभिः। देवस्य तावदभिप्रायं श्रोतुमिच्छामि" इति। (र)

राजा। मौद्गल्य। तत्रभवतोर्यज्ञसेन-माधवसेनयोर्द्वैराज्यमिदानीमवस्थापयितुकामोऽस्मि। (ल)—

---

एवम् ईदृशम्। भाविनं भविष्यन्तम्, अवश्यम्भाविनमिति यावत्। आदेशम् उक्तिं, व्यादिष्टं प्रेष्यभावमित्यर्थः। अस्याः मालविकायाः। त्वत्पादशुश्रूषया तव देव्या धारिण्याः चरणसेवया। परिणमन्तं परिणतिं प्राप्नुवन्तं, सफलीभवन्तमित्यर्थः, शिवादेशकेन व्यादिष्टं मालविकायाः तं प्रेष्यभावं वत्सरमात्रभाविनं तव परिचारिकात्वेन पर्य्यवसिततया सत्यं भवन्तमिति यावत्। कालप्रतीक्षया समयक्षेपणेन, आदिष्टवाक्यस्य शेषांशोऽपि वत्सरान्ते सफलो भविष्यतीत्याशया शुभसमयोदयस्य प्रतीक्षां कृत्वा इत्यर्थः। साधु समीचीनम्। पश्यामि विवेचयामीत्यर्थः, अहमिति शेषः। इमा परिचारिकाभावेनावतिष्ठमाना दृष्ट्वा वत्सराभ्यन्तरे एवास्याः प्रज्ञातपरिचयमददाश्चेत् त्वया परित्यक्ता इयं साधुवाक्यस्य अवश्यम्भावित्वात् अन्यत्र कुत्रापि अवश्यमेव प्रेष्यभावं गच्छेत्, तत्तु न साधु भवेत्, अत एव मया साधु कृतमिति भावः।

(य) प्रतीक्षा शुभसमयोदयार्थं कालातिवाहनमित्यर्थः, युक्ता उचिता, अन्यथा अनिष्टं भवितुमर्हतीति भावः।

(र) कथान्तरेण अन्यविषयिण्या कथया। अन्तरितं व्यवहितं, मालविकाविषयकालापेन व्याहतत्वात् मया वक्तव्यान्तरं वक्तुमवसरो न लब्ध इत्यर्थः। विदर्भगतं विदर्भदेशसम्बन्धीयम्, अनुष्ठेयं कर्त्तव्यम्, अवधारितं निर्णीतं, स्थिरीकृतमित्यर्थः। "अवधारितमस्माभिः" इत्यत्र "अनुष्ठितमभूत्" "उपस्थितमभूत्" इति च पाठान्तरद्वयम्। देवस्य भवतः। अभिप्रायम् आशयं, विदर्भराजविषये यदस्माभिरवधारितं तद्विषयकं मानसं भावमित्यर्थः।

(ल) द्वैराज्यं द्वौ राजानौ यत्र देशे स द्विराजो देशः तस्य भावः

तौ पृथक् वरदाकूले शिष्टामुत्तरदक्षिणे।
नक्तन्दिनं विभज्योभौ शीतोष्णकिरणाविव ॥ १२ ॥

कञ्चु। देव। एवममात्यपरिषदे विज्ञापयामि ? (व)

राजा। [ अङ्गुल्या अनुमन्यते ]। (श)

[ निष्क्रान्तः काञ्चुकी ]।

प्रथ। [ जनान्तिकम् ]। भट्टिदारिए! दिट्ठिआ भट्टिदारओ अद्दरज्जे पडिट्ठं गमिस्सदि। * (ष)

---

* भर्तृदारिके! दिष्ट्या भर्तृदारकोऽर्द्धराज्ये प्रतिष्ठां गमिष्यति इति स०।

---

द्वैराज्यं द्वयोर्भ्रात्रोः पृथक् पृथक् राज्यमित्यर्थः। ममायमभिप्रायः, अत्र अमात्यपरिषदः किं मतम् ? इति भावः। "भ्रात्रोः" इति पाठः क्वचित् पुस्तके नास्ति।

द्वैराज्यं किंविधं भविष्यति ? इत्याशंसायामाह, ताविति।—तौ अनन्तरमेवोल्लिखितौ, उभौ यज्ञसेन-माधवसेनौ भ्रातरौ, नक्तन्दिनं रात्रिं दिनञ्च, "नक्तन्दिनम्" इत्यत्र "नक्तन्दिवम्" इति पाठान्तरम्; विभज्य विभक्तं कृत्वा, पृथक् पृथग्भावेन विषयीकृत्य इत्यर्थः, शीतोष्णकिरणौ इव चन्द्र-सूर्य्यौ इव, उत्तरदक्षिणे वरदाकूले वरदानद्याः उत्तरदक्षिणे तीरे, पृथक् स्वतन्त्रभावेन, शिष्टां पालयतां, यथा प्राकृतिकविभागमनुसृत्य चन्द्रः रात्रेः सूर्य्यश्च दिनस्य आधिपत्यं करोति, तथा मत्कृतविभागमनुसृत्य वरदानदीं सीमाभूतां कृत्वा यज्ञसेनः उत्तरकूलस्य माधवसेनश्च दक्षिण-कूलस्य आधिपत्यं करोतु, एवञ्च एकं राज्यं द्विधा विभज्य तौ पालयतामिति निष्कर्षः। उपमाऽलङ्कारः। पथ्यावक्त्रं वृत्तम् ॥ १२ ॥

(व) एवं भवदुक्तम्, अमात्यपरिषदे मन्त्रिसभायै। "विज्ञापयामि" इत्यत्र "निवेदयामि" इति पाठान्तरम्।

(श) अङ्गुल्या अङ्गुलीसञ्चालनेन, अनुमन्यते स्वीकरोति, अमात्य-परिषदे विज्ञापनमनुमोदते इत्यर्थः।

(ष) भर्तृदारिके! इति मालविकाया आमन्त्रणम्। भर्तृदारकः

माल। एदं दाव बहु मणिदव्वं जं जीविदसंसग्रादो विमुत्तो। * (स)

[पुन प्रविश्य कञ्चुकी]।

कञ्चु। विजयतां देवः। अमात्यो देवस्य विज्ञापयति—"कल्याणी देवस्य बुद्धिः; मन्त्रिपरिषदोऽप्येतदेव दर्शनम्"। (ह)—

द्विधा विभक्तां श्रियमुद्वहन्तौ
धुरं रथाश्वाविव सङ्ग्रहीतुः।
तौ स्थास्यतस्ते नृपते। निदेशे
परस्परावग्रहनिर्विकारौ॥ १४॥

* एतत्तावत् बहु मन्तव्यं यत् जीवितसंशयाद्विमुक्तः इति स०।

कुमार' माधवसेनः। प्रतिष्ठां स्थानम्, अधिकारमिति यावत्, "प्रतिष्ठा गौरवे चितौ। स्थाने च यागनिष्पत्तिचतुरक्षरपद्ययोः॥" इति मेदिनी; गमिष्यति प्राप्स्यतीत्यर्थः। "भट्टिदारिए! गमिस्सदि" इत्यत्र "भट्टदारिए! दिट्ठिआ भट्टिणा भट्टदारओ अद्धरज्जे पदिट्ठं गमइस्सदि" इति पाठान्तरे—भर्तृदारिके! दिष्ट्या भर्त्रा भर्तृदारकः अर्द्धराज्ये प्रतिष्ठां गमयिष्यति इति स०।

(स) बहु मन्तव्यं महद्भाग्यमिति विवेक्तव्यमित्यर्थः। जीवितसंशयात् जीवनसन्देहात्, यज्ञसेनस्य कारागृहे जीवितस्तिष्ठति न वा इति सन्देहादित्यर्थ, विमुक्तः परित्रातः, जीवनरक्षेव अस्माकमाशातिरिक्ता, राज्यलाभस्तु अकिञ्चित्कर एवेति भावः।

(ह) कल्याणी शुभा, शुभावहा इत्यर्थः, सपक्ष-विपक्षयोरुभयोरेव हितचेष्टाकरत्वादिति भाव.। एतदेव भवदभिप्रायानुरूपमेव। दर्शनं बुद्धिः, मनोभाव इत्यर्थः, 'दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु। शास्त्रदर्पणयोश्च" इति मेदिनी।

राज्यविभागविषये मन्त्रिपरिषदः सम्मतेः कारणं प्रदर्शयति, द्विधेति।—नृपते! हे राजन्! द्विधा समविभागेन, विभक्तां कृतविभागां, धुरं भारं, रथादीनामिति शेषः, उद्वहन्तौ धारयन्तौ, रथाश्वौ

राजा। तेन हि मन्त्रिपरिषदं ब्रूहि, सेनान्ये वीरसेनाय लेख्यताम् "एवं क्रियताम्" इति। (क)

कञ्चु। यदाज्ञापयति देवः। [इति निष्क्रम्य सप्राभृतकं लेखं गृहीत्वा पुनः प्रविश्य]। अनुष्ठिता प्रभोराज्ञा। अयं देवस्य सेनापतेः पुष्पमित्रस्य सकाशात् सोत्तरीयप्राभृतको लेखः प्राप्तः; प्रत्यक्षीकरोत्वेनं देवः। (ख)

---

रथयोजितघोटकौ, परस्परावग्रहनिर्विकारौ परस्परम् अन्योऽन्यम्, अवग्रहे आक्रमणे, निर्विकारौ विकारहीनौ, विरतौ सन्तौ इत्यर्थः, सङ्ग्रहीतुरिव संयन्तुरिव, सारथेरिवेत्यर्थः, द्विधा विभक्ताम् उक्तप्रकारेण कृतविभागां, श्रियं राजलक्ष्मीम्, उद्वहन्तौ भजमानौ, तौ यज्ञसेन-माधवसेनौ, परस्परावग्रहनिर्विकारौ परस्परावग्रहे अन्योऽन्यनिग्रहे, निर्विकारौ निस्पृहौ, निरुद्यमौ सन्तौ इत्यर्थः, "परस्परावग्रह" इत्यत्र "परस्परोपग्रह" इति पाठान्तरम्; ते तव, निदेशे आज्ञायां, स्थास्यतः वर्त्तिष्येते, एवञ्च परस्परविद्वेषाभावात् तयोः राज्यस्य कुशलं भवतश्च नियन्तृत्वमव्याहतं स्यादिति भावः। उपमाऽलङ्कारः। उपेन्द्रवज्रेन्द्र-वज्रयोर्मेलनादुपजातिर्वृत्तम्॥ १४॥

(क) तेन प्रस्तावितद्वैराज्यस्य सर्वाभिमतत्वेन हेतुना। सेनान्ये सेनापतये, "सेनानीः स्यात् पुमान् कार्त्तिकेये सेनापतौ पुमान्" इति मेदिनी। लेख्यतां, केनचित् लिपिकरेणेति शेषः। एवम् ईदृशं, वरदाया उत्तरदक्षिणकूले द्वैराज्यस्थापनमित्यर्थः, क्रियतां विधीयताम्।

(ख) प्राभृतमेव इति प्राभृतकम् उपहारः, उपढौकनमित्यर्थः, वक्ष्यमाणप्रयोगदर्शनात् तच्च उत्तरीयरूपमिति बोद्धव्य, तेन सहितमिति सप्राभृतकम् उत्तरीयोपहारसहितमित्यर्थः, "प्राभृतन्तु प्रदेशनम्। उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरः। लेखं लिपिम्। अनुष्ठिता सम्पादिता, प्रतिपालिता इत्यर्थः। सेनापतेः मौर्य्यनृपतेर्बृहद्रथस्य भूत-पूर्वसेनानायकस्य, देवस्य साम्प्रतिकराज्ञः, पुष्पमित्रस्य तदाख्यस्य भवज्जन-कस्य। सोत्तरीयप्राभृतकः उत्तरीयमेव ऊर्द्धाङ्गे धार्य्यः प्रावार एव,

राजा। [ उत्थाय प्राभृतकं सोपचारं गृहीत्वा लेखं परिजनायार्पयति। (ग) परिजनो लेखं नाम्नेनोद्घाटयति ]।

धारि। [ आत्मगतम् ]। अम्महे !! तदोमुहं ज्जेव्व णो हिअअं। सुणिस्सं दाव गुरुअणकुसलाणंतरं वसुमित्तस्स वुत्तंतं। अदिभारे क्खु पुत्तओ सेणावदी णिउत्तो। * (घ)

---

* अहो !! ततोमुखमेव नो हृदयम्। श्रोष्यामि तावद्गुरुजन-कुशलानन्तरं वसुमित्रस्य वृत्तान्तम्। अतिभारे खलु पुत्रकः सेनापति-नियुक्त इति सं०।

---

प्राभृतकम् उपढौकनं तेन सह इति सोत्तरीयप्राभृतिकः, लेखं पुष्प-मित्रस्य लिपिं, प्राप्तं आगतः इत्यर्थः। एन लेखम्।

(ग) उत्थाय,आसनादिति शेषः, पितृनिदेशं प्रति सन्मानप्रदर्शनार्थ-मिति भावः। सोपचारम् उपचारः शिष्टसम्मताचारः, नमस्कारपूर्वकं गृहीत्वा शिरसि धारणादिरूपः लौकिकव्यवहारः इत्यर्थः, तेन सहितं सोपचारं यथा भवति तथा।

(घ) ततोमुखं ततः तस्मै लेखवृत्तान्तश्रवणायेत्यर्थः, सार्वविभक्ति-कस्तसिल्; मुखं निःसरणं, चलनमित्यर्थः यस्य तादृशं, पत्रोक्तवृत्तान्त-श्रवणाय व्याकुलमित्यर्थः, "मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि" इति मेदिनी। नः अस्माकं, ममेत्यर्थः। "तदोमुहं" इत्यस्य "तन्मुखम्" इति संस्कृतं केचित् पठन्ति। पुष्पमित्रसकाशादागते पत्रे अवश्यमेव वसुमित्रस्य वृत्तान्तमस्ति, अतस्तच्छ्रवणाय मे हृदयमतीव व्याकुलं जात-मिति भावः। गुरुजनकुशलानन्तरं गुरुजनस्य पूजनीयस्य श्वशुरस्य, कुशलानन्तरं मङ्गलवार्त्ताश्रवणात् परम्। वसुमित्रस्य निजपुत्रस्य। अति-भारे अतिदारुणे इत्यर्थः, युद्धे इति शेषः, पृथिवीस्थैः सर्वैरेव राजभि-र्विरोधाचरणादिति भावः। "अदिभारे" इत्यत्र "अदिघोरे" इति पाठान्तरम्। पुत्रकः मत्तनयः वसुमित्रः, सेनापतिर्नियुक्तः सेनाध्यक्षो वृतः। "सेणावदी" इत्यत्र "सेणावदिणा" इति पाठे—सेनापतिना इति सं०। सेनापतिना भूतपूर्व-मगधसेनानायकेन श्वशुरेण पुष्पमित्रेण।

राजा। [उपविश्य वाचयति]। "स्वस्ति। यज्ञशरणात् सेनापतिः पुष्पमित्रो वैदिशस्थं पुत्रमायुष्मन्तमग्निमित्रं स्नेहात् परिष्वज्यानुदर्शयति—विदितमस्तु, योऽसौ राजयज्ञदीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य वत्सराय निवर्त्तनीयो निरर्गलस्तुरङ्गमो विसर्जितः, स सिन्धोर्दक्षिणे रोधसि चरन्नश्वानीकेन यवनेन प्रार्थितः। ततः उभयोः सेनयोर्महानासीत् सम्मर्दः,—"(ङ)

(ङ) वाचयति पठतीत्यर्थः। "उपविश्य वाचयति" इत्यत्र "उपविश्य लेखं सोपचारं गृहीत्वा वाचयति" इत्यधिकः पाठः क्वचित्। स्वस्ति शुभमस्तु। यज्ञशरणात् यज्ञगृहात्,पाटलीपुत्रस्थाश्वमेधयज्ञागारात्, "शरणं गृहरक्षित्रोः" इत्यमरः। वैदिशस्य विदिशा एवेति वैदिशः, स्वार्थे अण्; तत्र तिष्ठतीति तादृशं विदिशानगरावस्थितम्। "वैदिशस्थम्" इत्यत्र "वैदिशस्तत्रत्यम्" इति पाठान्तरम्। आयुष्मन्तं दीर्घायुषम्। परिष्वज्य आलिङ्ग्य। अनुदर्शयति सम्यक् बोधयति, निखिलवृत्तान्तं ज्ञापयतीत्यर्थः, "दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु" इति मेदिनी। "परिष्वज्यानुदर्शयति" इत्यत्र "परिष्वज्येदमनुदर्शयति" इत्यधिकः पाठः क्वचित्। "योऽसौ" इत्यस्य "तुरङ्गमः" इत्यनेनान्वयः; राजयज्ञदीक्षितेन राजयज्ञः अश्वमेधयागः, तत्र दीक्षितेन कृतदीक्षाग्रहणेन, अश्वमेधानुष्ठाने कृतसङ्कल्पेनेत्यर्थः। राजपुत्रशतपरिवृतं राजपुत्राणां सामन्तनृपतनयानां, शतेन शतसङ्ख्यकेन, परिवृतं वेष्टितम्, अनुगतमिति यावत्, अश्वमेधप्रकरणे "शतेन राजपुत्रैः सह" इति श्रुतेः; गोप्तारं रक्षकम्, आदिश्य आज्ञाय, विधायेत्यर्थः। वत्सराय संवत्सरं व्याप्य इत्यर्थः, निवर्त्तनीयः प्रत्यागमनीयः; "वत्सराय निवर्त्तनीयः" इत्यत्र "वत्सरापावर्त्तनीयः" इति पाठान्तरम्। निरर्गलः निर्बाधः, यथेष्टगामीति यावत्, तुरङ्गमः अश्वमेधीयाश्वः, विसर्जितः मोचितः, अध्वर्युणेति शेषः, सर्वासु दिक्षु यथेच्छविचरणार्थमिति भावः। "विसर्जितः" इत्यत्र "विसृष्टः" इति पाठे—मुक्तः इत्यर्थः। सः तुरङ्गमः। सिन्धोः

धारिणी । [ विषाद नाटयति ] । (च)

राजा । कथमीदृशं संवृत्तम् ॥ [ पुनर्वाचयति ] । (छ)—

"ततः परान् पराजित्य वसुमित्रेण धन्विना ।
प्रसह्य क्रियमाणो मे वाजिराजो निवर्त्तितः ॥ १५ ॥—

धारि । दिट्ठिआ आस्ससिदं मे हिअअं । * (ज)

---

* अनेनाश्वस्तं मे हृदयम् इति सं० ।

---

तदाख्यनदस्य, रोधसि तटे, "कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु" इत्यमरः । अश्वानीकेन अश्वाः अश्वारोहाः जना एव, अनीकं सेना यस्य तादृशेन, "अनीकोऽस्त्री रणे सैन्ये" इति मेदिनी ; यवनेन यवनदेशाधिपेन, "यवनो देशभेदे ना वेग-वेगाधिकाश्वयोः" इति मेदिनी ; प्रार्थितः याचितः, बलपूर्वकं गृहीत इत्यर्थः । उभयोः सेनयोः यवनसैन्यास्मत्सैन्ययोः । सम्मर्दः सङ्घर्षः, युद्ध इत्यर्थः ।

(च) "धारिणी" इत्यत्र "देवी" इति पाठान्तरम् । दुर्द्धर्षयवनसैन्येन सम्मर्दमाकर्ण्य पुत्रस्य विपदाशङ्कया देव्याः विषादप्रकटनम् ।

(छ) कथम् इति सम्भ्रमार्थकं निन्दार्थकं वा अव्ययं, किम् !! इत्यर्थः, "कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे" इति मेदिनी । ईदृशं यवनेन अश्वविधारणमित्यर्थः, संवृत्तम् !! सञ्जातम् !! यवनानामेतादृशी स्पर्द्धा यत् ते अस्माकमश्वमेधीयाश्वं धृत्वा वैराचरणाय साहसिनो भवन्ति इति भावः ।

तत इति ।—ततः सम्मर्दारम्भानन्तरं, धन्विना धनुष्मता, धनुर्द्धरश्रेष्ठेन इत्यर्थः, वसुमित्रेण परान् शत्रून्, पराजित्य पराभूय, प्रसह्य बलात्, क्रियमाणः ध्रियमाणः इत्यर्थः, यवनैरिति शेषः, मे मम, वाजिराजः अश्वश्रेष्ठः, "कालाम्भोधरसङ्काशः स्वर्णवर्णमुखो बली । यस्य पार्श्वावुभावर्द्धचन्द्राकारौ सुशोभनौ ॥" इत्यादियोगवाशिष्ठोक्ताश्वमेधीयाश्वलक्षणान्वितत्वात् श्रेष्ठजातीयाश्वः इत्यर्थः, निवर्त्तितः प्रत्याहृतः । श्लोकस्यास्य प्रथमपादे "परान् परा" इति छेकानुप्रासः, चतुर्थपादे च "वाजिराजः" इत्यत्र वृत्त्यनुप्रास इत्यनयोः संसृष्टिः । अनुष्टुप् वृत्तम् ॥ १५ ॥

(ज) अनेन पुत्रस्य विजयवार्त्ताश्रवणेन । आश्वस्तं सान्त्वम् ।

राजा। [लेखशेषं वाचयति]। "सोऽहमिदानीमंशुमतेव सगरः पौत्रेण प्रत्याहृताश्वो यक्ष्ये; तदिदानीमकालहीनं विगतरोषचेतसा भवता बधूजनेन सह यज्ञसेवनायागन्तव्यम्" इति। (भ)

राजा। अनुगृहीतोऽस्मि।

---

(भ) अंशुमता अंशुमानिति नामकेन असमञ्जपुत्रेण सगरपौत्रेण। सगरः सूर्य्यवंशीयनृपविशेषः, यत्सम्बन्धात् जलनिधेः सागर इति संज्ञा। पौत्रेण तव पुत्रेण वसुमित्रेण। प्रत्याहृताश्वः प्रत्यानीततुरङ्गमः। यक्ष्ये यज्ञं करिष्ये, अश्वमेधेन इति शेषः। अकालहीनं न कालो हीनो भवति यस्मिन् कर्मणि तत् यथा तथा, कालक्षेपमकृत्वा, अविलम्बमित्यर्थः। विगतरोषचेतसा विगतः प्रशमितः, रोषः कोपः, तव अज्ञाततया ईदृशविपत्सङ्कुलकर्मणि पुत्रस्य नियोगादिति भावः, यस्मात् तादृशं चेतो मनः यस्य तथाभूतेन सता, पुत्रस्य विजयलाभेन प्रहृष्टेन सता इत्यर्थः। "अंशुमतेव सगरः पौत्रेण" इत्यत्र "अंशुमता सगरपौत्रेणेव" इति पाठान्तरम्। यज्ञसेवनाय यज्ञदर्शनजनितानन्दोपभोगायेत्यर्थः। पुरा सूर्य्यवंशीयः सगरो नाम राजा अश्वमेधेन यष्टुकामः यज्ञीयाश्वं यथाविधि विससर्ज। स्वाधिकारलोपाशङ्की देवराजश्च तमश्वमपहृत्य पाताले समाधिस्थकपिलान्तिके संस्थापयामास। अश्वापहरणेन क्रुद्धः सगरः स्वकीयं षष्टिसहस्रं तनयं तदन्वेषणाय आदिदेश, ते च मर्त्यलोके तमन्विष्य अप्राप्य च पृथिवीं खनित्वा पातालं जग्मुः, तत्र अन्विष्यन्तः कपिलान्तिके अश्वं दृष्ट्वा "अयमेव पितुरश्वापहर्त्ता" इति निश्चित्य तं ताड़यामास, तेन च क्रुद्धः कपिलः तान् क्रोधाग्निना भस्मीचकार। तांश्च अप्रत्यावृत्तान् दृष्ट्वा सगरः ज्येष्ठपुत्रस्य राज्यान्निर्वासितस्य असमञ्जस्य पुत्रम् अंशुमन्तं पुत्राणाम् अश्वस्य च वार्त्ताऽऽनयनाय प्रेरयामास, स च पितृव्यखातमार्गेण पातालं प्रविश्य कपिलान्तिके अवस्थितमश्वं दृष्ट्वा सर्वं वृत्तान्तमवगम्य च स्तवेन मुनिं प्रसाद्य अश्वं प्रत्यानयामास, ततश्च सगरस्तेनाश्वेन प्रारब्धयज्ञं समापयामासेति पौराणिकी वार्त्ता।

परि। दिष्ट्या पुत्रविजयेन दम्पती वर्द्धेते। (ञ)—

भर्त्राऽसि वीरपत्नीनां श्लाघ्यानां स्थापिता धुरि।
वीरसूरिति शब्दोऽयं तनयात्त्वामुपस्थितः॥ १६॥

धारि। भोदि। परितुट्टम्हि जं पिदरं अणुजादो वच्छओ। *(ट)

* भवति! परितुष्टाऽस्मि यत् पितरमनुजातो वत्सकः इति सं०।

(ञ) दिष्ट्या हर्षसूचकमव्ययम्, अतीवानन्दविषय इत्यर्थः। दम्पती जायापती, धारिण्यग्निमित्रौ इत्यर्थः, वर्द्धेते अत्युत्कर्षेण वर्त्तेतामित्यर्थः। "वर्द्धेते" इत्यत्र "वर्त्तेते" इति पाठान्तरम्।

धारिण्याः श्लाघिमाशास्ते, भर्त्रेति।—भर्त्रा पत्या अग्निमित्रेण, श्लाघ्यानां प्रशस्यानां, वीरपत्नीत्वेन सम्मानार्हाणामित्यर्थः, वीरपत्नीनां शूरभार्य्याणां, धुरि अग्रे, स्थापिता सन्निवेशिता, असि भवसि, वीरश्रेष्ठस्य भार्य्या इति लोकसमाजे कीर्त्तिताऽसीत्यर्थः, अधुना तनयात् पुत्रात्, वसुमित्ररूपं वीर्य्यवन्तं तनयं लब्ध्वा इत्यर्थः, वीरसूः वीरं सूते इति वीरप्रसविनी, इति अयं शब्दः, त्वां धारिणीम्, उपस्थितः सम्प्राप्तः, प्राक् वीरपत्नीत्वेन प्रशस्या आसीः, इदानीं वीरजननीत्वेन प्रशस्याऽसीति भाग्यवती त्वमिति भावः। अत्र वीरपत्नीनां धुरि अवस्थापनरूपकार्य्येण पत्युर्महावीरत्वस्य, वीरसूरिति शब्दप्राप्तिरूपकार्य्येण च पुत्रस्यापि वीराग्रगण्यत्वस्य भङ्ग्या गम्यमानत्वात् पर्य्यायोक्तद्वयसंसृष्टिः, "पर्य्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते" इति दर्पणोक्तलक्षणात्, तेन च धारिण्याः परमसौभाग्यशालित्वरूपं वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः। पथ्यावक्त्रं वृत्तम्॥ १६॥

(ट) "भोदि" इत्यत्र "भअवदि" इति पाठान्तरम्। यत् यस्मात्, वत्सकः स्नेहास्पदः शिशुः पुत्रः वसुमित्रः, पितरम् अग्निमित्रम्, अनु सदृशः जातः, वीर्य्येण पितृसदृशः सञ्जातः, वीरत्वेन पितरमनुचकारेत्यर्थः, "अनु हीने सहार्थे च पश्चात्सादृश्ययोरपि" इति मेदिनी।

राजा। मौद्गल्य। ननु कलभेन यूथपतेरनुकृतम्। (ठ)।

कञ्चु। नैतावता वीरविजृम्भितेन
चित्तस्य नो विस्मयमादधाति।
यस्याप्रधृष्यः प्रभवस्त्वमुच्चै-
रग्नेरपां दग्धुरिवोरुजन्मा ॥ १७ ॥

(ठ) ननु इति अवधारणे, कलभेन करिशावकेन, "कलभः करिशावकः" इत्यमरः; यूथपतेः यूथनाथस्य, गजयूथमुख्यस्येत्यर्थः, महागजस्येति यावत्, "यूथनाथस्तु यूथपः" इत्यमरः; अनुकृतं सदृशीकृतं, महागजतुल्यमाचरितमित्यर्थः, करिशावकस्य यूथपतेरनुकरणवत् मम शिशुतनयस्य वसुमित्रस्य महावीराणामनुकरणमिदमतीव चित्रमिति भावः। अनुकृतमिति भावे क्तः। "यूथपतेरनुकृतम्" इत्यत्र "यूथपतिरनुकृतः" इति पाठान्तरम्।

राज्ञो मन्तव्यस्य प्रत्युत्तरं दित्सुराह, नैतावतेति।—श्लोकस्यास्य प्राक् "कञ्चु। देव! अयं कुमारः" इत्यधिकः पाठः क्वचिद्दृश्यते। एतावता एतन्मात्रेण, शत्रून् पराभूय अश्वानयनरूपेणेत्यर्थः, वीरविजृम्भितेन शूराणां चेष्टितेन, बालकः वसुमित्र इति कर्तृपदमत्र ऊहनीयम्; नः अस्माकं, चित्तस्य मनसः, विस्मयम् आश्चर्यम्, आश्चर्यभावमित्यर्थः, न आदधाति न उत्पादयति। विस्मयानाधाने हेतुं प्रदर्शयति, यस्येति।—यस्य वीरस्य वसुमित्रस्य, अप्रधृष्यः अन्यैः धर्षयितुम् अभिभवितुमशक्यः, अपराजेय इत्यर्थः, अपां जलस्य, दग्धुः दाहकस्य, अग्नेः अनलस्य, वाड़वानलस्येत्यर्थः, ऊरुजन्मा ऊरोः ऊरुदेशात् जन्म उत्पत्तिर्यस्य स और्वमुनिरिव, उरु महत्, महाकुले इत्यर्थः, जन्म यस्य तादृशः, उच्चैः उन्नतः, महाप्रभावः इत्यर्थः, त्वं प्रभवः कारणं, जनयिता इत्यर्थः, कैरपि अस्कन्दनीयः और्वमुनिर्यथा वाड़वानलस्य कारणं, तथा महाकुलोत्पन्नः शत्रुदुर्द्धर्षस्त्वं यस्य जनकः तस्य ईदृशवीरत्वप्रकटनं न विस्मयावहं, प्रत्युत सुसदृशमेव, कारणगुणस्य कार्य्यगुणारम्भकत्वादिति भावः। पुरा किल और्वनामा महातेजा मुनिः पुत्रकामः निजमूरुमग्नौ प्रवेश्य दर्भेण ममन्थ, ततः मथ्यमानात्तस्मात् उत्पद्यमानः प्रदीप्तार्चिरनलः

राजा। मौद्गल्य! यज्ञसेनश्यालमुरीकृत्य मुच्यन्तां सर्वे बन्धनस्थाः। (ड)

कञ्चु। यदाज्ञापयति देवः। [इति निष्क्रान्तः]।

धारि। जअसेणि! गच्छ, इरावदीप्पमुहाणं अंतेउराणं पुत्तअस्स वुत्तंतं णिवेदेहि। * (ढ)

[प्रतीहारी प्रस्थिता]।

धारि। एहि दाव। †

* जयसेने! गच्छ, इरावतीप्रमुखीणामन्तःपुराणां पुत्रकस्य वृत्तान्तं निवेदय इति सं०।

† एहि तावत् इति सं०।

स्वजनकमेवमुवाच, "पितः! मुञ्च मां बुभुक्षितं, जगत् भक्षयामि" इति। ततः स्वसृष्टिनाशाशङ्की विधाता तत्रागत्य जगद्रक्षणवाञ्छया और्वमवदत्, "सागरान्त स्थवड़वामुखे अयं निवसतु, सागरजलञ्च पिबतु" इति। एवमुक्त्वा विधिस्तत्रैव त निचिक्षेप इति पौराणिको वार्त्ताऽत्रानुसन्धेया। श्लोकेऽस्मिन् पूर्वार्द्धवाक्यं प्रति परार्द्धवाक्यस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्ग, चतुर्थपादे उपमा च, उभयोः नैरपेक्ष्यात् संसृष्टिः। उपजाति वृत्तम् ॥ १७ ॥

(ड) यज्ञसेनश्यालं यज्ञसेनस्य माधवसेनभ्रातुः विदर्भाधिपस्य, श्याल पत्नीभ्रातरम, उरीकृत्य अङ्गीकृत्य, तस्य मुक्तिं स्वीकृत्य इत्यर्थः, तेन सहैव इति यावत्। "मुच्यन्ताम्" इत्यत्र "मोच्यन्ताम्" इति पाठान्तरम्। बन्धनस्थाः कारागारस्थिताः सापराधाः जनाः। यज्ञसेन-माधवसेनयोर्द्वैराज्यानुमोदनात् यज्ञसेनश्यालस्य विशेषतया मुक्तिप्रदानोपदेशः, अन्येषाञ्च पुत्रस्य विजयज्ञानजनितोत्सवेनेति बोध्यम्।

(ढ) "इरावदीप्पमुहाणं" इत्यत्र "मेलकप्पमुहीणं" इति पाठे—मेलकप्रभृतीनाम् इति सं०। अन्तःपुराणाम् अन्तःपुरस्थानां स्त्रीणाम्। "पुत्तअस्स" इत्यत्र "पुत्तस्स" इति पाठान्तरम्।

प्रती। [प्रतिनिवृत्य]। इअम्हि। *

धारि। [जनान्तिकम्]। जं मए असोअदोहलणिओए माल-विआए पड़िस्सादं, तं, से अभिअणं च णिवेदिअ मम वअणेण इरावदिं अणुणेहि,"तुए अहं सच्चादो न विब्भंसिदव्वेत्ति"। †(ण)

प्रती। जं देवी आणवेदि। [इति निष्क्रम्य पुनः प्रविश्य च]। भट्टिणि! पुत्तविजअणिमित्तेण परितोसेण अंतेउराणं आहरणाणं संजूसिअम्हि संवुत्ता। ‡(त)

---

* इयमस्मि इति स०।

† यन्मयाऽशोकदोहदनियोगे मालविकायाः प्रतिज्ञातं तत्, तस्या अभिजनं च निवेद्य मम वचनेनैरावतीमनुनय "त्वया खल्वहं सत्यात् न विभ्रंशयितव्या" इति इति स०।

‡ यद्देव्याज्ञापयति। भट्टिनि! पुत्रविजयनिमित्तेन परितोषेणान्तः-पुराणाम् आभरणानां मञ्जूषिकाऽस्मि संवृत्ता इति स०।

---

(ण) अशोकेति।—अशोके तपनीयाशोके, दोहदाय पादाघात-रूपदोहदप्रदानाय, नियोगे आदेशदानसमये। प्रतिज्ञात प्रतिश्रुतं, "पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति यदि सः, ततस्तुभ्यमभिलाषपूरयितृकं प्रसादं दास्यामि" इति अङ्गीकृतमित्यर्थः। तत् प्रतिज्ञातम्। अस्याः मालविकायाः, अभिजनं कुल, कुलमर्य्यादामित्यर्थः, राजकुले जातेय-मिति यावत्। वचनेन वाक्यानुसारेण। अनुनय सान्त्वय, प्रसादय इत्यर्थः, सविनयं ब्रूहि इति यावत्। सत्यात् अङ्गीकारात्, मालविकाया अभिलाषं पूरयिष्यामि इति शपथादिति भावः। विभ्रंशयितव्या स्खलयितव्या, प्रतिश्रुतिपालनविषये त्वया नाहं प्रतिबन्धयितव्या इत्यर्थः, एतेन राज्ञा सह मालविकायाः परिणयसम्पादनं देव्या अभिप्रायो व्यज्यते। "तुए अहं सच्चादो न विब्भंसिदव्वेत्ति" इत्यत्र "तुए क्खु अअं संवादो ण भंसिदव्वोत्ति" इति पाठान्तरे—त्वया खलु अयं सवादो न भ्रंशितव्यः इति स०।

(त) मञ्जूषिका पेठिका। मञ्जूषा यथा अलङ्कारैः सम्भृता तिष्ठति,

धारि। अलं। किं अच्चरिअं !! साधारणो णं अब्भुदओ। * (थ)

प्रती। [जनान्तिकम्]। भट्टिणि! इरावदी विण्णवेदि—"सरिसं क्खु पहुवीए पहवंतीए तव बअणं। संकप्पिदे ण जुज्जदि अण्णहा कादुं" त्ति। † (द)

---

* अलम्। किमाश्चर्य्यम् !! साधारणो नन्वभ्युदयः इति स०।

† भट्टिनि! इरावती विज्ञापयति,—"सदृशं खलु पृथिव्याः प्रभवन्त्यास्तव वचनम्। सङ्कल्पिते न युज्यतेऽन्यथा कर्त्तुम्" इति इति स०।

---

तथा अहमपि पारितोषिकतया प्राप्तैरलङ्कारैः सम्भृताऽस्मीति समुदितार्थः। आनन्दाधिक्यव्यञ्जिकेयमुक्तिरिति। "मंजूसिअम्हि" इत्यत्र "मंजूसम्हि" इति पाठे—मञ्जूषाऽस्मि इति स०।

(थ) अलं पर्य्याप्तं, प्रभूतमाभरणं प्राप्ताऽसि इत्यत्र, किमाश्चर्य्यम् !! आश्चर्य्यकारणं किमपि नास्ति इत्यर्थः; यद्वा—अलं भूषणम्? अलङ्कारं प्राप्ताऽस्मि इति किं कथयसि? इत्यर्थः, किमाश्चर्य्यम् !! अत्र किमपि आश्चर्य्यकारणं नास्तीत्यर्थं., "अलं भूषणपर्य्याप्तिशक्तिवारणवाचकम्" इत्यमरः। आश्चर्य्याभावे कारणं प्रदर्शयति, साधारण इति।—साधारणः समानः, ननु निश्चये, अनुनये वा। अभ्युदय. उन्नतिः, कुमारो वसुमित्रः सर्वासामेव अन्तःपुरिकाणां पुत्रनिर्विशेषस्नेहभाजनम्, अतः तस्य विजयेन सर्वा एव मत्सदृशमानन्दमनुभवन्ति, एवञ्च ताभिः तुभ्यं प्रभूताभरणदानं न विस्मयकारणमिति भाव.। "अलं" इत्यत्र "एदं" इति पाठान्तरम्, एतत् इति तस्य स०। "साधारणो णं अब्भुदओ" इत्यत्र "साधारणो क्खु ताणं मह च अअं अब्भुदओ" इति पाठे—साधारणः खलु तासां मम च अयमभ्युदयः इति स०।

(द) पृथिव्याः प्रभवन्त्या निखिलपृथिव्यां प्रभुत्वशालिन्याः, "पहुवीए" इत्यत्र "देवीए" इति पाठान्तरे—देव्या इति स०। तव वाक्यं "त्वया अहं सत्यात् न विभ्रंशयितव्या" इत्येवमनुनयवाक्यमित्यर्थः,

धारि। भअवदि! तुए अणुमदं इच्छामि अज्जसुमदिणा पढ़मं किदं अज्जउत्तस्स मालविअं उववादेदुं। * (ध)

परि। इदानीमपि त्वमस्याः प्रभवसि। (न)

धारि। [मालविका हस्ते गृहीत्वा]। इमं अज्जउत्तो पिअ-णिवेदणाणुरूवं पारितोसिअं पड़ीच्छदु। † (प)

---

* भगवति! त्वयाऽनुमतमिच्छाम्यार्य्यसुमतिना प्रथमं कृतामार्य्य-पुत्रस्य मालविकामुपपादयितुम् इति स०।

† इमामार्य्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छतु इति स०।

---

सदृशं योग्यम्, उदारचरितायास्तवैव ईदृशमुदारार्थकं वचनं सङ्गच्छते, कथमन्यथा अस्माकं प्रभुरपि त्वं स्वसत्यभङ्गभिया सपत्न्यन्तरं विधातुं तव निदेशवर्त्तिनीं सपत्नीमपि मामनुनयसि? इति भावः। सङ्कल्पिते अभीप्सिते, भर्त्रा सह मालविकायाः परिणयसङ्घटनरूपाभिप्रायविषये इत्यर्थः। "संकप्पिदे" इत्यत्र "संकप्पिदं" इति पाठान्तरम्।

(ध) अनुमतम् अनुमोदितं यथा तथा इत्यर्थः। प्रथमं कृतां दानविषयीकृतामित्यर्थः, दातुमीप्सितामिति यावत्। "कृतामार्य्य-पुत्रस्य स्वत्वास्पदीभूतां कृतां दत्तामित्यर्थः" इति प्राचीनानां व्याख्या। उपपादयितुं सम्प्रदातुम्। "अणुमदं" इत्यत्र "अणुमदा" इति पाठान्तरम्। "पढ़मं उववादेदुं" इत्यत्र "पढ़मसंकप्पिदं मालविअं अज्जउत्तस्स पड़िवादेदुं" इति पाठान्तरे—प्रथमसङ्कल्पितां मालविका-मार्य्यपुत्रस्य प्रतिपादयितुम् इति स०।

(न) इदानीमपि इयं विदर्भराजनन्दिनी इति परिचयप्राप्त्यनन्तर-मपीत्यर्थः। अस्याः मालविकायाः, प्रभवसि प्रभुर्भवसि, परिचयप्रकाशात् प्राक् यथा इयं तव सेविका आसीत्, सम्प्रति परिचयप्राप्त्यनन्तरमपि तथैव अस्ति, अग्रजस्य माधवसेनस्यापि युष्मदधीनत्वात्, एवञ्च तवेच्छैवात्र बलवती, नास्ति ममानुमोदनापेक्षेति भावः।

(प) "इमं" इत्यत्र "इदं" इति पाठान्तरम्। प्रियनिवेदनानु-रूपं पुत्रस्य विजयवार्त्ताविज्ञापनस्य योग्यं, पारितोषिकं परितोषविज्ञापकं

[ राजा व्रीडं नाटयति ]।

धारि। [ सस्मितम् ]। किं अवधारेदि अज्जउत्तो ? * (फ)

विदू। भोदि ! अत्थि क्खु लोअप्पवादो—सव्वो जणो णव्ववरो लज्जादुरो होदित्ति। † (ब)

[ राजा विदूषकमवेक्षते ]। (भ)

* किमवधारयत्यार्य्यपुत्रः ? इति सं०।

† भवति ! अस्ति खलु लोकप्रवादः,—सर्वो जनो नव्यो वरो लज्जातुरो भवतीति इति सं०।

दानम्, उपहारमिति यावत्, प्रतीच्छतु गृह्णातु, त्वत्तः पुत्रस्य विजय-वार्त्ताश्रवणेन प्रीताऽहं तुभ्यमिमां पारितोषिकं ददामि, गृहाण इति सरलार्थः।

(फ) किम् अवधारयति ? किं विचारयति ? किं चिन्तयति ? इत्यर्थः, राज्ञो व्रीडाजनितमौनभावदर्शनात् ईप्सितां मालविकां प्राप्यापि लज्जया तां प्रति आग्रहाप्रकाशनात् "इमां गृह्णामि न वा" इति विचारयसि किम् ? इति देव्याः परिहाससूचिका सस्मितोक्तिरियमिति मन्तव्यम्। "अवधारेदि" इत्यत्र "अवधीरेदि" इति पाठे—अवधीरयति इति सं०।

(ब) लोकप्रवादः जनसमाजे प्रचलिता वार्त्ता। "अत्थि · होदित्ति" इत्यत्र "एसो लोअव्ववहारो, सव्वो णववरो लज्जादुरो होदि" इति पाठे—एष लोकव्यवहारः, सर्वो नववरो लज्जातुरो भवति इति सं०। "लज्जादुरो" इत्यत्र "लज्जालुओ इति पाठे—लज्जालुको इति सं०।

(भ) "किमवधारयति आर्य्यपुत्रः ?" इति देवीकृतप्रश्नस्य यत् सङ्गतोत्तरं भवति, तत् वद इति नयनभङ्ग्या ज्ञापयितुं राज्ञो विदूषका-वेक्षणमिति।

विदू। अह देवीए ज्जेव्व किदप्पणिव्विसेसं दिण्णदेवीसद्दं मालविअं अत्तभवं पडिग्गहिदुं इच्छदि। * (म)

धारि। एदाए अ राअदारिआए अहिजणेण ज्जेव्व दिण्णो देवीसद्दो, किं पुणरुत्तेण ? † (य)

परि। मा मेवम्— (र)

---

* अथ देव्या एव कृतात्मनिर्विशेषां दत्तदेवीसंज्ञां मालविकामत्रभवान् प्रतिग्रहीतुमिच्छति इति सं०।

† एतस्याश्च राजदारिकाया अभिजनेन एव दत्तः देवीशब्दः, किं पुनरुक्तेन ? इति सं०।

---

(म) अथ इति आरम्भे, प्रस्तावान्तरारम्भे इत्यर्थः, "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः। निर्नास्ति विशेषः पार्थक्यं यत्र तत् निर्विशेषं, कृतम् आत्मना सह निर्विशेषं सादृश्यम्, अवैषम्यमित्यर्थः यस्यास्ता, परिणयसम्पादनेन दत्तात्मतुल्यमर्य्यादामित्यर्थः, दत्तदेवीसंज्ञां दत्ता विहिता, देवी महिषी इति, संज्ञा आख्या यस्यै तादृशीम्। "किदप्पणिव्विसेसं दिण्णदेवीसद्द" इत्यत्र "किदप्पणअविसेसं दिण्णदेवीसद्द" इति पाठे—कृतप्रणयविशेषा दत्तदेवीशब्दाम्" इति सं०। यतो देवी स्वयमेव इमाम् आत्मनिर्विशेषां विविच्य देवीति संज्ञां ददाति, तत एव महाराजः प्रतिग्रहीतुमिच्छतीति सरलार्थः। यद्वा—देवी आत्मनिर्विशेषेण अस्यै देवीसंज्ञां ददाति चेत् महाराज इमां प्रतिग्रहीतुमिच्छतीति सरलार्थः।

(य) राजदारिकायाः राजतनयायाः। अभिजनेनैव कुलेनैव, सत्कुलसम्भवत्वेनैवेत्यर्थः। पुनरुक्तेन पुनरावृत्त्या, किम् ? अलं, निष्प्रयोजनमित्यर्थः, सत्कुलसम्भूतत्वात् इयं स्वत एव देवीशब्दमर्हति, मम तत्र पुनरुक्तिर्निष्प्रयोजनैवेति निष्कर्षः। "किं कुत्सायां वितर्के च निषेधप्रश्नयोरपि" इति मेदिनी।

(र) एवम् ईदृशवाक्यं, मा मा नैव, वदेति शेषः। सम्भ्रमे द्विरुक्तिः।

अस्माकमुत्सवमणिर्मणिजातिपुरस्कृतः।

जातरूपेण कल्याणि! तर्हि संयोगमर्हति॥ १८॥

धारि। [ सूचा ]। परिसेदु भअवदी, अब्भुदअकज्जाए पढमं

---

टीका उक्तवाक्यस्य अवाच्यत्वे कारणं प्रदर्शयति, अस्माकमिति।—कल्याणि! हे भद्रे! मङ्गलनिलये! इत्यर्थः, अत्र "यद्यपि" इति पदमूहनीयम्; अस्माकम् उत्सवमणिः उत्सवकाले धार्य्यः मणिरिव मणिः, अतीवादरणीया मालविका इति भावः, यद्यपि मणिजातौ मणिसामान्ये, सर्वेषु मणिषु इत्यर्थः, पुरस्कृतः अग्रगण्यः, श्रेष्ठ इत्यर्थः, सौन्दर्य्येण आभिजात्येन च इयं मालविका रमणीकुलप्रधानाऽपीति भावः, यद्वा—मणित्वेन जात्या आभिजात्येन, पुरस्कृतः शोभित इत्यर्थः, तर्हि तथाऽपि, अव्ययानामनेकार्थत्वात्; जातरूपेण सुवर्णेन, "स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्। चामीकरं जातरूपम्" इत्यमरः; प्रशस्तरूपेण अग्निमित्रेण इति भावः, संयोगं सम्मेलनम्, अर्हति युज्यते, सम्मिलितुं योग्यो भवतीत्यर्थः, अकृत्रिमस्य मणेरपि यथा स्वर्णसंयोगादेव शोभा पुष्यति, तथा सद्वंशोद्भवा अपि इयं मालविका सौन्दर्य-वीरत्वाभिजात्यादिगुणान्वितेन अग्निमित्रेण सह संयोगादेव शोभाविशेषं प्राप्नोति, नान्यथेति भावः। उदाराशया भवती दुर्दैवपीडितायामस्यां स्नेहवशात् सापत्न्यभावम् अगणयन्त्यपि मणिकाञ्चनसंयोग इव अनयोः संयोगं सङ्घटयितुमिच्छति, मालविकाया अभिजनत्वस्यात्र किमपि गौरवं नास्ति, एवञ्च "एदाए अ राजदारिआए अहिजणीअ ज्जेव्व दिसो देवीसद्दो" इति वाक्यं नैव वक्तव्यमिति तात्पर्य्यम्। "अप्याकरसमुत्पन्नो रत्नजातिपुरस्कृतः। जातरूपेण कल्याणि! स हि संयोगमर्हति॥" इति पाठान्तरम्। श्लोकेऽस्मिन् अप्रस्तुतात् समात् मणि-जातरूपसंयोगात् प्रस्तुतस्य समस्य मालविकाऽग्निमित्रसंयोगस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः उत्सवमणिरित्युपमया सङ्कीर्य्यते। पथ्यावक्त्रं वृत्तम्॥ १८॥

अवगुंठणं वसणं णालक्खिदं। जअसेणे! गच्छ दाव, पत्तोरं उवणेहि। * (ल)

प्रती। जं भट्टिणी आणवेदि। [इति निष्क्रम्य पत्त्रोर्णं गृहीत्वा प्रविश्य]। देवि। एदं। † (व)

धारि। [मालविकामवगुण्ठनवतीं कृत्वा]। अज्जउत्त! इअं पड़िच्छीअदु। ‡ (श)

---

* मर्षयतु भगवती, अभ्युदयकथया प्रथमम् अवगुण्ठनं वसनं नालक्षितम्। जयसेने! गच्छ तावत्, पत्त्रोर्णमुपनय इति स०।

† यद्भट्टिन्याज्ञापयति। देवि! एतत् इति स०।

‡ आर्य्यपुत्र! इयं प्रतीष्यताम् इति स०।

---

(ल) "स्मृत्वा" इति पाठः क्वचित् नास्ति। मर्षयतु क्षमताम्। अभ्युदयकथया वसुमित्रस्य यवनविजय-विषयकालापेन। अवगुण्ठ्यते आच्छाद्यते मस्तक-मुखादिकमनेन इति अवगुण्ठनं "घोमटा" इति ख्यातं मस्तक-मुखाद्यावरणसाधनमित्यर्थः, वसनं वस्त्रम्। न आलक्षितं सम्यक् न दृष्टिविषयीकृतं, न मनसि कृतमित्यर्थो वा, एतद्धेतुकमपराधं मर्षयतु भगवती इति सम्बन्धः। पत्त्रोर्णं धौतकौषेयं, शुभ्रकौषेय-वस्त्रमित्यर्थः, "पत्त्रोर्णं धौतकौषेयम्" इत्यमरः। "पढमं अवगुंठणं वसणं णालक्खिदं" इत्यत्र "उइदं ण लक्खिदं" इति पाठे—उचितं न लक्षितम् इति स०। "पत्तोरं" इत्यत्र "कोसेअं पत्तोरं" इति पाठान्तरं न साधुतया प्रतिभाति, पत्त्रोर्णेनैव धौतकौषेयस्य प्राप्तेरिति।

(व) "भट्टिनी" इत्यत्र "देवी" इति पाठान्तरम्। "भट्टिनी द्विजभार्य्यायां नाट्योक्त्या राजयोषिति" इति मेदिनीवचनेन भट्टिनी-शब्दस्य राजयोषिन्मात्रार्थकत्वात् देव्यां तत्प्रयोगो न दोषावहः इति। एतत् पत्त्रोर्णमित्यर्थः, गृहाणेति शेषः।

(श) अवगुण्ठनवतीम् अवगुण्ठनाद्यताम्, एतच्च कौमार्य्यापनोदनसूचकाचारविशेष इति। इयं मालविका। प्रतीष्यतां गृह्यतां,

राजा। त्वच्छासनं प्रत्यनुरक्ता वयम्। [अपवार्य्य]। हन्त !! प्रतिगृहीता। (ष)

विदू। अम्हहे !! देवीए अणुऊलदा धारिणीए। * (स)

[देवी परिजनमवलोकयति]। (ह)

परिजनः। [मालविकामुपेत्य]। जेदु जेदु भट्टिणी। †

[धारिणी परिव्राजिकां निर्वर्णयति]। (क)

---

* अहो !! देव्या अनुकूलता धारिण्या इति सं०।

† जयति जयति भट्टिनी इति सं०।

---

भार्य्यात्वेनेति भावः। "इअं पडिच्छीअदु" इत्यत्र "दाणिं इमं पडिच्छदु" इति पाठे—इदानीमिमां प्रतीच्छतु इति सं०।

(ष) त्वच्छासनं तव आज्ञां, "शासनं राजदत्तोर्व्यां लेखाज्ञाशास्त्रशास्तिषु" इति मेदिनी। अनुरक्ता श्रद्धान्विता इत्यर्थः, तवाज्ञा अनुलङ्घनीया इति भावः। "त्वच्छासनं प्रत्यनुरक्ता वयम्" इत्यत्र "त्वच्छासनात् प्रवृत्ता एव वयम्" इति पाठान्तरम्। अपवार्य्य मुखमन्यतो परावृत्य, एतञ्च सर्वसमक्षं "प्रतिगृहीता" इति वाक्योच्चारणे लज्जावशादिति बोद्धव्यम्। हन्त हर्षे। प्रतिगृहीता स्वीकृता, मया इयमिति शेषः। प्राचीनास्तु "प्रतिगृहीता" इत्यत्र "प्रतिगृहीतम्" इति पाठं स्वीकृत्य "प्रतिगृहीतं त्वद्दानात् प्रागेव स्वीकृतम् इत्यर्थ." इति व्याचख्युः।

(स) अनुकूलता उदारता, राजानं प्रतीति शेषः; भर्त्तुः सन्तोषविधानार्थं प्रसन्नचेतसा स्वत एव स्वस्य सपत्नीसङ्घटनादिति भावः। क्वचित् "धारिण्याः" इति पाठो नास्ति।

(ह) "मालविकामभिनन्दय" इति नेत्रसङ्केतेन आदेष्टुं देव्याः परिजनावलोकनम्।

(क) निर्वर्णयति आलोकयति, "निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः। "निर्वर्णयति" इत्यत्र "निरीक्षते" इति पाठान्तरम्। "अन्यया कयाऽपि रमण्या स्वयमेव स्वस्याः सपत्नीसङ्घटनरूपमाश्चर्य्य-

परि। देवि ! नैतच्चित्रं त्वयि—(ख)

प्रतिपक्षेणापि पतिं सेवन्ते भर्त्तृसेवना नार्यः ।
अन्यसरितामपि रसं समुद्रगाः प्रापयन्त्युदधिम् ॥ १९ ॥

---

आचरितं किम् ?" इति विज्ञापयितुम् आत्मश्लाघासूचिकया नयन-भङ्ग्या परिव्राजिकाऽवलोकनमिति मन्तव्यम् ।

(ख) नयनभङ्ग्या एव देव्या अभिप्रायमनुमाय परिव्राजिका उचित-मुत्तरं ददाति, देवि ! इति ।—एतत् स्वयमेव स्वस्याः सपत्नीसङ्घटनं, त्वयि न चित्रं न विस्मयावहम् ।

चित्रत्वाभावे कारणं प्रदर्शयति, प्रतीति ।—भर्त्तृसेवनाः पतिशुश्रूषा-परायणाः, भर्त्तुः सन्तोषसाधनैकव्रता इति भावः, नार्य्यः स्त्रियः, पति-व्रतारमण्य इति यावत्, "भर्त्तृसेवना नार्य्यः" इत्यत्र "भर्त्तृवत्सलास्तन्व्यः" "भर्त्तृवत्सलाः साध्व्यः" इति पाठान्तरद्वयम् ; तत्र भर्त्तृवत्सलाः पत्यौ स्नेहपरायणाः, तन्व्यः युवतयः इत्यर्थः ; प्रतिपक्षेणापि विपक्षेणापि, सदा द्वेष्यया सपत्न्या सह मिलित्वाऽपीत्यर्थः, पतिं भर्त्तारं, सेवन्ते शुश्रूषन्ते । तथा हि, समुद्रगाः सागराभिमुखगामिन्यः नद्यः, गङ्गाद्या नद्य इत्यर्थः, अन्यसरितामपि अन्यासां नदीनामपि, यमुनादीनामपीत्यर्थः, रसं जलं, "रसो गन्धरसे जले" इति मेदिनी ; "रसम्" इत्यत्र "जलम्" इति पाठान्तरम् ; उदधिं समुद्रं, प्रापयन्ति नयन्ति, साध्वीमुख्यायास्तव पति-सन्तोषसाधनस्यैव मुख्यलक्ष्यत्वात् आत्मसुखसम्पादने निस्पृहत्वाच्च स्वकीय-मनःपीडामगणयन्त्याः स्वयं स्वस्याः सपत्नीसङ्घटनं न विस्मयावहमिति निष्कर्षः । अत्र सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासालङ्कारः, किञ्च, समुद्रगायां साध्व्याः पत्न्याः उदधौ च भर्त्तृव्यवहारसमारोपात् समासोक्तिः, तथा "प्रतिपक्षेणापि पतिं सेवन्ते" इत्यत्र अपिशब्दात् स्वपक्षेण सेवने का कथा ? इत्यर्थस्य आपतनात् अर्थापत्तिश्च इत्येतेषां त्रयाणामङ्गाङ्गिभावेनावस्थानात् सङ्करः । आर्य्या जातिः ॥ १९ ॥

[ प्रविश्य निपुणिका ]।

निपु। जेदु जेदु भट्टा। इरावदी विसवेदि—"जं हि उवआरादिक्कमेण तदा अहं भट्टिणो अवरद्धा, णं सो अत्तणो भट्टा। अणुपदं भट्टिणो अणुरूवं ज्जेव्व मए आअरिअं, संपदं पुण्णमणोरहो भट्टा जाओ; अहं संपसादमेत्तेण संभाव-इदव्वेत्ति"। * (ग)

---

* जयति जयति भर्त्ता। इरावती विज्ञापयति—"यद्धि उपचारातिक्रमेण तदाऽहं भर्तुरपराद्धा, ननु स आत्मनो भर्त्ता। अनुपदं भर्त्तुरनुरूप-मेव मया आचरितम्। साम्प्रतं पूर्णमनोरथो भर्त्ता जातः। अहं सम्प्रसादमात्रेण सम्भावयितव्या इति" इति स०।

---

(ग) उपचारातिक्रमेण उपचारस्य मम कोपापनयनार्थं भर्त्तृकृत-पादपतनरूपदक्षिणनायकोचितव्यवहारस्य, अतिक्रमेण लङ्घनेन, प्रत्या-ख्यानेन इत्यर्थः, भर्त्तुरनुनयव्यवहारमगणयित्वा तस्मात् प्रस्थानेनेति यावत्, तदा प्रमदवने मालविकया सह साक्षात्कारकाले, भर्त्तुः समीपे अपराद्धा जातापराधा, अस्मीति शेषः, ननु भोः! स उपचारातिक्रम-जनितः अपराधः, आत्मनो भर्त्ता निजपतिः, इति विविच्यैव कृत इति शेषः, अयं मम भर्त्ता, अस्मै प्रणयकोपप्रकाशे मम अधिकारोऽस्ति इति विभाव्यैव अहं तदा अपराधिनी जाता, भर्त्तरि अन्यस्त्रियामासक्ते स्त्रीणां कोपस्य स्वाभाविकत्वादिति भावः। अनुपदं पश्चात्, भर्त्तुः अनुरूपं योग्यं, भर्त्तरि यादृगाचरणं कर्त्तव्यं तादृगाचरणमित्यर्थः, अनुरूपम् आशयानु-रूपमित्यर्थो वा, मालविकया सह सम्मेलने प्रतिबन्धकताऽनाचरणरूप-मानुकूल्यमिति भावः; सुतरां पूर्वापराधस्त्वया साम्प्रतं क्षन्तव्य इति हृदयम्। पूर्णमनोरथः मालविकालाभे सफलकामः। सम्प्रसादमात्रेण प्रसन्नतालाभमात्रेण, केवलं मां प्रति असन्तोषपरित्यागेन, न पुनरन्य-विधादरप्रदर्शनेन इति भावः, सम्भावयितव्या सम्मानयितव्या, अनुग्रही-तव्या इत्यर्थः, भवतीति शेषः। "जं ··संभावइदव्वा" इत्यत्र "जं उवआरादिक्कमेण तदा भट्टिणो अवरद्धा, तं सव्वं ज्जेव्व भत्तुणो अणुऊलं

धारि। णिउणिए! अवस्सं से सेविदं अज्जउत्तो जाणिस्सदि। (घ) *

निपु। अणुग्गिहीदम्हि। † [इति निष्क्रान्ता]।

परि। देव! असुना युक्तसम्बन्धेन चरितार्थं माधवसेनं सभाजयितुं गच्छामः। (ङ)

---

* निपुणिके! अवश्यम् अस्याः सेवितमार्य्यपुत्रो ज्ञास्यति इति स०।

† अनुगृहीताऽस्मि इति स०।

---

णाम आअरिदं। सपदं पुण्णमणोरहेण भत्तुणा पसादमेत्तेण सभावइदव्वा" इति पाठान्तरे—यत् उपचारातिक्रमेण तदा भर्त्तुरपराद्धा, तत् स्वयमेव भर्त्तुरनुकूलं नाम आचरितम्। साम्प्रतं पूर्णमनोरथेन भर्त्रा प्रसादमात्रेण सम्भावयितव्या" इति स०।

(घ) अस्याः इरावत्याः, सेवितं सेवां, परिचर्य्यामित्यर्थः। ज्ञास्यति विवेचयिष्यति, तव सेवानुरूपं फलमवश्यमेव आर्य्यपुत्रो दास्यतीत्यर्थः। "से" इत्यत्र "दे" इति पाठे—ते इति स०। इरावत्यै कथयितुमुक्तमिदम्।

(ङ) असुना अनेन, अभिनवसङ्घटितेन, युक्तसम्बन्धेन अनुरूपसम्पर्केण, मालविकया सह भवतः परिणयरूपश्लाघ्यसम्बन्धघटनेनेत्यर्थः, चरितार्थं कृतार्थं, पूर्णमनोरथमित्यर्थः। सभाजयितुम् आनन्दयितुम्, अनत्य-वार्त्ताविज्ञापन-कुशलप्रश्नादिना आनन्दितं कारयितुमित्यर्थः, "अथ द्वे आनन्दनसभाजने। आप्रच्छनम्" इत्यमरः; गच्छामः गन्तुमिच्छामः, अत युवयोरनुमतिं प्रार्थयामीति भावः। "असुना · गच्छामः" इत्यत्र "असुक्तावत्सम्बन्धेन चरितार्थं माधवसेनं त्वदाज्ञया दृष्ट्वा नयनसाफल्यं कर्त्तुमिच्छामि" इति पाठान्तरे—असुक्तात्वत्सम्बन्धेन न मुक्तः न वियुक्तः, सङ्घटित इत्यर्थः, त्वया सह सम्बन्धः सम्पर्कः, भगिन्या सह परिणयादिति भावः, तेन हेतुना, चरितार्थं सफलमनोरथं, ईप्सितवैवाहिकसम्बन्धस्य साफल्यात् सौभाग्यशालिनमित्यर्थः। त्वदाज्ञया भवदनुमत्या, भवदनुमतिं गृहीत्वा माधवसेनसमीपं गन्तुमिच्छामीति सरलार्थः।

धारि। ण जुत्तं भअवदि। अम्हाणं परिच्चत्तुं। * (च)

राजा। भगवति! मदीयेष्वेव लेखेषु तत्रभवतस्त्वा-मुद्दिश्य सभाजनानि ज्ञापयिष्यामः। (छ)

परि। युवयोः स्नेहात् परवानयं जनः। (ज)

धारि। आणवेदु अज्जउत्तो, भूओवि दे किं पिअं उवअरिस्सं। † (झ)

---

* न युक्तं भगवति! अस्मान् परित्यक्तुम् इति सं०।

† आज्ञापयत्वार्य्यपुत्रः, भूयोऽपि ते किं प्रियमुपकरिष्यामि इति सं०।

---

(च) न युक्तं न उचितम्। त्वां परित्यक्तुमस्माकमिच्छा नास्तीति भावः। "ण ··परिच्चत्तुं", इत्यत्र "भअवदीए ण जुत्तं अम्हे परिच्चत्तुं" इति-पाठे—भगवत्या न युक्तमस्मान् परित्यक्तुम् इति सं०।

(छ) मदीयेष्वेव मया लेखितेषु एव, न तु त्वया स्वतन्त्रतया लेखितेषु इत्येव-शब्दार्थः, लेखेषु लिपिषु। तत्रभवतः माननीयस्य माधवसेनस्य सम्बन्धे, त्वामुद्दिश्य त्वमेव सभाजनं ज्ञापयसि इति उल्लिख्य इत्यर्थः, सभाजनानि अभिनन्दनानि, तस्य विपन्मुक्तया अभ्युदयेन च तव आनन्दान् इत्यर्थः, ज्ञापयिष्यामः निवेदयिष्यामः, लेखयिष्यामः इति यावत्, एतेनैव तव अभिप्रायसिद्धेः तत्र गमनायासस्वीकरणं निष्प्रयोजनमिति भावः। "सभाजनानि ज्ञापयिष्यामः" इत्यत्र "सभाजनाक्षराणि पातयिष्यामः" इति पाठान्तरम्।

(ज) परवान् पराधीनः, युवयोरेव एकान्ताधीन इत्यर्थः। अयं मल्लक्षणो जनः, अहमित्यर्थः, युवयोः स्नेहवशीभूतोऽहं युवां परित्यज्य गन्तुं न शक्नोमि, ततश्च अत्रैव तिष्ठामीति भावः।

(झ) भूयोऽपि पुनरपि, मालविकादानातिरिक्तम् अन्यदिपमपी-त्यर्थः। उपकरिष्यामि विधास्यामीत्यर्थः। "उवअरिस्सं" इत्यत्र "उअ-हरिस्सं" "उवहरामि" इति पाठान्तरद्वयम्; उपहरिष्यामि,

राजा। मम तावदेतावदेव प्रियम्—(ञ)

[भरतवाक्यम्]। (ट)—

त्वं मे प्रसादसुमुखी भव देवि! नित्य-

मेतावदेव मृगये प्रतिपक्षहेतोः।

---

उपहरामि इति च तयोः स०। एतेन काव्यसंहाराख्यं निर्वहणाङ्गं प्रदर्शितं, तथा च दर्पणे—"वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यते" इति।

(ञ) एतावदेव वक्ष्यमाणभरतवाक्यमेवेत्यर्थः।

(ट) "तथाऽप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये" इत्युक्तेः नाटकाभिनयारम्भे यथा नान्दी अवश्यकर्त्तव्या, तथा अभिनयान्तेऽपि प्रशस्तिपाठस्य अवश्यकर्त्तव्यत्वात्, प्रस्तावनाऽनन्तरञ्च नटस्योक्तेरन्याय्यत्वेन नटपदं विहाय नाट्यशास्त्रोपदेशकस्य भरतमुनेः नाम्ना इयं प्रशस्तिः पठ्यते कविना, वस्तुतस्तु नटेनैव वक्ष्यमाणः श्लोकः पठितव्यः, "भरता इत्यपि नटाः" इत्यमरोक्तेः। क्वचित् पाठोऽयं नास्ति।

अभिनयान्ते भरतवाक्यस्य अवश्यपाठ्यत्वात् भरतमुखेन राजा स्वप्रियं विज्ञापयति, त्वमिति।—देवि! हे धारिणि! "देवि!" इत्यत्र "चण्डि!" इति पाठे—चण्डि! अत्यन्तकोपने! इत्यर्थः; पाठोऽयन्तु न समीचीनः, देव्या धारिण्याः कुत्रापि कोपादर्शनात्; त्वं मे मम सम्बन्धे, मां प्रतीत्यर्थः, नित्यं सर्वदा, प्रसादसुमुखी प्रसादेन प्रसन्नतया, प्रीतिपूर्णान्तःकरणतया इत्यर्थः, मया भ्रान्तिवशात् कदाचित् कोपकारणे अनुष्ठितेऽपि अकुपिततयेति भावः, सु सुन्दरं, प्रसन्नमित्यर्थः, मुखं यस्यास्तादृशी, भव, मयि सर्वदा प्रसन्ना एव अवतिष्ठस्व, न तु इरावतीव क्रोधविकृतमुखी भवेति भावः; प्रतिपक्षहेतोः विपक्षहेतोः, प्रसादविरुद्धाप्रसादभयादित्यर्थः, कदाचित् तव कोपजनितमनःपीड़ाप्राप्तिभयादिति भावः, यद्वा—प्रतिपक्षहेतोः त्वद्विपक्षस्य सपत्नीजनस्य हेतोः निमित्तात्, सपत्नीजनसद्भावादित्यर्थः, कदाचित्ते त्वां मह्यं कोपयितुं प्ररोचयेयुरिति भयादिति भावः, एतावदेव एतन्मात्रमेव, प्रसादसुमुखत्वमेवेत्यर्थः, मृगये याचे। "मृगये प्रतिपक्षहेतो." इत्यत्र "हृदये प्रतिपालनीयम्" इति पाठान्तरम्। क्वचिदेतच्छ्लोकार्द्धानन्तरं "भरतवाक्यम्" इति पाठो दृश्यते। ननु भवान् केवलं स्वार्थमेव प्रार्थयते,

आशास्यमीतिविगमप्रभृति प्रजानां
सम्पत्स्यते न खलु गोप्तरि नाग्निमित्रे ॥ २० ॥

[इति निष्क्रान्ताः सर्वे]।

इति पञ्चमोऽङ्कः।

इति श्रीमहाकवि-कालिदासप्रणीत मालविकाऽग्निमित्रं नाम नाटक समाप्तम्।

प्रजापालकस्य भवतः प्रजाहितसाधनं किमपि प्रार्थयितुमुचितमिति चेदाह, आशास्यमिति।—अग्निमित्रे तदाख्ये विदिशाधिपे मयि, गोप्तरि रचितरि विद्यमाने, प्रजानां जनानां, "प्रजा स्यात् सन्ततौ जने" इत्यमरः; आशास्यं वाञ्छनीयम्, ईतिविगमप्रभृति ईतयः "अतिवृष्टिरनावृष्टिः शलभाः मूषिकाः खगाः। अत्यासन्नाश्च राजानः षड़ेता ईतयः स्मृताः॥" इत्युक्तस्वरूपाः, तासां विगमप्रभृति नाशादिकम्, अतिवृष्टिप्रभृतीनां प्रतीकारादिकमित्यर्थः, "ईतिविगमप्रभृति" इत्यत्र "अभ्यविगमात् प्रभृति" इति पाठान्तरम्; न खलु सम्पत्स्यते न सेत्स्यति इति न, अपितु सम्पत्स्यते एव, प्रजारक्षकः अग्निमित्रः अप्रार्थितो-ऽपि स्वयमेव प्रजानां हितं विदधातीति तदर्थं प्रार्थना अनावश्यकीति भावः। ये तु एतदुत्तरार्द्धमेव भरतवाक्यतया मन्यन्ते, तन्मते "सर्वनाटकप्रयोगान्ते भरतेन सर्वकालसाधारणे आशीर्वचने कर्त्तव्ये सति अत्र प्रजानामाशास्यसिद्धिं प्रति गोप्तुरग्निमित्रस्य कथनं तत्कालराजोपलक्षणमिति मन्तव्यम्" इति। एवञ्चात्र अग्निमित्रे तात्कालिके कस्मिंश्चित् राजविशेषे गोप्तरि रक्षितरि इत्यर्थो बोद्धव्यः, न तु अग्निमित्रे विदिशाधिपे मयि इत्यर्थः। "सम्पत्स्यते" इत्यत्र "सम्पद्यते" इति पाठान्तरम्। एतेन प्रशस्तिर्नाम निर्वहणाङ्गविशेषाङ्गं प्रदर्शितं, "नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते" इति साहित्यदर्पणात्। श्लोकेऽस्मिन् प्रजानामाशास्यसम्पादनं प्रति अग्निमित्रगोप्तृत्वस्य हेतुत्वेनो-ल्लेखात् काव्यलिङ्गमलङ्कारः। वसन्ततिलकं वृत्तम्।

केचित्तु श्लोकमिमं धारिणीं प्रति राज्ञ उक्तत्वेन, दुर्गां प्रति भरतानां प्रार्थनारूपमङ्गलाचरणत्वेन च प्रकल्प्य व्याचक्षते, तत्र दुर्गापक्षे —हे देवि! दुर्गे! त्वं मे नित्यप्रसादसुमुखी भव मां प्रति सर्वदा सन्तोषेण

प्रफुल्लानना भव। प्रतिपक्षहेतोः शत्रुनिवारणहेतोः, अथवा पापमेव सर्वसाधारणप्रतिपक्षः तद्विनाशहेतोः, एतावदेव मृगये प्रार्थये। अथ कथं लौकिकमभ्युदयं न प्रार्थयसे ? इत्याह, आशास्यमिति। अभ्यधिगमात् प्रभृति राज्यलाभादवधि, अग्निमित्रं यथाविधि यागविधानादिभिर्मित्रवदुपकारको यस्य तस्मिन्, यदाऽस्यामिनय आसीत् तदानीन्तनं कञ्चिदग्निहोत्रिणं धर्मशालिनं राजानं लक्ष्यीकृत्य अग्निमित्र इत्युक्तम्, "अग्निमित्रस्य कथनं तत्कालराजोपलक्षणमिति मन्तव्यम्" इति काटयवेमोऽप्याह स्म ; गोप्तरि रक्षितरि सति प्रजानामस्मादृशीनां जनानाम् आशास्यं वाञ्छनीयं जलाशयरथ्यानिर्माणादिकं साधारणहितं न खलु सम्पद्यते इति न, अपितु सम्पद्यते एव। अस्माकमसौ परमधार्मिको राजा स्वयमेव तादृशं साधारणमभ्युदयं विदधातीति त्वदन्तिके तत्प्रार्थनाया न तावत्यावश्यकतेति भावः" इति ॥ २० ॥

क्व कालिदासवचनं भावगम्भीरमद्भुतम्।
क्व मे मन्दा मतिस्तस्य व्याख्याने सा क्षमा कुतः ॥
गुरुं चित्ते निधायैव किञ्चिदुक्तं मयाऽत्र यत्।
सदोषमपि तद्भूष्यं विद्वद्भिः सत्स्वभावतः ॥ ओं तत् सत्।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यकृतां विषमपदव्याख्यामवलम्ब्य तत्पौत्राभ्यां श्रीआशुबोध-विद्याभूषण-श्रीनित्यबोध-विद्यारत्नाभ्यां विरचिता मालविकाऽग्निमित्रस्य विशदविवृतिः।

